Digitized by Madhuban Trust, Delhi

# सामवेदसंहिता

तत्र

## छन्दआर्चिकः

## तत्रापि आग्नेयैन्द्रेति पर्वद्वयात्मकः

### अध्यायचतुष्कः प्रथमोभागः

भगवत्सायणाचार्य्य-विरचित-भाष्य-सहितः

अधीतवेद-"प्रत्नकम्रनन्दिनी"-सम्पादकेन

**श्रीसत्यव्रतसामश्रमिभट्टाचार्य्येण**

वङ्गसामगेन

टीकितो यथावसरं शोधितश्च।



मुन्शीराम मनोहरलाल

पब्लिशर्स प्रा.लि.



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

SĀMAVEDA SAṀHITĀ
with the commentary of Sāyaṇa Āchārya

*Edited by*
Satyavrata Sāmaśramī Bhattacharyya

VOLUME II



Price : Rs 3500 for 5 volumes

Originally Published in Bibliotheca Indica, Calcutta, 1871-78.
New Series nos. 301, 321, 322, 323, 324 and 334.

Reprinted 1983

Printed and published by Munshiram Manoharlal Publishers Pvt. Ltd.,
Post Box 5715, 54 Rani Jhansi Road, New Delhi-110055.



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## ॥ आर्चिकस्य परिच्छेद-सूची ॥





## ॥ गेयगानस्य परिच्छेद-सूची ॥







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## ॥ छन्दआर्चिक-परिशिष्टभूतस्य आरण्यगानस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-परिशिष्ट-परिशिष्टरूपस्य स्तोभस्य परिच्छेद-सूची ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## ॥ अथ छन्दआर्चिक-द्वितीय-परिशिष्टस्य परिच्छेद-सूची ॥



## ॥ अथ छन्दआर्चिक-तृतीय-परिशिष्टस्य-परिच्छेद-सूची ॥



## ॥ अथ सायणभाष्यस्य परिच्छेद-सूची ॥



## ॥ छन्दआर्चिकस्य छन्दः-सूची ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





---

## ॥ छन्दआर्चिकस्य देवता-सूची ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





## ॥ छन्दआर्चिकस्य ऋषि-सूची ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





## ॥ मन्त्राणामकारादिक्रमेण सूची ॥





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

## [ अ ]





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिच्छेदः | पृष्ठ





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिच्छेदः पृष्ठं





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिच्छेदः पृष्ठं





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi







CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



परिच्छेदः





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi





---



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

[ ८०पृ०—८पं०* ]

## ॥ क्रोड़पत्रम् ॥

( अशीति-पृष्ठस्येऽष्टमेपङ्क्तौ निवेश्यम् )

चतुर्थाधिकरणमारचयति—[५४] "स्युरेकादशिना किं प्रायणीयोदयनीययोः। प्रत्येकमखिलाः किं वा विभज्याः स्युस्तयोरपि ॥ उद्देश्ययोः प्रधानत्वात् प्रत्येकं पशवोऽखिलाः। नोद्देश्यौ शतवद्भागः शिष्टस्त्वासत्तितोऽन्तिमे ॥ द्वादशाहे श्रूयते— "एकादशिना प्रायणीयोदयनीययोरतिरात्रसंस्थयोरतिरात्रयोरालभेरन्निति" तत्रैते पशव एकादशापि प्रायणीयेऽहनि कर्त्तव्याः तथोदयनीयेऽपि सर्वे कर्त्तव्याः। कुतः? प्रायणीयोदयनीययोरुद्देश्यत्वेन प्राधान्यात्—प्रतिप्रधानं चाङ्गावृत्तेर्युक्तत्वादिति पूर्व्वपक्षः। वचनान्तरेण विहितानामेकादशानां प्रकरणेन द्वादशाहाङ्गत्वे सिद्धदेशाकाङ्क्षायां तान् पशूनुद्दिश्य प्रायणीयोदयनीयौ देशत्वेन विधीयेते। तत्र कुत उद्देश्यत्वम्? कुतस्तरां प्राधान्यम्? कुतस्तमां पश्वावृत्तिः? एवं सति यथा—'शतं देवदत्तयज्ञदत्तयोर्व्विधीयताम्'-इत्यत्र देवदत्ते पञ्चाशद्विधीयते यज्ञदत्ते पञ्चाशदिति विभागस्तथा प्रायणीये पञ्च पशव उदनीये पञ्चेति विभागो युक्तः। पञ्चवशिष्ट एकः पशुरन्तिमः स प्रत्यासन्नत्वा दन्तिमेऽहन्युदवसानीये कर्त्तव्यः"[५४]-इति ॥

---

* मद्रास्यादिते क्वचिदपि पुस्तके नैतदधिकरणोद्धरणमिह दृश्यते, तल्लेखक-पाण्डित्य-लेखात मूलमित्यनुमीयतेऽस्य सामविचारेऽप्रकृतत्वाच्च तथा पाण्डित्यम्; परमेतस्यैव भगवतीभाष्यकृत उपसंहृतिवचने (८५—१) द्विषष्टीति परिगणनश्रुतेरस्याप्यधिकरणस्य सामवेदीयशङ्कत्याचाप्युद्धृत्यत्र च इत्यवश्य स्वीकार्यमितीत्थं क्रोडीकृतम्। स०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

॥ नमः सामवेदाय ॥

# सामवेदसंहिता।



## अथ पञ्चमाध्यायः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्या-तीर्थ-महेश्वरम् ॥ १ ॥
तृतीयं पर्व सोमस्य पवमानस्य संस्तुतिः ।
उच्चातइति गायत्र्यश्चत्वारिंशच्चतुर्युताः* ॥ २ ॥

---

* गतमाग्नेयं पर्व, गतश्चैन्द्रम्; इदानीमिदं तृतीयं सम्प्रवर्त्तते। अत्र पर्वणि सोमस्य देवस्य संस्तुतिः श्रूयते, प्राधान्येनेति यावत्। अस्ति सोमः यज्ञार्थाभिषुतः ओषधि-विशेषः—

"सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिम् ।
सोमं यं ब्रह्माणो विदुर्न तस्याश्नाति तकश्चन ॥"
(ऋ० १०, ७, ६, ४)

-इति श्रुतेः. "सोमं मन्यते पपिवान् यत् सम्पिंषन्त्योषधिमिति, इयासुतमसोम-माह—सोमं यं ब्रह्माणं विदुरिति, न तस्याश्नाति कश्चनायज्वेत्यधियज्ञम्"—इति च यास्ककृत-तद्व्याख्यानात्। स एव सोमः पवमान इत्युच्यते पूयमान इति च तदर्थः। अस्ति च सोमश्चन्द्रमावाचकः, "सोमो रूपविशेषैरोषधिश्चन्द्रमावा"—इत्यादि यास्कोक्तेः (दै० ५, ५)। तदत्र कतरस्य ग्रहणमित्याशङ्कां वारयितुं पवमानस्येति विशेषणम्। एतेन चन्द्रमसो व्यावृत्तिः। एवञ्चेह पर्वणि यावन्त ऋचः श्रूयन्ते विशेषोल्लेखाभावे

१ ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्र प्रथमे खण्डे—

सैषा प्रथमा।

३ १ २ ३ १ २र ३ १ २र
उच्चातेजातमन्धसोदिविसद्भूम्याददे*।

१ २उ ३ १ ३ १ २
उग्रꣳशर्ममहिश्रवः॥ १॥ १†

५ ४ २र २र १ ७
ओम्॥ (आजिगम्॥) उच्चा। तेजा३तामन्धासा २ः।

१ र र २ १ २ १ २
दिविसद्भूम्याददाइ। उग्रꣳआ२३र्मा ३। मा२हा२३४।

५र र १ २ ५
औहोवा। उप्।. आ२३४वाः॥ १॥

२ १र ५ २ १ ५
(आभीकम्॥) उच्चाति२३४जा। तमन्धा२३४साः।

---

सर्वासामेवासां पवमानः सोमो देवतेत्यं बोधितव्येदं—पावमानं पर्वेति। "उच्चाते"-इति पञ्चम-द्वितीय-चतुर्थस्य प्रथमा ऋक्, इयमेवास्य पर्वणोपि प्रथमा; एतदादि-षष्ठ-प्रथम-द्वितीयान्तिमान्ताः दशचतुष्टयात्मिकाः चतुर्युताश्चत्वारिंशदृचः गायत्र्यः गायत्रीच्छन्दस्काः।

* "दिविषद्भू"-इति पाठ०।

† छ०१,१,८,१ = ऋ०७,१,१९,५=आर०१,२,२२;— २,१,१९—३,१,११= ऊ०१,१,१;—२,१,१२;—६,१,९—१०;—७,१,१२;—८,१,११;—१०,१,१०—११;—११,१,१४;—१२,१,१—२;—१२,२,७;—१३,१,१७;—१५,१,३-४-५;—१९,१,११;—२०,१,६-७-८—९;—२०,१,१४=ऊह्य १,२,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १　　५　२ १र　　२१　　२　१　२
हिवाइसा२३४ङ्का । मियाददाइ । उग्र७शा२३र्मा । मह्वाये

१　३　५र र　　३ १ १ १ १
३ । आ२वा३४ औहोवा । वा२३४५इ ॥ २ ॥

५र र　र र　२　२
( ऋषभपावमानम् ॥ ) ह्वाहाउच्चातेजा । ह्वाइ । ह्वा-

१　२　५　२ १ र　२　२　२
३इ । तामा२न्धा२३४सा: । दिविसङ्भ्मिया१दा३२दे । उग्र७

३　५　१ २　४　५　४　५
शा२३४र्मा । ओमो३ । मह्वोवा । आपूवोईह्वाइ ॥ ३ ॥

१　र र　र ४　५
( आभीकम् ॥ ) ऊ२३४च्चातेजा५ । तमौहोन्धासा: ।

२ १ र२ २ २ २　२　५　१ ऽ　२
दिविसङ्भ्मिया१दा३२दे । उग्र७शा२३४र्मा । माह्वा३उवा

२　५
३४३ । आ२३४५वोईह्वाइ ॥४॥

५ र र　२१　१र ऽ
(वाभ्रवे द्वे ॥ ) उच्चातेजा । तम । धासा२३: । ओमो३-

२　१ २र　१ २　१र ऽ　२　१
वा । दिविसङ्भ्म । मियादा१दे२३ । ओमो३वा । उग्रा७

२　१र ऽ　२　१　३　५र र　२
शा१र्मा २३ । ओमो३वा३ । मा२ह्वा२३४औहोवा । अवा३-

१ १ १ १ १
ई २३४५ ॥ ५ ॥

५ र र　२ १　२　१　२र　१र
उच्चातेजा । तमन्धा२३सा: । दिविसङ्भ्म । मिया-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ २ २ ३ १ १ २
दा२३दाइ। ऊग्रा२३९हाइ। शार्मा३हाइ। मद्दा ३ होये-

१ २ ५र र २ ५
३। आ२ वा २ ३ ४ औहोवा। म्वा २ ३ ४ औ॥६॥

५ ४र ५र र ४ १
(इन्द्राण्याः साम॥) उच्चातिजातमा। धासा२३ः।

१र ऽ २ १ २र १ २ १र ऽ २
ओमो३वा। दिविसङ्कू। मियादा१दे२३। ओमो३वा।

१ २ १र ऽ २ १ २ १ २
उग्रा३९ शा१र्मा२३। ओमो३वा। मद्दाये३। आ२वा२

५र र २ ५
३४औहोवा। ऊ२२३४पा॥७॥

५ र र र ४ ५ २ १ र
(शैशवे द्वे॥) उच्चातिजातमन्धासाः। दिविसङ्कू म्याद-

२ १ ५ ३ २ ४
दाइ। उग्र९शा२३४र्मा। मद्दा३इआ५वाई५ईः॥८॥

५ र र र ५ २ १र र २
उच्चातिजातमन्धाईसाः। दिविसङ्क। म्यादा२३दाइ।

१ २ १ ऽ २
उ। ग्र९शा२३र्मा। मद्दा२। हा२इ। औ३हो३१इ।

ऽ २ ३ २ १ ३
अवा२ः। हा२इ। औ३हो३१इ। इया३होइ। इयो२३

२ १ १ १ १
४५वाई५६। ऊ२३४५॥९॥

३ २ ३र ४र ५ १ ३ २
(दोहसाम॥) उच्चा३४औहोवा। तेजा२। तमा३४५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ ५ २ १ र र २र १ ७ २ ३
धार२३४सा:। दिविसद्भूम्याददे। ऊग्र्ंशार२३र्मा। महि

२ १ २ ४ ५ ४
श्रवो। औ३होवा। हो५इ। डा॥ १०॥

५ र र·र र र र र ५
(दोहीयसाम॥) उच्चातेजातमन्धसोदोहाइदोहाईए।

२ १ र र २र ऽ २ ७ २ २ १
दिविसद्भूम्याददे। दो३हाइ। दो२हा३ए। उग्रंशार२३

१ ऽ २ ऽ १ २ १ २ १
र्मा। दो३हाइ। दो३हा३ए। महिश्रा२३वा३४३:। ओर

३४५इ। डा॥ ११॥

१ २र १र ४र ५ २ १
(इन्द्राण्या: साम।) उच्चातेजातमन्धसा:। दिवाइ

५ २ १ २र १र ऽ २ ऽ २
सार२३४द्भू। मिया२ददे। ओम्। ओ३वा। ओ३वा।

१ २ १ १ ऽ २ ऽ १
ववार३होइ। उग्र्ंशार२३र्मा। ओ३वा। ओ३वा।

१ १ २ १ २ १ ऽ ३ ५र र २
ववार३होइ। महिश्रवोर। या २ ३ ४ औहोवा। ययु

३ १ १ १ १
रे२३४५॥ १२॥

५र २ ४र ५
(आमहीयवम्॥) उच्चाता३इजातमन्धसा:। दिवा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ २ १ २ १
इ्ता२द्भू१। मिया२३इहाइ। उग्र७ शर्मा। मद्दा-
२ २र ११ १
२३इ। अवाउ। वा२। स्तौषि३४५॥ १३ ॥ १

अमहीयुर्ऋषिः*। हे "सोम!"† "ते" तव सम्बन्धिनः "अन्धसः" रसस्य‡ "उच्चा" उपरि¶ "जातम्" जन्म।

---

* "आङ्गिरसः" इति ऋषि-नैगेयः।

† "सोमः" निघण्टौ दैवतकाण्डेऽन्तरिक्ष—विभागीयस्तुतिं प्रथमो देवः, वायु-साहचर्याच भज्यते, यथा च राजधानीस्तवनेन भवति राज्ञः स्तुतिः, भवति च मासस्तवनेन वर्षस्य स्तुति; तथैवास्य स्तवनेन वायोरेव स्तुतिः। तथाहि—

"यत्त्वादेवप्रपिबन्तितदाप्यायसेपुनः।
वायुःसोमस्यरक्षितासमानांमासआकृतिः॥"
(ऋ० १०, ७, १, ५)

"यत् त्वा देव! प्रपिबन्ति तत् आप्यायसे पुनरिति नाराशंसानभिप्रेत्य पूर्वपक्षापरपक्षाविति वा। वायुः सोमस्य रक्षिता वायुमस्य रक्षितारमाह साहचर्याद्रसहरणाद्वा। समानां संवत्सराणां मासआकृतिः"-इत्यादि यास्ककृतं तद्व्याख्यानम्। अतएव "तिस्र एव देवताः (नि० दै० १, ५)"-इत्याद्युक्तिरदोषा। स च ओषधि-विशेषः, तथाहि "ओषधिः सोमः (सुनोतेर्यदेनमभिषुण्वन्ति) बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन"-इत्यादि नि० ११, २-३-४-५। स च दुग्धाभ-रस-विशिष्ट-वल्लीभ्यः चरित-पदार्थः सुतरां दुग्धाभरसरूपः, तथाच श्रूयते—"सोमो दुग्धाभिरक्षाः" (ऋ०३,२,५, ५ द्वितीयः पादः) "सोमो दुग्धाभ्यः चरति"-इति च तद्भाष्यम् (५, ३)।

‡ "अन्धइत्यन्ननामाध्यानीयं भवति। * * *। तमोऽप्यन्धउच्यते नास्मिन् ध्यानं भवति न दर्शनमन्धन्तमइत्यभिभाषन्ते। अयमपीतरोऽन्ध एतस्मादेव।"-इत्यादि नि० ५, १।

¶ अस्ति हि उच्चैरर्थे उच्चेति, तस्यैव "निपातस्य (६, ३, १३६)-इति दीर्घे रूपमुच्चा-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

२　२　१　१२　२११　　३१२
स्वादिष्ठयामदिष्ठयापवस्वसोमधारया ।
१२　३१२　३२
इन्द्रायपातवेसुतः ॥ २ ॥ २ *

　　　　　१र　　　२　१　　२　　१२ र
(आजिगम ॥) स्वादाइष्ठाया । मदाइष्ठाया । पवस्वसो ।
१२　　　२　　१　　२　१　　२　　१
माधा१रा२३या । इन्द्रायापा । तवाइसू२३ता३४३ः । ओ
२३४५इ । डा ॥ १४ ॥

अपिच । "दिवि" द्युलोके "सत्" विद्यमानम् "उग्रम्" उद्गूर्णम्† "शर्म" सुखं‡ "महि" महत्¶ "श्रवः" अन्नं§ "भूम्यादरे" [इत्यत्र यमामनन्ति । विसर्जनीयलोपः सांहितिकः] भूमिः भौमजन्यः अस्मादृशः; भूमिष्ठैरादीयतइत्यर्थः ॥ १ ॥ १

---

* उ० १,१,१५,१ = ऋ० ७,७,१६,१ = आर १,२,३ ;—३,१,७ = ज० १,१,८ ; —८,२,१० ;—१०,२,१० ;—११,२,७ ; —१२,२,४ ; —१३,१,९ ;—१८,१,१५—१६ ;—१९,२,१८ ,—२०,२,२० ;—२१,१,२० = ऊह्य ३,१,२ ;—४,१,१२ ;—४,२,१८ ।

† 'उग्रम् बलवत्'-इति वि० ।

‡ 'शर्म शरणम्'-इति वि० । शर्मेति गृह-नामसु चैकविंशतितमं पदम् नै० ३, ४ ।

¶ महत्, महः, महिः-इति पाठभेदेन पठ्यते नै० ३, ४, १ ।

§ "श्रवः"-इति अन्ननामसु चतुर्थं पदम् ( नि० २, ७ ) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(सुरूपम्॥) स्वादिष्ठया२इया२इया। मदिष्ठा
या२। पवस्वसो२। इया२इया। मधाराया२। इन्द्राया
पा२। इया२इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १५॥

(सुरूपोत्तरम्॥) स्वादिष्ठयौहो२। इया। मदिष्ठा
या२। पवस्वसौहो२। इया। मधाराया२। इन्द्राय
पौहो२। इया। तवाइसू२३ता३४३ः। ओ२३४५इ।
डा॥ १६॥

(जमदग्नेः शिल्पे द्वे॥) ओइस्वा२३४दी। ष्ठया३मादिष्ठ-
या। ओ२३४वा। पवस्वसोमधारया३। ओइ२३४न्द्रा।
या२पा२३४औहोवा। तवेसुता॒ऽ१ः॥ १७॥

उहुवाइ। स्वा२३४दी। ष्ठया३मादिष्ठया। ओ
२३४वा। पवस्वसोमधारया३। उहुवाइ। इन्द्रापूयपा।
ता२वा२३४औहोवा। सू२३४ताः॥ १८॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ २ १ २
(सꣳहितम् ॥) स्वादाइष्ठया । मदिष्ठया३ । पावा
४ ५ २र १ २ ४ ५ ५ ४
३स्वासो । मधारया३ । आइन्द्रा३यापाई । हाउ । त-
वा५इसुताउ । वा ॥ १९ ॥

४र ५ र ४ ५ र ४ ५ र ४र र ४
(प्रकुलः ॥) स्वादिष्ठयामदिष्ठयापवस्वसोमधारयाइ ।
४ २ १ ३ २
द्रा५यपा । तवा२इ । म२ । तवा२इ । ऊ२ । तवा३४
५र र ३ ५
औहोवा । सू२३४ताः ॥ २० ॥

५र र र र ४ ५ २ २
(गम्भीरम् ॥) औहोह्मम् हाणहिया । हा३हाइ ।
१र २ २ ५ २ ३ ५ ५र र र
स्वादाइष्ठाया । मो२३४दी । उ३ मा२३३दी । औहोह्मम्-
र ४ ५ २ २ २ २ ३ ५
हाणहिया । हा३हाइ । ष्ठयापाव । स्वा२३४सो । औ
३ ५ र र र र ४ ५ २ २ १
स्वा२३४सो । औहोह्मम् हाणहिया । हा३हाइ । मधा
२ ३ ५ २ ३ ५ र र र र ४ ५
रया । ई२३४न्द्रा । आई२३४न्द्रा । औहोह्मम् हाणहिया ।
२ २ १ २ ३ ५ २ ३ ५
हा३हाइ । यपातवाइ । सू२३४ताः । औइसू२३४ताः ।
र र र र ४ ५ २ २ ५र र ३ १
औहोह्मम् हाणहिया । हा३हा३४ । औहोवा । ई२
१ १ १
३४५ ॥ २१ ॥

२ ख;



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१२ २१२ ३१२ ३२
वृषापवस्वधारयामरुत्वतेचमत्सरः ।

३ १२ ३१ २
विश्वादधानओजसा ॥ ३ ॥ ३ *

(सᳪहितम् ॥) स्वादिष्ठयाम । दा५इष्ठया । पवा२ ।
स्वा२३से । मधा२राया । आ२३इन्द्रा । या२पा ।
तवा२३ । हाउवा३ । सू२३४ताः ॥ २२ ॥ २

(सोमसाम ॥) वृषापवा । स्वधारायाॅ२ । मरुत्वताइ ।
चमत्सा२३राः । वाइश्वा२३ । दा२धा२३४औहोवा । न-
ओजसा२३४५ ॥ २३ ॥

मधुच्छन्दाऋषिः† । हे "सोम!" "इन्द्राय" "पातवे"‡ पातु "सुतः" अभिषुतस्त्वं "स्वादिष्ठया" स्वादुतमया "मदिष्ठया"¶ अतिशयेन मादयित्र्या "धारया§" "पवस्व" क्षर ॥ २ ॥ २

---

* उ०१,१,१०,१ = ऋ०९,१,१,१ = ज०१,२,१९; —४.१,१—२—३;—४,२,१;—७,१,१—२;—११,२,१४—१५;—१८,१,१८—१९;—२०,१,१;—२२,२,९—१० ।

† "वैश्वामित्रः"-इति ऋषि-नैगेयः ।    ‡ तुमर्थे तवेङ् प्रत्ययः (३,४,९) ।

¶ "तुच्छन्दसि (५, ३, ५९)"-इतीष्ठन् ।    § द्रवरूपत्वात् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २ ५ १ ३ ५
(सोमसाम ॥) वृषाद्वाउ । पार२३४वा । स्वाधारा२३४या ।
२ ५ ३ ५ २ ३ ५ १ २र
मा२३४रु । त्वा२३४ताइ । चामत्सा२३४राः । वाइश्वाद
१ ३ ५र १ ३ ५
धा२३ । ना२ओ२३४औहोवा । जा२३४सा ॥ २४ ॥

४५र ४ ५ र ५ १ २
(आष्ट्रभार्गवम् ॥) वृषापव । स्वधारा६या । मारुत्वता
१ ३ ५ १ २ ३५
३इ । चामा२त्सा२३४राः । विश्वादा१धा२ । नओ३ ।
१ ५ ५
जा२३४सो६हाइ ॥ २५ ॥

४ ५ ४ २१ २ २ ऽ २
(वैश्वदेवम् ॥) आइवृषा । पवा । इहा । औ३हो ।
१र ५ २ १ २ २ १
स्वधारा२३४या । म । रु । त्वते३हाइ । च । मा ।
१ २ ५ र र र र २र
त्सरा२३हा३४इ । विश्वादधाहाउ । नओजसाहाउ ।
२ २ १र र ऽर १ १ १
वा ३ ४ ३ ओ ३ ४ ५ वा ६ ५ ६ । अस्मेराया२उतश्रवा २ ३
१ १
४ ५ः ॥ २६ ॥

५ र ३ २ ४ ५ २ १ ३ २
(वैश्वदेवम् ॥) वृषा । पवा३ । एहिया । स्वधार । रया३४
२र ४र ५ १ २ ३र ४र ५ १ र २ २ २
औहोवा । मारु३४ । औहोवा । त्वतेचमा१त्सा३राः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ २ २ १ २र १ २र
औ३हो३१ये३ । औहो२३४५वाई५६ । विश्वादधान
१र २ १ १ १ १
ओजसा२३४५ ॥ २७ ॥

१ १र २ १ १ १ १
( इन्द्रसाम ॥ ) वृषापावा२३ । हौहोइ । औ३हो२३४५ ।
२ १र २ १ १ १ १ १
स्वधाराया२३ । हौहोइ । औ३हो२३४५ । मरुत्वा-
१र २ १ १ १ १ १
ते२३ । हौहोइ । औ३हो२३४५ । चमात्सारा२३: ।
१र २ १ १ १ १ १ १र
हौहोइ । औ३हो२३४५ । विश्वादाधा२३ । हौहोइ ।
२ १ १ १ १ १ १र २
औ३हो२३४५ । नओजासा२३ । हौहोइ । औ३हो
१
२३४३ । ओ२३४५इ । डा ॥ २८ ॥

२ १ २ ३र र ५ २ १
( इन्द्रसाम ॥ ) वृषापावा । औहौहो२३४वा । स्वधा-
२ ३र र ५ २ १ २ ३र र
राया । औहौहो२३४वा । मरुत्वाता । औहौहो-
५ २ १ २ ३र र ५ २ १ २
२३४वा । चमात्सारा । औहौहो२३४वा । विश्वादाधा ।
३र र ५ २ १ २ ३र र ५
औहौहो २३४वा । नओजासा । औहौहो२३४वा ।
४
हो५इ । डा ॥ २९ ॥

५र ४ ५ ४ ५ २ १
( यौक्ताश्वम ॥ ) औहौहोहाइ । वृषा । पवस्वा३धा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रायाइ । माहूरत्वार२३४ताइ । आइ । चमार२इ । चमार२ त्सार२३४राः । औहोहोहाइ । विश्वा । दधार२ना२३४ओ । जोसार२३४औहोवा । ओइ । ज्वरश्रा ॥ ३० ॥

( यौक्तोत्तरम् ॥ ) वृषाऔहोहोहाइ । पवाइस्वाधा१रायाइ । माहूरत्वार२३४ताइ । चमाइइ । ओइ । चमार२त्सार२३४राः । विश्वाऔहोहोहाइ । दधार२ना-२३४ओ । जोऽ२सा२३४औहो।वा । ओइ । जू२३४-वा ॥ २१ ॥ ३

॥ इति ग्रामे गेये द्वादशः प्रपाठकः ॥

भृगुर्वारुणिऋषिः* । हे "सोम !" त्वं "वृषा" स्तोतृणामभिमतस्य वर्षकः† सन् "धारया" त्वदीयया "पवस्व" द्रोणकलशं‡ मागच्छ । [पवतिर्गतिकर्मा¶ । आगतस्त्वं यदास्माभि-

* अथवा जमदग्निः भारद्वाजः ( अनु० ) ।

† वृषन्निति नान्तस्य रूपमिदम् । प्रथमे खण्डे २९९, ३०१, ३१९, ५०१, ५४५, ७८०, ८३४ पृष्ठासु च व्याख्यातम् ।

‡ सोमस्याधारपात्रविशेषम् । अत्रैव चोत्तरत्र ६,१,२,७ — ४,१०—५,९ इत्यनुविदितम् ।

¶ निघण्टौ गतिकर्मसु "पवते"-इत्यस्याष्टोत्तरशततमत्वेन दर्शनात् (२,१४) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
यस्तेमदोवरेण्यस्तेनापवस्वान्धसा।
३ १ २ ३ २
देवावीरघशꣳसहा ॥ ४ ॥ ४ *

४ ५ १ २ ३ ५
ओम् ॥ (भासम् ॥) यास्ताइ। मादो। वाराओ२३४वा।
२ ५ ४ ५ १ ऽ २ ३ ५ २
णी२३४याः। ताइना। पावा। स्वाइआओ२३४वा। धा-

रिन्द्राय दीयते तदा] "मरुत्वते" सहाया मरुतो यस्य सन्ति†
तस्मै इन्द्राय "मत्सरः"‡ मदकरश्च भव। कीदृशः? "विश्वा"¶
विश्वानि सर्वाणि व्याप्तानि वा धनानि "ओजसा" आत्मीयेन
बलेन युक्तः सन् स्तोतृभ्यस्तानि प्रयच्छन् त्वं मादयिता भवेति
समन्वयः ॥ ३ ॥ ३

---

* उ० २,१,१४,१ = ऋ० ७,१,२१,४ = ज० २,१,५;—४,१,१०;—६,२,७;— ९,३,८;—११,२,९—१७—२०;—१२,२,९;—१३,२,१७;—१४,२,११—१२—१३; २०,१,२—३—४ = ऊह्य १,२,१;—३,१,४—१४—१७।

† अस्ति मरुत् इत्यलिङ्नामसु (३,१८)-रूपनामसु (३,१७)—हिरण्यनामसु च (१,२) निघण्टौ। तत्रैव दैवतकाण्डेऽन्तरिक्षदेवतासु च "मरुतः"-इति दृश्यते। अत्र च तेषामेव देवगणानां ग्रहणम्; तथा च श्रूयते—"असि सोमो"-इत्यादि (प्र० २९२पृ०) मरुतामिन्द्रसहायभूतत्वञ्च "इवस्य त्वा"-इत्यादौ (प्र० ६५६पृ०) श्रूयतएव।

‡ मदिधातोरौणादिके सरप्रत्यये रूपम्। अत चोत्तरत्रान्यत्रापि चतुर्षु (६,१,१,२—३,८—११—४,१०) श्रोष्यन्ते मत्सर इति।

¶ सुप आत्वे रूपम् (७,१,३९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ ५ १ २ ५ ३
२३४सा । दाइवा । वाइरा । घाशाओ२३४वा । सा२-
५
३४द्दा ॥ १ ॥

४ ५ २ ३२ १ २
(सोमसाम ॥) यस्तेमदाः । वराइणियाः । ताइनापावा-
२ १ ३ १ १ २ ५ ४
३स्वा३ । अन्धसा । दाइवावाइरा३४ । द्दाउ । घशा
५
पुꣳसद्दा । द्दो५इ । डा ॥ २ ॥

२ २ ३ ५ ११ २
(प्राजापत्यम् ॥) यस्ता३२इमा२३४दाः । वराइणायाँ ।
२ ५ २ ३ ५ २ १ र २
आ२३४वा । द्दा । ओ२३४वा । द्दाइ । ताइनापव ।
१ २ ३ ५ २ ३ ५ २
स्वआन्धासाँ । ओ२३४वा । द्दा । ओ२३४वा । द्दाइ ।
१ २ ३ ५ २ ३ ५ २
दाइवावाइराँ । ओ२३४वा । द्दाँ । ओ२३४वा । द्दा३इ ।
१ ३ ५र र २र १ १ १ १ २
घा२शा२३४औहोवा । सहोरयी३ष्ठा२३४५ः ॥ ३ ॥

२ १ ४र ५र १ र २
(सोमसाम ॥) यस्ताइमा२३दोवरेणियाः । ताइनापव ।
१ २ १ १ २१ ५ ४
स्वआन्धा१सा२ । दाइवा२वाइरा२३ । घशो२३४वा । सा५
५
द्दोईद्दाइ ॥ ४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

३ २उ ३ १ २ ३ १ ० ३ १ २
तिस्रोवाचउदीरतेगावोमिमन्तिधेनवः।

५ र २ ४ ५ ४ ५ १ २
(भास॒ंसाम॥) यस्ते। माइदा। वा। इया। राइणा

१ र २ ५ २र २र २ १
१यार२ः। ताइनापव। स्व। औ३हो। वाहा। धसा२।

१ १ ३ ५र र २ ३ २
दाइवा२३। वा२इरा२३४ औहोवा। घश्र॒ंसाहा१॥ ५॥

५ र र र ५ २र २र
(अद्वरङ्कड॒ंसोमसाम॥) यस्तेमदोवरेणियाइ॒ए। तेना-

र २र र र २ १ २ १
पवस्वान्धसा। देवावीरा२३। हाइ। घाश्राउवा। सा-

२ २ ५
हाउवा३। ऊ३२३४पा॥६॥४

अमहीयुर्ऋषिः*। हे "सोम!" "ते" तव "देवावोः"† देवकामः "अघशंसहा" राक्षसानां हन्ता‡ "वरेण्यः" सर्व्वैर्वरणीयः "मदः" मदकरः "यः" रसोविद्यते तेन रसेन "अन्धसा" आदरणीयेन¶ "पवस्व" क्षर॥४॥४

---

* "आङ्गिरसः"-इति ऋषि-निर्गेयः।

† देवावीरिति 'वीकान्तौ (अदा॰उ॰)'-इत्यस्य रूपम्, कान्तिरिहेच्छा। देवान् वेति इच्छे स देवावीः, अन्येषामपीति (६, १, १३७) पूर्व्वपददीर्घः।

‡ "अघशंसः"-इति स्तेननामसु त्रयोदशं नैघण्टुकम् (३, २४)। 'अघं पापं, यः शंसति, तस्य हन्ता'—इति वि॰।

¶ आदरणीयेनान्नेनेति भावः। "अन्धसा अन्नेन'-इत्येव वि॰।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ १ २
हरिरितिकनिक्रदत् ॥ ५ ॥ ५ *

५ र र १ १
(वैष्टम्भे द्वे ॥) तिस्रोवाचाः। उदाइ। उदा३१उ।
२ ५ र र २ २ १
वाये३। रा२३४ते। गावोमिमा। तिधाइ। तिधा३१उ।
२ ५ र २ १ २
वाये३। ना२३४वाः। हरिरेती। कनाइ। कना३१उ।
२ ५
वाये३। का२३४दात् ॥ ७ ॥

५ र र १ २ २ १र र १
तिस्रोवाचाः। उ३हाइरा३ते। गावोमिमान्तिधा१इ-
२ २ र ३ ५ १ २ ५र र
ना३वाः। हरिरेतो२३४हाइ। का२ना२३४ओहोवा।
३ ५
क्रा२३४दात् ॥ ८ ॥

२ र १ ५ २ र १ २र
(शाष्ठौ द्वे द्वे ॥) तिस्रोवाचो२३४हाइ। उहोरताइ। ग्रा-
र १ ५ २ र १ २ १ ५ २
वोमिमा२३४हा तिधेनवाः। हरिराइतो२३४हाइ। क-
१ २ १ २ ५र र २ १ २ र १ २ २ १
नाये३। क्रा२दा२३४ओहोवा। असम्यक्रातुबित्तमा२-
१ १ १
३४५म् ॥ ९ ॥

---

* उ० २,२,१४,१ = ऋ० ९,८,२३,४ = ज० १,१,२० ;—७,१,१६ ;— ९,१,७ ;— १५,१,१९ ;—२०,१,१०—११ ; —जद्दा १,१,१२।

२ ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४र र ५ ४५र ४ ५ २र र
तिस्रोवाचंउदीरता। वाहाइ। गावोमिमाइ।
१ २ २ ५ ४ ५ ४ ५ १ २ ५र र
तीर्धेनार२३४वा:। हारीराइती। कार२नार२३४औहोवा।
२ ५
का२३४दात् ॥ १० ॥

४ ३ र ४ १ ३र ५
( त्वूल्लकवैष्टम्भम् ॥ ) तिस्रो५वा। चा३उदीरताइ।
१ र १ १ २ १ २ २ १ १
गावोमिम। तिंधाइना१वा२३:। होवा३हाइ। हराइरा१-
१ २ २ १ २ १ २ ५र र
इतौ२३। होवा३हाइ। कनाये३। का२दार२३४औहोवा।
२ ५
दी२३४श्राः ॥ ११ ॥

४ र र र ४ २र१र
( पार्ष्ठौहम ॥ ) तिस्रोवाचा५उदीरताइ। गावोमिम-
२१र २ १ ऽ २
न्तिधेनव:। हरिरार३इती। कनौ२। ऊवाइ। हो३वा३।
१ २ ५र र २र १ २ १ ३ ११११
का२दीर२३४औ होवा। हाऔवा। औवा२३४५ ॥ १२ ॥ १

त्रितऋषिः*। "तिस्रोवाचः" ऋगादिभेदेन त्रिविधाः†

---

*—"आप्त्यः"—इति ऋषि-नैमेयः।

†—"चत्वारिवाक्परिमिता"-इत्यादौ (ऋ० १, २१, ८, ४५) श्रुतौ तु व्यावहारिक्या वाचा वाचां चतुष्ट्वम्। तथाच तस्यैव यास्ककृतं व्याख्यानाम्—"ओङ्कारो-महाव्याहृतयश्चेत्यार्षम्; नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः; मन्त्रः कल्पो ब्राह्मणं,चतुर्थी व्यावहारिकीति याज्ञिकाः; ऋचो यजूंषि सामानि,चतुर्थी व्यावहारि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

१ २　　　२ १ २ ३ १ २ ३ १ २
इन्द्रायेन्दो मरुत्वते पवस्व मधुमत्तमः ।
३ २ ३ १ २ ३ १ २
अर्कस्य योनिमासदम् ॥ ६ ॥ ६ *

　　　　　४ र र　　　२ १　२ १
(इषोवृधीयम् ॥) इन्द्रायेन्दाउ । मरुत्वताइ पवस्वा-

"उदीरते" स्तुतीः प्रोद्गायन्ति ऋत्विजः । "धेनवः" आशिरेण प्रीणयितारः "गावः" "मिमन्ति"† शब्दायन्ति दोहार्थम् । "हरिः" हरितवर्णः सोमश्च "कनिक्रदत्"‡ शब्दं कुर्वन्ति गच्छति कलशम्¶ ॥ ५ ॥ ५

---

* उ० ४,१,११,१= ऋ० ७,१,४०,१=ज० ३,१,१६—१९—१८—१९—२०—२१ ; —८,१,४ ;—१०,२,४ ;—१६,१,१३ ;—२२,२,१६ जह्ये १,१,१०।

कीति नैरुक्ताः ; सर्पाणां वाग् वयसां क्षुद्रस्य सरीसृपस्य, चतुर्थीं व्यावहारिकीत्येके। पशुषु तूणवेषु मृगेष्वात्मनि चेत्यात्मप्रवादः । अथापि ब्राह्मणं भवति—सा वै वाक् सृष्टा च तुर्धा व्यभवदेष्वेव लोकेषु त्रीणि, पशुषु तुरीयम् ; या पृथिव्यां साग्नौ सा रथन्तरे, यान्तरिक्षे सा वायौ सा वामदेव्ये, या दिवि सादित्ये सा बृहति सा स्तनयित्नौ ; अथ पशुषु ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति—सा च देवानां, या च मनुष्याणाम्"-इति नि० पू० १, ९ ।

†—'मा शब्दे ( जु० प्रा० )'-इत्यस्य पुरुषव्यत्ययेन ( ३, १, ८५ ) रूपम् ।

‡—निरन्तरशब्दकरणेऽर्थे विद्यमानस्य चुरादेरुभयपदिनः क्रन्देः सार्वकालिके (३, ४, ६ ) लुङि "दाधर्ति (७, ४, ६५ )"-इत्यादिनाच् लेरङ् द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमस्य निपातितः ।

¶—द्रोणमिति प्रसिद्धम ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मा२। धुमत्तमाः। अर्कस्ययो२। निमा२३। सा२-
दा२३४ औहोवा। इषीवृधे१॥ १३॥

(इन्द्रसाम॥) आ२३४इन्द्रा। या२३४इन्द्रा। मरु-
त्वते३। पा२३४वा। स्वा२३४मा। धमात्तमा३ः। आ-
२३४र्का। स्या२३४ये। निमासदा२३४५म्॥ १४॥

(वैश्वदेवं॥) इन्द्रायाइन्दो२३। हा। औ३होवा।
मरुत्वाते२३। हा औ३होवा। पवस्वामा२३। हा।
आ३होवा। धुमत्तामा२३ः। हा। औ३ होवा। अर्का-
स्येया२३। हा। औ३होवा। निमासादा२३म्। हा।
औ३होवा३४३। ओ२३४५इ। डा॥ १५॥

इन्द्रायेन्दो। एपु। मरु। त्वताइ। पवस्वमधु-
मत्ता२३माः। ऊवाइ। हो३वा। अर्कास्या२३यो। ऊ-
वाइ। हो३वा। निमासा२३दा३४३म्। ओ२३४५इ। डा।
॥ १६॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र र २ १ २ २
(आग्नेये द्वे ॥) इन्द्रायेन्दोहाउ। म। रु। त्वते३हाउ।
१ २ १ ७ २ १ ७ २
पवस्वमधु। मा। तमार३हाउ। अर्का। स्ययोर२३हा३इ।
१ ५ ४ ५
निमार२३। होर२३४वा। सा५दोई हाइ॥ १७॥

५ र र ४ ५ ४ ५ २ १ २ १ २
इन्द्रायेन्दोवा। ओवा। मरुत्वतोवा। ओवा।
१ २ १ २ १ २ २ ४ ५
पवस्वमोवा। आवा। धुमत्तमोवा। ओवा३। अर्काहाउ।
४ ५ २ १ २ १ ५ ४ ५
स्ययोहाउ। निमोवा३ओर२३४वा। सा५दो६हाइ॥ १८॥

४ ५र र र ४ ५ र ४ १
(वैश्वदेवम्॥) इन्द्रायेन्दोमरुत्वाते। ओहाइ पव-
२ १ १ ६ १ २ ५ १ ७
स्वमधमत्तमः। ओ३हा३४३। ओ३४हा। आर्कस्यायोर२३।
१ २ ५र र २ ३ ५
नार२इमार२३४ओहोवा। उप्। सार२३४दाम्॥ १९॥

५ र र र ५ १ २
(आग्नेयम्॥) इन्द्रायेन्दोमरुत्वाईताइ। पवस्वम।
१ २ ५ र ५ ४ ५
धुमात्ता१मार२३४ः। अर्कस्ययोनिमा६हाउ। सा५दोईहाइ
॥ २० ॥ ६

कश्यप ऋषिः*। हे "इन्दो" सोम![†] "मधुमत्तमः"

---

* "मारीचः" इति ऋषि-निर्देशः।

† ऋ० ९९४ पृ०३०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ ३ १२ २२ ३ १२ २२ ३ २
असाव्यꣳशुर्मदायाप्सु दक्षो गिरिष्ठाः।
३ २उ ३ १ २
श्येनो न योनिमासदत्॥ ७॥ ७*

४ ५ १ २
(श्येनवानि चत्वारि॥) आसा। वियꣳशुर्मा३१उवा२३।
५ ४ ५ ४ ५ २ २ १ १ १ १
दा२३४या। आप्सुदाक्षाः। गिरा३१उवायि३। ष्ठा२३४५ः।
२१ १२ २ ५
श्येनोना२३यो। निमा३१उवा२३। सा२३४दात्॥ २१॥

४ ५२ ४ १ ७ १ ७ १
असावियां। शुर्मदा२। य। आप्सुदाक्षा२ः। गा-
२२ १ २ १ २ ५ ४
इरिष्ठाः। श्याइनो१नायो२३। निमो२३४वा। सापुदो-
५
६हाइ॥ २२॥

अतिशयेन मधमान् "अर्कस्य" अर्चनीयस्य† यज्ञस्य "योनिं" स्थानं "आसदम्"‡ उपविष्टुं "मरुत्वते" "इन्द्राय" इन्द्रार्थं "पवस्व" चर॥ ६॥ ६

---

* उ० ३,२,१६,१=ऋ० ७,१,२४,४,= आर १,९,२३= क ३,१,१०;—७,२,१९;—१६,१,७;—२०,२,२।

† प्र० पुस्तके पृ० ६०। अर्कंइति अर्चते रूपम्।

‡ 'आसदम् आसीद' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र २ २ ३ ५ १ ७ २ १ १
असा । वियाओ२३४वा । भूमदाया । ओ२३४वा । आ-
२ ३ ५ २ १र २ ३ ५ २र १र र
प्सा ओ२३४वा । दत्तोगिराइ । ष्ठाओ२३४वा । ष्येनोनयो-
र २ ३ १ १ १ १
निमासदा२३४५त् ॥ २३ ॥

५ र २ २ ३ ५ २ १ २ ३ ५
असा । वियौवाओ२३४वा । भुमदायौ । वाओ२३४वा ।
२ २ ३ ५ १ २ ३ ५
अप्सु । दत्तौवाओ२३४वा । गिराइ । ष्ठौवाउ२३४वा ।
र २ २ ३ ५ १ १ ३ ५
ष्येनः । नयौवाओ२३४वा । निमा । सादौवाओ२३४वा ।
४
त्तोऽ५इ । डा ॥ २४ ॥

४ ५र ४ ५ २
(च्यावनानि चत्वारि ॥) असा । व्युद्धवाद्दाइ । अ ६-
१ रर र र १ २
भुर्मदायाप्स्वदत्तोगिरिष्टाउद्धवार३त्तोइ । ष्या२३इनो३ ।
१ ३ ५र र २ २र २ १ १ १ १ १
ना२योर३४औहोवा । निमासदा२३४५त् ॥ २५ ॥

४ ५र ४ ५र ४ ५ १ २ १
असाव्य६भुः । औहोवाद्दाइ । मदा२३या । आ-
१ र २ १ २ २ १ ३ ५र र
पस्वदत्तोगिरिष्ठाः । ष्याइनोना३योर । नार३इमा२३४औहो-
२ ३ ५
वा । उप । सा२३४दात् ॥ २६ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

२ ३ १२ ३१२ ३ १२
पवस्वदक्षसाधनोदेवेभ्यःपीतयेहरे।

२२ २ ५र ४ ५र ४
इहा३१२३४। इहा। साव्य९ॻुर्मदाय। इहा।

२ १ र २ ३ ५ २र १र २ २
अप्स्वदक्षोगिरिष्ठा३४५ः। ई२३४हा। श्येनोनयोरनिमा-

१ ५ १ ३२ ३ ५
३४५। ई२३४हा। आ२सदा३४५त्। ई२३४हा॥ २७॥

२ ५ ३ ५ ५
असा२३४। वियँ९ॻुः। मदा२३४याई। हाउ।

२ ३ ५ २१ ५ १ २
आप्स्वदा२३४क्षाः। गिराइष्ठा२३४हाइ। श्याइनोना३-

२ १ २ १ ५ ५
यो३। नाइमा२३हा३४३इ। सा२३४दो६हाइ॥ २८॥ ७

जमदग्निर्ऋषिः*। "गिरिष्ठाः" पर्वते जातः "अंशुः" सोमः "मदाय" मदार्थं "असावि" अभिषुतः। "अप्सु" सतीवरीषु "दक्षः"† प्रवृद्धश्च भवति। किञ्च। "श्येनोन" यथा श्येनो वनादागत्य स्थानमासीदति तद्वद् "अयं" सोमः "योनिं" स्वकीयस्थानम्‡ "आ सदत्"¶ आसीदति॥ ७॥ ७

---

* "भार्गवः"-इति ऋषि-नैगेयः।

† दक्षइति बलनामसु नैघण्टुकम् २, ९। 'दक्षः शीघ्रः'-इति वि०।

‡ द्रोणकलशमिति यावत्।

¶ लेटो रूपम् (३, ४, ७)



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ३ २ ३ १ २
मरुद्भ्योवायवेमदः ॥ ८ ॥ ८ *

४ ५ २ ४२ ५ १
(प्राजापत्ये द्वे ॥) पवस्वदौ। हौहोवाहाइ। क्षा-
१२ ऽ २ १ २ ५२
साधनाइः। औइहोइ४इ। औइहोइ४इ। औहो।
३२ २ २ १२ १ १ २ ३२ २ ऽ २ १
वाहाइ। देवेभ्यःपाइ। तयेहराइइ। औइहोइ४इ।
२ ५२ ३२ २ १ २२ ऽ २ २ २ ५२
औहो। वाहाइ। मरुद्भ्योवाइ। औइहोइ४इ। औहो।
३२ २ १ ३ ५८ २ ३ ५
वाहाइइ। या२वा२३४औहोवा। मा२३४दाः ॥ २९ ॥

४ ५ ४२ ५ ५ २२ १२ २ १
पवस्वदक्षसाधनः। ओ६वा। देवेभ्यःपीतया२ओइ।
२ १ २२ १ ४ ५ ४
हरा२इ। मरुद्भ्योवा२। ओ२३। यवोवा। मा५दोइ
५
हाइ ॥ ३० ॥ ८

दृढच्युत आगस्त्य ऋषिः। हे "हरे" हरितवर्ण पापहर्त्तर्वा सोम! "दक्षसाधनः" दक्षोबलन्तस्य साधकः † "मदः" मदकरश्च‡ त्वं "पवस्व" क्षर। किमर्थम् देवेभ्यः इन्द्रादिभ्यः

---

* उ०१,१,१०,१= ऋ० ६,८,१५,१= उ० १,२,८;—१५,२,९;—१६,२,१=अग्न १.१,९।

† 'दक्षसाधनः शीघ्रसाधनः'-इति वि०।

‡ 'मदः मदनीयः'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
परिस्वानोगिरिष्ठाःपवित्रसोमोअक्षरत् *।

१ २ ३ २
मदेषुसर्वधाअसि॥ ९॥ ९†

४ ५ २ र र र
(आद्यं वैदन्वतम्॥) पारी। स्वाणोगिरिष्ठाः। प-

१ २ ५ २र १ १ २ ५
वा२इत्रे२३४सो। मोअक्षारा २त्। मदाइषूसा३। ई३-

१ २ १ ५ ४ ५
या३। वंधा२३४वा। आ५सोईहाइ॥ ३१॥

४ ५ २र र र
(द्वितीयं वैदन्वतम्॥) प। यैंपारी। स्वानोगिरिष्ठाः।

१ ३ ५ २र १ १ २ २
पवा२इत्रे२३४सो। मोअक्षारा २त्। मदाइषूसा३हा३।

१ ३ ५र र २ १ ३ १ १ १ १
वा२धा२३४औहोवा। ए३। असी२३४५॥ ३२॥

"पीतये"‡ पानाय। तथा "मरुद्भ्यः" वायवे च पीतये पानाय "पवस्व" क्षर॥ ८॥ ८

---

* "सोमो अक्षाः"-इति उत्तर-व्याख्याने वि०।

† उ०४,१,१७,१=ऋ०४,८,८१=ऊ०३,२,८—९—१०;—८,१,९;—९,२,६;—१०,१,१८;—१२,१,४;—१४,१,२;—१५,१,८—९—१०—११—१२;—१५,१,७=ऊह्ये १,१,१०;—२,२,१३;—४,१,१४;—६,१,१३।

‡ "मत्ते वृषेपप ( ३, २, ९६ )"-इति क्रिन्न दातव।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



( तृतीयं वैदन्वतम् ॥ ) पाऽ५री। स्वानो३गा३इरिष्ठाः । पवित्रे सो। मो अक्षरात्। पवित्रे। सोमो२३। क्षा- रात्। ओइ। मदौ। वा३४३ओ३४वा। षुवा। सर्वधाः। असायेइ। मा२दार३४औहोवा। ए३। षुसर्वधाअसी- २३४५॥ ३३ ॥

( चतुर्थं वैदन्वतम् ॥ ) औ३होइ। इहहाहहाइ। औरहो२३४वा। पराइस्वा२३४नो। गिरा२३४इष्ठाः। पावित्रे२३४सो। मोअक्षा२३४रात्। मदाइषू२३४सा। वंधाआ२३४सी। औ३होइ। इहहाहहाइ। औरहो- २३४५वा६५६। ए३। उपा२३४५॥ ३४ ॥

( आङ्गिरसस्य पदस्तोभौ द्वौ ॥ ) पा। यैंस्वानाः। गा२इ। रिष्ठा२या। हाहाइ। ओवा२३होइ। पावित्रे सो। मोअक्षारा२त्। हाहाइ। ओवा२३होइ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २र २ १ १ २ १ ५
मदा२इषुसा। हाहाइ। ओवा२इहो। र्वधो२३४वा।
४ ५
आ५सो६हाइ ॥ ३५ ॥

५ र र र र ४ ५ १ २
पर्यौहोवाहाइस्वाना:। गा२इ। रिष्ठा२या। ओ२३४।
२र २ २र २ १ २ १ २ १ २ १ ७
होहोइ। हाहा। होवा। होवा। पवित्रेसो। मोअ
३ २र २ २र २ १ २ १
चारा२त्। ओ२३४। हाहोइ। हाहा। होवा। मदा
३ १ २ २र २ २र २ १ २ १
२इषुसा। ओ२३४। हाहाइ। हाहा। होवा। हो
२ २१ ५ ४ ५
वा३। र्वधो२३४वा। आ५सोई६हाइ ॥ ३६ ॥ ९

अस्या: परस्याश्च कश्यपोऽसित* ऋषि:। अयं "सोम:" "पवित्रे"† "पर्य्यचरत्" परिचरति। "स्वान:" सुवान:‡ अभिषूयमाण: "गिरिष्ठा:" गिरिस्थायी गिरौ वर्त्तमान इत्यर्थ:। स त्वं "मदेषु" मादकेषु स्तोतृकेषु "सर्वधा असि" सर्वस्य धाता दाता वा भवसि॥

"स्वान:"-"सुवान:"-इति, "अचरत्"-"अचा"-इति च साम्नऋच: पाठ: ॥ ८ ॥ ९

---

* अथवा कश्यपो देवल: (ऋ० अनु०)।

† 'पवित्रे ऊर्णमये'-इति वि०। पवित्रश्च दशापवित्रमित्यनुपदम् (इतश्चतुर्थे) वक्ष्यति सायण:।

‡ छान्दसिकबहुलवचनात् उवङ् विकल्प: (७, ३, ९७)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

१ २ ३ २ ३ २ ३ १ २र ३क २र ३ २
परिप्रियादिवःकविर्वयाꣳसिनप्त्योर्हितः ।
३ १ २ ३ १ २
स्वानैर्याति*कविक्रतुः ॥ १० ॥ १० †

॥ चतुर्थ-दशति ॥

५ र ४ ५ १ र
( पूर्व्वमौर्णायवम् ॥ ) परिप्रियादिवःकावोः । वयाꣳ
र र र २ १ १ ऽ
सिनप्त्योर्हितः । स्वानैर्या२३ती । आया२ । इया२ई-
२ ३ २१ ३ ५र र ३ १११११
३या । कविक्रतो२ । या२३४औहोवा । ई२३४५ ॥ ३७ ॥

४ ४ १ ऽर
( उत्तरमौर्णायवम् ॥ ) परिप्रिया५दिवःकवाइः । वया
र २ १ र र २ १ र र २ १
२होश्वाꣳसिनप्त्ये२वोर्हितः । स्वानैर्या२३ती । ऊवा ।
२ १ २ १ ऽ २ ३ २२
होवा । होवा । ऊवा२इ । ई३या । कविक्रतो२ ।
३ ५र र २ १११११
या२३४औहोवा । ई३या२३४५म् ॥ ३८ ॥ १०

॥ इति त्रयोदशस्यार्द्धः प्रपाठकः ॥

* "सुवानोयाति"-इति उ०-व्याख्याने वि० ।

† उ० २,१,१९,१ = ऋ० ९,७,२२,१ = ऊ० १,२,१५,—७,१,८ ;—१५,२,१० ;—१९ ८,११ ;—२०,१,१७=ऊह्ये ४,१,९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीये खण्डे—

सैषा प्रथमा।

१ २ ३र ३ २ ३ १ २ ३ १ २
प्रसोमासोमदच्युतःश्रवसेनोमघोनाम्*।

३ २ ३ १ २
सुताविदथेअक्रमुः ॥ १ ॥ ११ †

२ ३ ५ २ १ २
ओं ॥ ( सौभरे द्वे ॥ ) प्रसोमार२३४साः। मदच्युतः।

कविर्मेधावी। "कविक्रतुः" अन्तःप्रज्ञः क्रान्तकर्मा वा सोमः "नप्तोः" अधिषवणफलकयोः ‡ "हितः" निहितः। "दिवः" द्युलोकस्य "प्रिया" प्रियाणि "वयांसि" वयन्ति गच्छन्तीति वयांसि ग्रावाणः ¶ तानि। [तथाच मन्त्रवर्णः—"श्येना अतिथयः पर्वतानां ककुभः"-इति।] "स्वानैः" अभिषुण्वद्भिरध्वर्युभिः "परियाति" गच्छति॥

"स्वानैः"-सुवानैः-इति साम्नऋचः पाठः॥ १० ॥ १०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य प्रथमः खण्डः॥ १ ॥

---

* "मघोनः"-इति ऋ०, उ०-व्या० वि० च।

† उ० १,२,२१,१=ऋ०६,८,२२,१=ऊ० १,२,१४ ;—२१,१,२०।

‡ 'द्यावापृथिव्योः अहोरात्रयोर्वा'-इति वि०।

¶ 'वयांसि अन्नानि पक्षिणो वा'-इति वि०। ग्रावाणश्च सोमाभिषवार्थानि पात्रविशेषाणि "अग्निरुक्थे"-इति ऋचो व्याख्यानं द्रष्टव्यम् (प्र० १७२ पृ०)। निघण्टौ तु ग्रावइति पर्वतइति च मेघनामसु पठ्यते १, १०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २ २२ ३ २ ३ १ २ ३ १ २

प्रसोमासोविपश्चितोपोनयन्तऊर्मयः* ।

१ २ ३ १ २

वनानिमहिषाइव ॥ २ ॥ १२ †

१ २ २ १ ३ ५ १ ०

औ२३होवा३। अवा२सा२३४इना:। ओइमघोना२म्।

१ १ २ ५ २ २ २२ २ १ १ १ १

सुता२३ः। वा२इदा२३४औहोवा। थेअक्रमू२३४५ः ॥ १ ॥ ११

५ २ २ १ २ १ २ १

प्रसोमासाः। वाइपश्चितः। आपो१नाया२। ता

श्यावाश्व ऋषिः‡। "सोमासः"¶ सोमाः "मदच्युतः" मदस्राविणः "सुता" सुतः§ अभिषुतः सन्तः "मघोनां" हविष्मतां॥ "नः" अस्माकं सम्बन्धिनि "विदथे" यज्ञे "अवसे"** अन्नाय कीर्त्तये वा "प्राक्रमुः" प्रगच्छन्ति॥

"मघानां"—"मघोनः"-इति पाठौ ॥ १ ॥ ११

* "अपांनयन्त्यूर्मयः"-इति ऋ० ख, उ०-व्या० वि० च।

† उ० १,१,१९,१= ऋ० ६,८,२३,१= ऊ० ६,२,१२;— ११,२,११;—१४,१, १२—१३—१४;—१८,१,११;—१९,२,१५—१६।

‡ "आत्रेयः"-इति ऋषि-नैगेयः।

¶ असुकि रूपम् (७, १, ५०)।

§ सुताइति आत्वे रूपम् (७, १, ३९)।

|| मघं धनम्, इह च तत् हवीरूपम् लक्ष्यमिति भावः।

** "विदथः"-इति यज्ञ-नामसु पञ्चमं नैघण्टुकम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१२ ३ १२ ३२ ३१ २ ३ ३ १ २
पवस्वेन्दोवृषासुतःकृधीनोयशसोजने ।

३ २३ १ १
विश्वाअपद्विषोजहि ॥ ३ ॥ १३ *

१ ४२ १ २ १ २ २ १२४
ऊर्मयः । वानाऽनिमा२ । आऔ३हो । हिषाइव ।

१ २ १
इडा२३भा३४३ । औ२३४५इ ॥ २ ॥ १२

त्रितऋषिः† । "विपश्चितः" मेधाविनः "सोमासः" सोमाः "प्र नयन्त" पात्राणि प्रति गच्छन्ति । किमिव ? "अपऊर्मयः" [अपइति षष्ठी व्यत्ययेन द्वितीया ‡] । [अपामूर्मयः अतएव बह्वृचाः—अपान्नयन्तीति पठन्ति] ते यथा सततमुद्भवन्ति तद्वत् । [बाहुल्येऽयं दृष्टान्तः । अर्थतो गमने दृष्टान्तान्तरमभिधीयते- "वनानि महिषाः" प्रवृद्धा मृगा इव । अथवा स्वाश्रयात् प्रद्रवणे प्रथमो दृष्टान्तः । द्वितीयस्तु दशापवित्रादधःप्रदेशे ॥ २ ॥ १२

---

* उ० २,१,२,१= ऋ० ७,१, २३, ९ ।

† "श्याश्वः"-इति ऋषि-नैगेयः ।

‡ "व्यत्ययो बहुलम्"-( मै० ३, १, ८ ) व्याख्यातश्चैवं पुरस्तात् ( प्र०२,१५पृ०— ) मृगेषु यो महान् मृगः तस्य तु नाम्नौ महिष इति प्रसिद्धम् । यथाहि—

"ब्रह्मा देवानाम्पदवीः कवीनामृषिर्विप्राणां महिषोमृगाणाम्"

—इति ऋग्वेदीया श्रुतिः (८, ५, ११, ६ ) । "महिषो मृगाणामित्येषन् हि महा भवति मृगाणाम्"-इत्यादि तद्व्याख्यानं यास्कस्य ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

२३ १ २ ३ १ १ २ ३ १ २
वृषाह्यसि भानुना द्युमन्तन्त्वा हवामहे ।
१ २ २ ३ १ २
पवमान स्वर्दृशम्* ॥ ४ ॥ १४†

४ २ २ ४ २ १२
( वृषकाणि त्रीणि ॥ ) पवस्वेन्दो५वृषासुतः । कृधी
२ २ २ २ ३ ५ १ २
नोयशसोजनायेइ । वाइश्वा आ२३४पा । द्वा२इषा२३४
५ २ २ ३ ५
औहोवा । जा२३४हो ॥ ३ ॥ १३

४ ५ २ ४ २ १ २ २ १ २ २
वृषाहिया । सिभानू२३ना । द्युमन्तंत्वाहावा१माहा
३२ १ २१ ५ ३ ५
२३४इ । पवा३ । मानस्तुवो२३४वा । दृ२३४शाम् ॥ ४ ॥

अमहीयुर्ऋषिः‡ ॥ हे "इन्दो" सोम ! "सुतः" अभिषुतः "वृषा" सेक्ता त्वं "पवस्व" धारया क्षर । "जने" जनपदेषु "नः" अस्मान् "यशसः" यशस्विनः "कृधि"¶ कुरु । "विश्वा" सर्वान् "द्विषः" द्वेष्टृन् शत्रून् "अप जहि" मारय ॥ ३ ॥ १३

---

* "पवमानस्वाध्यः"-इति ऋ० ।

† उ० २,१,४,१= ऋ० ७,२,१,४ ।

‡ "आङ्गिरसः"-इति ऋषि नैगेयः ।

¶ 'श्रुशृणुपृकृवृभ्यश्छन्दसि (६, ४, १०२)"-इति सिद्धं कृधीति । क्वचि तु "कृधी"-इति दीर्घान्तपाठः, स च "द्व्यचः (६, ३, १३५)"-इति योगविभागात् साध्यः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१२ ३१२ ३१ २३ २ ३ २
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिः*।

४र र४ २१ २र १ऽर र
वृषाह्यियापुसिभानुना। द्युमत्तंत्वाह्वार्‌मह्ऎ।

ऽ २ १ २र १ २
हा२इ। ऊ२। हो३वा। पवमानस्वर्दृशम्। हा-

ऽ २ ३ २
२इ ऊ२। हो३वा। ऊ३वो३४५इ। डा॥ ५॥१४

भृगुर्ऋषिः†॥ हे "सोम!" त्वं "वृषा" अभिलषितफलानां वर्षिता "असि हि" भवसि खलु। तस्मात् हे "पवमान" पूयमान पुनान‡ वा सोम! "स्वर्दृशं" सर्वस्य द्रष्टारं¶ "भानुना" तेजसा§ "द्युमन्तं" दीप्तिमन्तम् अतिशयेन तेजस्विनमित्यर्थः। स्तुतिमन्तं वा "त्वा" त्वां "हवामहे"॥ यज्ञेषु आह्वयामहे॥ ४॥ १४

---

* "मती"-इति ऋ०।

† "वारुणिः भार्गवोजमदग्निर्वा" इति ऋषि-नैगेयः।

‡ अभिषुत शोधित इत्यर्थः।

¶ प्र० ४८०.पृ० द्र०।

§ भानुइति निघण्टावहर्नामसु (१, ९) दृश्यते परमिह सर्वत्र रश्मिवाचकत्वेन व्याख्यातमाचार्येण—(प्र० २१९ पृ०, ४५८ पृ०)।

‖ कः सम्प्रसारण-बाहुल्येन रूपमिदम् (६, १, ३४)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र२र३ १ २
स्वजदश्वᳪ रथीरिव ॥५॥ १५ *

२ २ ३र ४ ५ ४ ५
(कौम्भ्यस्य सामानि त्रीणि ॥) इन्दुरौहोवाहाइ । पावी ।
२ १ २ ५ २र १ ऽ २ १
ष्टचार्२इ । तनो२३४हा । हाहोइ । हो३हा । प्रियाः-
२ र २र २ ३ ५ २र १ ऽ २
कवी । नाम्ना । तिरो२३४हा । हाहोइ । हो३हा ।
१ २ ५ २र र ऽ २ १
स्वजार्त् । अश्वो२३४हा । हाहोइ । हो३हा३ । रार्
२ ५र र ३ ५
या२३४ औहोवा । ई२३४वा ॥ ६ ॥

४ ५ ४र ५ ४ ५ ४ ऽ २ २
इन्दुःपविष्टचेतनःप्रियःकवाइ । ऊ३म् ऊम् । नाम्ना-
५ १ २ ऽ २ १ ३
२३४तौः । स्वजादा२३श्वाम् । ऊ३म् ऊ३म् । रार्था-
५र र ३ ५
२३४औहोवा । ई२३४वा ॥ ७ ॥

४ ५ ४र ५ ४ ५ ४ ४र ५ ४ ५ ४ ४
इन्दुःपविष्टचेतनःप्रियःकवीनाम्मतिःस्व । जापूदश्वाम् ।
१ १ १ ३ ५र र ३
ओवा२३ । ओवा२३ । रार् था२३४ अ होवा । ई २ ३ ४
५
वा ॥ ८ ॥ १५

---

* ऋ० ७,१,३७,५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २ ३ २ ३ १ २ ३ १र २र ३ २
अक्रन्तप्रवाजिनोगव्यासोमासोअश्वया।

३ १ २ ३ १र २र
शुक्रासोवीरयाशवः॥ ६॥ १६ *

५ २ ४ ५४र ५ १
(कार्त्तवेशस्य त्रीणि॥) अक्रन्ताइताप्रवाजिनाः। गा-

१ र १ २ १
व्या२सोमा२। सोअश्वयाश१क्रा२सोवी२। रया२-

१२ १
शवः। ओ२३४५इ। डा॥ ८॥

५ र ५र २१र र र र
अक्रन्तताप्राईवाजिनाः। गव्यासोमासोअश्वया२३-

अस्या उत्तरस्याश्च कश्यपऋषिः†। "चेतनः" प्रज्ञापकः "प्रियः" देवानां प्रीतिकरः "इन्द्रः" सोमः "कवीनां" क्रान्तकर्मणां स्तोतृणाम्‡ "मतिः"¶ मत्या स्तुत्या "पविष्ट"§ पवते। "अश्वं" हयं "रथीरिव" रथीव ऊर्मिं॥ "सृजत" सृजति॥ ५॥ १५

* उ० ४,१,२,१ = ऋ० ७,१,२६,४।

† "मारीचः"-इति ऋषि-नैर्णयः।

‡ प्र०९२८ पृ० द्र०।

¶ स्वादेशे रूपम् (७,१,३९)।

§ लेटः सिप्पक्षे रूपम् (३, ४, ९४)।

॥ "पङ्क्तीकृतानामश्वानां नमनोन्नमनाकृतिः। अतिवेगसमायुक्ता गतिरूर्मिरुदाहृता"-इत्यश्वचिन्तामणिः!



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१२ ३ १ २ ३ १र २र ३ १ २
पवस्व देववायु*षगिन्द्रङ्गच्छतु तेमदः।
३ १र २र ३ १ २
वायुमारोह धर्मणा ॥ ७ ॥ १७ †

१ २ १र र २ २ १ १ २ ५र
हाइ। प्रुक्रासोवा३१इ। रया२३। शा२वा२३४औ-
र ३ ५
होवा। ण्वा२३४भी ॥ १० ॥

३ ४ ३ ४र ५ २ ४ ५र २
आसृक्षत प्रवाजिनाः। ए३। गव्यासोमा। सो३
१ २ २ १ ३ ५ २ १ ५ ४
आश्वा३या। प्रुक्रा२सो२३४वी। रयो२३४वा। शा५-
५
वो६हाइ ॥ ११ ॥ १६

"वाजिनः" बलवन्तः‡ "आशवः" वेगवन्तश्च "सोमासः" सोमाः "गव्या" गवेच्छया¶ "अश्वया" अश्वेच्छया§ "वीरया" वीरेच्छया च॥ "प्रासृक्षत" ऋत्विग्भिः प्रकर्षेण सृज्यन्ते ॥ ६ ॥ १६

---

* "दे̱वा̱यु̱०"-इति ऋ०, उ०-व्या० वि० च।

† उ० ५,१,१५,१ = ऋ० ७,१,३४,२ = ज० ४,२,१७—१८—१९—२० ;—१७,१, १=ऊह्य १,२,२।

‡ 'अन्नवन्तः'-इति वि०।

¶ प्र०२२३ पृ० द्र०।

§ ४ प्र० ४११ पृ० द्र०।

‖ अश्वयेतिवत् साध्यः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

१ २ ३ २ ३ १र २र ३ २
पवमानोअजीजनद्दिवश्चित्रन्नतन्यतुम्।

४ ५ ४ ५ ३ २ १ २
(ग्राम्यदे द्वे॥) पावस्वदि। वया३। वा२या२३४

५र र ३ ५ ४ ५ ४ ५ ३ १
औहोवा। यू२३४षाक्। आइन्द्रंगच्छा। तुता३इ।

१ ३ ५र र ३ ५ २र
तू२ता२३४औहोवा। मा२३४दाः। वायू२ऽहो१इ।

१ २ ३ २ १ ३ ५र र ३
आ२३री। द्धा३। द्धा२धा२३४औहोवा। मा२-

५
३४णा॥ १२॥

३ ४ ५ र र २ ३ ५ १र १
पवस्वदेवए। चौएहौ२३४या। आयुषागै२हौए

ऽ २ १ र १ ऽ २ १
२हौ३या। इन्द्रंगच्छतुतेमदए२हौए२हौ३या। वायुमा-

२ २ १ ५ ४ ५
रो३१२३। द्धा२३४वा। मा५णोई३हाइ॥ १३॥ १७

निध्रुविः काश्यपऋषिः। हे सोम! "देवः" द्योतमानस्त्वं "पवस्व" धारया चर। अपिच तव "मदः" मदकरोरसः "आयुषक्" अनुषक्तः* यथा भवति तथा इन्द्रं प्रति गच्छतु। अपिच

---

* सचते रूपम्। आनुषक् आयुषक् इति शाखाभेदेन पठ्यते, "आनुषगिति नामानुपूर्वस्यानुषक्तंभवति"-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ज्योतिर्वैश्वानरम्बृहत् ॥ ८ ॥ १८*

( जनित्रे द्वे ॥ ) पावा । मानो । अजीजा२३४नात् ।
दिवश्चित्राम । नतन्यतूम् । ज्योतिर्वैश्वा२३ । नारा
२३४औहोवा । बृ२३४हात् ॥ १४ ॥

पवमानाः । अजाइजा२नात् । दिवश्चित्रा२३ए
हाइइ । नातन्या२३४तूम् । ज्यो२३४ती । वा२३४इ
श्वा । नरोवा । बृ५होई हाइ ॥ १५ ॥ १८

त्वं "वायु" "धर्मणा" धारकेण† रसेन‡ "आरोह" प्राप्नुहि ॥
"देवआयुषक्"-"देवायुषग्"-इतिपाठौ ॥ ७ ॥ १७

---

* उ० ३,१,२,१ = ऋ० ७,१,२१,१ = ऊ० १२,१,१२ ;—१८,१,८—९ ।

† 'धर्मणा कर्मणा'-इति वि० ।

‡ धर्मणेति विविधं व्याख्यातम् । तथाहि—"जातः परेण ( प्र०१४८ पृ० )"-इत्यत्र 'धर्मणा आधानादि-कर्मणा'-इति, "घृतवती ( प्र० ७७७ पृ० )-इत्यत्र 'धर्मणा धारणेन'-इति इह 'धर्मणा धारकेण रसेन'-इति ; एव मुत्तरत्रापि ( छ० ६, ६, २, ८—उ० २, २, ९, २—३, १, १, ३—३, १, १०, ३—३, १, २०, ३—४, २, २, ७—७, १, ७, ३ ) स्वयं द्रष्टव्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमो।

१ २ ३ २ ३ १ २ ३ १२ ३१ २ ३ २
परिस्वानास*इन्दवोमदायबर्हणागिरा।
१ ० ३ १ २
मधोअर्षन्ति†धारया॥८॥१९ ‡

४ ५ २र र र र
(प्रक्रीडम्॥) पारो। स्वानास। इन्दवोमदायब।
१ र ३ २ २ २ १ ५ ४
र्हणा२३गिरा३४। मधो३४अर्षा३। तिधो२३४वा। रा
५
पूयोईहाइ॥१६॥

४ ५ २र १र १
(सङ्कीड़म्॥) पारो। स्वानासइन्दवाओवा२३हो

अमहीयुर्ऋषिः¶। "पवमानः" सोमः "बृहत्" महत् "वैश्वानरं" वैश्वानराख्यं § "ज्योतिः" तेजः "दिवः" द्युलोकस्य "चित्रं" विचित्रं "तन्यतुं न" अशनिमिव ॥ "अजीजनत्" अजनयत् ॥ ८॥ १८

---

* "सुवानास"-इति,
† "सुताअर्षन्ति"-इति च } ऋ०, उ०-व्या० वि० च।

‡ उ० ४,२,१,७ = ऋ० ६,७,३४,४।

¶ "आङ्गिरसः"-इति ऋषि-नै०।

§ नि० दै० १, २१—२३ खण्डाद्द्रष्टव्याः।

|| 'तन्यतुं विस्तीर्णम्'-इति वि०। "तनोतेर्यतुच् तन्यतुर्वायुः रात्रिश्च (उ०४, २)'-इति सि० कौ०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

२ ३ १ २　३ १र　१र ३ १र　२र ३ २
परिप्रासिष्यदत्कविः सिन्धोरूर्मावधिश्रितः ।

१　　र　र　　　　१
वा२३हा २ईया । मदायबर्हणागिरा । औवा२३होवा
१　　र　र　　　　१
२३हा २ईया । मधोअर्षन्तिधारयाऽऽऔवा२३होवा२३हा
१　२　५र र　२　५
२ईया२ । वा२३४औहोवा । ऊ२३४पा ॥ १७ ॥

२　　र ४　२ ४ ५
( निक्रीडम् ॥ ) पाऽपुरी । स्वाना३साइन्दवाः ।
२ ऽर　१ ऽर　१　　२　　१ र
मदा२यबर्हणा२गिरा । मधो२३अर्षा । ऊर्मिरिवा २ ।
ऽ १　३ र १ १　२ ३ ५　४
ई३या । तिधारया । औ३होवा । हो५इ । डा ॥ १८ ॥
॥ १९ ॥

द्वयोः काश्यपोऽसितऋषिः* । "स्वानासः" सुवानाः अभि-षूयमाणाः "इन्दवः" दीप्ताः । "बर्हणा" महत्या† "गिरा" स्तुतिरूपया वाचा "मधो" इति विभक्तिव्यत्ययः(३,१,८५) । मधवो मदकराः सोमाः "धारया" सह देवानां "मदाय" तदर्थं "पर्यर्षन्ति"‡ दशापवित्रादधः चरन्तीत्यर्थः ॥

"मधो"—"सुता" इति साम्नऋचः पाठौ ॥ ६ ॥ १९

---

* "देवलो वा"-इति ऋषि-नैगेयः ।

† 'बर्हणा परिवेष्टनेनेति वि० ।

‡ 'ऋषगतौ ( तु० प० )'-इत्यस्य रूपम् । अर्षति, अरर्षति-इति च गतिकर्मसु नि० २, १४ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २र ३ १ २
कारुं* बिभ्रत्पुरुस्पृहम् ॥ १० ॥ २०†

॥ इति पञ्चम-दशति ॥

॥ इति पञ्चमः प्रपाठकः ॥

५ र २ १ १ र
(औशनम् ॥) परिप्रासि। ष्यदत्कावी२ः। सिन्धो
२र ७ १र १ ३ ५र र
रूर्मावाधिश्रिता२ः। कारु२३म्। बा२इभ्रा२३४औहो
२ १ ३ १ १ १ १
वा। पुरुस्पृहा२३४५म् ॥ १९ ॥ २०

"परि प्रासिष्यदत्" परिस्यन्दते "कविः" मेधावी "सिन्धोरूर्मावधिश्रितः" आश्रितः सन् "पुरुस्पृहं" बहुभिः स्पृहणीयं "कारुं" स्तोतारं‡ "बिभ्रत्" धारयन् सोमः परिस्यन्तते-इति सम्बन्धः ॥

"कारुं"—"कारम्"-इति पाठौ ॥ १० ॥ २०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य द्वितीयः खण्डः ॥ १ ॥

---

* "कारं"-इति ऋ०।

† ऋ० ६,८,३,१।

‡ "कारुः"-इति स्तोतृनामसु तृतीयं नैघण्टुकम् (३,१६)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीये खण्डे—

सैषा प्रथमा ।

२३ २३ २ ३२ ३१ २ ३१र ३र
उपोषुजातमप्तुरङ्गोभिर्भङ्गम्परिष्कृतम्।
१ २ ३ १ २
इन्द्न्देवाअयासिषुः ॥ १ ॥ २१ *

(यामानि त्रीणि ॥) इहा२इहा। उपोषुजातमा२
प्तुराम्। इहा। इहा२इहा। गोभिर्भङ्गम्परा२इष्कृ
ताम्। इहा। इहा२इहा। इन्दुन्देवाअया२सिषुः।
इहा१ ॥ २० ॥

ऊपोषुजातमा२प्तुराम्। उपा। गोभा२३इहोइ।
भङ्गम्परा२इष्कृताम्। उपा। इन्दु२३ ९होइ। देवा
अया२। सिषुरा३१ओवार३। ऊ३२३४पा ॥ २१ ॥

उपोषौ। होइजाताम्। आप्तू३राम्। औ३हो३
वा३। गोभिर्भा२३४ङ्गाम्। ओइपारिष्कृता२म्। इन्दू
२३म्। देवा३४औहोवा। अयासिषू२३४५ः ॥ २२ ॥ २१

* उ० १,२,१८,२—५,२,२०,१ = ऋ० ७,१,२०,२ = कौ० ६.१,५ ;—१९,२,११ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ १ २ ३ ३उ ३ २ ३ १२
पुनानोअक्रमीदभिविश्वामृधोविचर्षणिः।
३ २ ३ १ २ ३ १२
शुम्भन्तिविप्रन्धीतिभिः॥ २ ॥ २२ *

५ र र २ ३ ५ १
(वैरूपम्॥) पुनानोआ। क्रामीदा२३४भी। वि-
३ ५ २ ३ ५ १ ३ ५
श्वा२मा२३४र्द्धाः। वीचर्षा२३४णीः। शूम्भा२ता२३४इवी।
१ २ ५र र ३ ५
प्रा२धा२३४औहोवा। ती२३४भीः॥ २३॥ २२

अमहीयुर्ऋषिः†। "सुजातं" सम्यक् प्रादुर्भूतम् "अप्सु" वसतीवरीभिः प्रेरितं‡ "भङ्गं" शत्रूणाम्भञ्जकं¶ "गोभिः" गोविकारैः पयोभिः "परिष्कृतम्" अलङ्कृतम् संस्कृतम्। "इन्दुं" सोमं "देवाः" इन्द्रादयः उपायासिषुः "उपगच्छन्ति॥ १ ॥ २१

§"विचर्षणिः" द्रष्टा॥ "पुनानः" सोमः "विश्वाः" सर्वाः

---

* उ० ३,१,१२,१ = ऋ० ६,८,३०,१ = ऊ० २,२,१२;— २३,२,११—१२—१३।

† "आङ्गिरसः"-इति ऋषि-नैगेयः।

‡ 'अप्सु भवतीति अप्सुरम्'-इति वि०।

¶ 'भङ्गं भज्यते ग्रावभिः'-इति वि०।

§ नेद सायणीयर्षिसंवादी दृश्यते, तदिह च मूलं लेखकप्रमादमित्यनुमीयते, "बृहस्पतिः आङ्गिरसः'-इति तु ऋषि नै०।

‖ "विचर्षणिः"-इति पश्यतिकर्मसु षष्ठं नैघण्टुकम् (३, ११)। 'विचर्षणिः विविधं पश्यन्ति सर्वे वा पश्यन्ति'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ २ ३ १ २ ३ २३ २ १ २ ३ १२ २२
आविशन्कलशꣳसुतोविश्वाअर्षन्नभिश्रियः* ।
२ १ २
इन्दुरिन्द्रायधीयते† ॥ ३ ॥ २३‡

(औशने द्वे ॥) ५र र ५ आविशन्कालाईशꣳसुताः । वाइ-
२र १ २ १ २ ऽ २ १ २ २
श्वाअर्षन् । अभाइश्रायाइः । ओइहाइ । ओवा । ओ
३ १ १ १ ३ ५र र २र
२३४हाइ । इन्दुर३ः । आ२इन्द्रा२३४औहोवा । यधी
३ १ १ १ १
यते२३४५ ॥ २४ ॥

"मृधः"¶ शत्रुसेनाः "अभ्यक्रमीत्" अभिक्रामति § । "विप्रं" मेधाविनं तं ‖ सोमं "धीतिभिः"** शुचिभिर्वा "शुम्भन्ति"†† अलं कुर्वन्ति ॥ २ ॥ २२

---

* "स्पृधः,"-इति, † "शूरोनगोषुतिष्ठति"-इति च ऋ ।

‡ ऋ० ७, १, २०, ४ ।

¶ "मृधः"-इति सङ्ग्राम-नामसु विंशं नैघण्टुकम् । 'मृधः—सङ्ग्रामान् जेतुम्'-इति च वि० ।

§ सार्वकालिकोलुङ् (३, ४, ६) ।

‖ "विप्रः"-इति मेधाविनामसु प्रथमं नैघण्टुकम् (३, १५) ।

** "धीतयः"-इति अङ्गुलिनामसु सप्तमं नैघण्टुकम् (२, ५) । 'धीतिभिः-कर्मभिर्बुद्धिभिर्वा'-इति वि० । वस्तुतोधीतिशब्दो यज्ञार्थः ।

†† 'शुम्भ शोभायाम् (भ्वा०प०)'-इत्यस्य रूपम् । 'शुम्भन्ति शोभन्ते अलङ्कुर्वन्ति'-इति च वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१२३ २३ १२ ३१२ २क २र ३ २
असर्जिरथ्योयथा*पवित्रे चम्वोःसुतः।

१२ ३ १ २
कार्ष्मन्वाजीन्यक्रमीत्॥ ४॥ २४†

४र ३ ४ ५ ३ २ ४ ५ १ २
आविशन्कलशम्। सुताइः। वाइश्वाः। अर्षन्।

१ २ ३र २ ५ १ २र
अभाइश्राया। औहोहोर३४वा। औहोहो१इ। इ-

२ १र ३ ५र २ २
न्दूरा१इन्द्रा२। य। धीयार्२तार३४औहोवा। ऊ-

५
२३४पा॥ २५॥ २३

‡"सुतः" अभिषुतः "सोमः" "कलशं" द्रोणम् "आ विशन्" "विश्वाः" सर्वाः "श्रियः" सम्पदः "अभ्यर्षन्"¶ अभितो गमयन् "इन्दुः" दीप्तः सोमः§ "इन्द्राय" इन्द्रार्थं "धीयते" दशापवित्रे अध्वर्युभिर्निधीयते॥॥ ३॥ २३

---

* "यथा"-इति ऋ०।

† ऋ० ६, ८, २९, १।

‡ इहापि सायणीयर्षिसंवादोनास्ति। 'असितः काश्यपः'-इति ऋषि-नैगेयः।

¶ "अरुषति"-इति गतिकर्मसु पठ्यते, तस्यैव रूपमिदम् (नै० २, १४)।

§ योगार्थो दीप्तः स इह विशेषणम्, रूढार्थः सोमः स एव विशेष्यं पदम्।

‖ "अभिस्पृहः"-इत्येव विवरण-सम्मतः पाठ, अतएवोक्तम्,—'अर्षन् चरति, अभिस्पृहः स्पृहणीयाः'-इति ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

२उ २ १ २१ ३ २ ३ २ ३ १ २
प्रयद्गावो*नभूर्णयस्त्वेषाअयासोअक्रमुः† ।
१ २ ३ २उ ३ र २
घ्नन्तः कृष्णामपत्वचम्॥ ५ ॥ २५ †

५ २ १र २
(सोमसाम॥) असर्जिरा। थि। योया२३था। प-
१ २र १ ० ३ ५ २र १ २ १
वित्रे। चा। मुवोऽ२ःह्र२३४ता:। कार्ष्मन्वा२३जी। नि-
२ १ ४ ५ ४
यक्रमाइत्। औ२३होवा। होऽ५इ। डा॥ २६॥ २४

प्रभूवसुर्ऋषिः‡। "रथ्यीयथा" रथसम्बन्धी अश्व इव स यथा विसृज्यते यद्वा तद्वत् "चम्वोः" अधिषवण-फलकयोः "सुतः" अभिषुतः सोमः "असर्जि" "पवित्रे" सृष्टोऽभूत्। तथाभूतो "वाजी" वेगवान् ¶ सोमः "कार्ष्मन्" § कार्ष्मणि युद्धे इतरेतराकर्षणात्। अत्र देवानामाकर्षणवति यज्ञाख्येसङ्ग्रामे "न्यक्रमीत्" नितरां क्रामति॥ ४॥ २४

---

* "प्रमेगावी" इति ऋ०।

† उ० २, १, ३, १ = ऋ० ६, ८, ३१, १।

‡ "आङ्गिरसः"-इति ऋषि-नैगेयः।

¶ 'वाजी अन्नवान्'-इति वि०।

§ "कार्ष्मन्"-इति सुब्लुकि रूपम् (७, १, ३९)। युद्धार्थं प्रवृत्तिनिमित्त माह— 'इतरेतराकर्षणादिति। यज्ञवाचित्वेऽपि तदेव प्रवृत्ति निमित्तमिति दर्शयन् इष्टार्थविधिं सङ्गमयति अत्रे त्यादिना।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २र र १ २
(काण्वं द ॥) प्रयद्गाउ। गावोना३भूर्णा१या२३४ः।
१र २ १ ऽर र १ २
त्वेषा३ः। आया२सोअक्रमुः। घ्नन्ताःका२३ष्णा॑म्। अ
१ २ र १ २ ५र र २ ५
पात्वचम्। औहो२हा२३४औहोवा। ऊ३२३४पा ॥ २७॥

२ १ २ ४र ५र १ र २ र १ ०
प्रयद्गा३वोनभूर्णयाः। त्वाइषाअया। सोअक्रमू२३ः।
१ र ५ १ ३ ५र र १ २ १ २ १ १ १
घ्ना२३४न्तोहाइ। का२ष्णां२३४औहोवा। अपत्वचा२३४
पूम्॥ २८॥ २५

मेध्यातिथिर्ऋषिः*। "यत्" ये "भूर्णयः†" चिप्राः "त्विषाः" दीप्ताः‡ "अयासः" अयाः गमनकुशलाः "कृष्णां" ¶ "त्वम्" "अप घ्नन्तः" अभिषवेण निरस्यन्तः [ त्वचिः सम्बरणकर्मा § (तु० प०)। इदृग्भूताः सोमाः "प्राक्रमुः" यज्ञं प्रवर्त्तयन्ति। तत्र दृष्टान्तः—"गावोन" उदकानीव ‖ तानि यथा चिप्रमधः पतन्ति तद्वत्। गावएव वा उपमीयते तायथा स्वगोष्ठमाशु

---

* "काण्वः"-इति ऋपि० नै०।

† 'भूर्णयः भरणशीलाः'-इति वि०। भूर्णयः-भ्रमणशीलाः, भरणशीलास्वान्यत्र (प्र० ६१० पृ० द्र०);

‡ 'त्विषदीप्तौ (भ्वा० उभ०)'-इत्यस्य रूपम्। 'दीप्ता-मद्दान्तः'-इति वि०।

¶ कृष्णां रात्रिं कृष्णारूपाम्, अपलचं अपर्णां रात्रेः कृष्णांश'-इति वि०।

§ सम्बरणमाच्छादनम्।

‖ गोशब्दो बह्वर्थः परमुदकार्थो न नैघण्टुकः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

२ १ २ ३ १ २ २ १ २ २ २
अपघ्नन्पवसेमृधःक्रतुवित्सोममत्सरः।
३ १र २र ३ १ २
नुदस्वादेवयुंजनम्॥ ॥२६*

५ ४र ५ १ २
(वैश्वदेवम्॥) अपघ्नौ। होइपावा। साइमा१ई
१ २ र १ २ १ १
रः। क्रातुवित्सो। ममात्सा१रा२ः। नुदा२३। स्वा-
३ ५र र २ १ १११११
२दा२३४औहोवा। वयुंजना२३४५म्॥२८॥२६

गच्छन्ति¶ तद्वत्। अथवा गावः स्तुतिवाचः‡ ता यथा स्तुत्यं प्रति क्षिप्रं प्राप्नुवन्ति, तद्वत् यत्र प्रवर्त्तयन्ति¶ तान् स्तवे—इति शेषः॥

"यत्"--"ये" इति साम्नऋचः पाठौ॥५॥२५

अस्याः परस्याश्च निध्रुविर्ऋषिः§। हे "सोमः!" "मत्सरः" मदकरः॥ यः त्वं "मृधः" हिंसकान् शत्रून्** "अप घ्नन्" मारयन्

---

* उ० ५, १, १५. २ = ऋ० ७, १, ३४, ४ = ऊहे ४, २, १७ — १८ — १९ — २०;—१७, १, १;—ऊह्ये १, २, २।

† अरुणो गाव उषसां वाहनभूताः (१, १५ नै०)।

‡ निघण्टु-प्रथमैकादशं द्रष्टव्यम्।

¶ 'गावः रश्मयः'-इति वि०। 'गावः'-इति रश्मिनामसु तृतीयं नैघण्टुकम् (१,५)।

§ "काश्यपः"-इति ऋषि-नैर्गेयः।

‖ 'मदनीयोभक्षणीयश्च'-इति वि०।

** 'मृधः सङ्ग्रामान् पाप्मनश्च'-इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ ३ १ २ ३ २ ३ २ ३ १ २
अयापवस्वधारयायया सूर्यमरोचयः।
३ १२ २२ ३ २
हिन्वानोमानुषीरपः ॥ ७ ॥ २७*

(वैश्वदेवᳪसूर्य्यसाम ॥) एअयापवा। स्वधा२। र
या३१उवा२३। ऊ२३४पा। ययासूर्यमरो२। चया३१
आवा२३। ऊ३४पा। हिन्वानोमानुषा२२इहोइ। आ-
पआ३१उवा२३। ऊ२२३४पा ॥ ३० ॥ २७

"क्रतुवित्" अस्मभ्यं प्रज्ञां प्रयच्छन्† "पवसे" चरसि स त्वं "अदेवयुं" अदेवकामं जनं‡ राक्षसवर्गं "नुदस्व" प्रेरय ॥६॥ २६

हे सोम! "मानुषीः" मनुष्याणां हितानि¶ "अपः" उदकानि "हिन्वानः" प्रेरयन्§ त्वं "यया" धारया "सूर्य्यम्"

---

* उ० ५, १. ८, २=ऋ० ७, ३१, २।

† 'क्रतुवित् कर्मवित्'-इति वि०।

‡ यो देवान् यष्टुं न कामयते इत्यर्थः।

¶ 'मनुष्याणां भवाः'-इति वि०।

§ हिन्वान इति 'हिवि प्रीणने (स्वा० प०)'-इत्यस्य रूपम्। 'हिन्वानः सेवमान -इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

अथाष्टमी ।

१ २ ३२उ ३ १ २ ३२ ३१ २
सपवस्वय आविथेन्द्रं वृत्राय हन्तवे ।
१ १ २ १ २ ३ २
ववृवांऽसं* महीरपः ॥ ८ ॥ २८†

२ २ २ ३ ५ १
(वार्त्रघ्नम् ॥) स हो३४३इ । पवस्व । यआ२
१ २ १ २ १ २ ३ ५ १ २ ४ ५
विथा । इन्द्रं वृत्रा३ । याहन्ता२३४वे । ओवा३ओवा ।
२ १ २ १ २र १ २ ४ ५ ४
वव्रिवा२३ऽसाम् । माहीरपा । औ३होवा । हो५इ ।
डा ॥ ३१ ॥ २८

"रोचयः" प्रकाशयः । तथा "अया" अनया धारया "पवस्व" चर ॥ ७ ॥ २७

अमहीयुर्ऋषिः‡ । हे सोम ! यस्त्वं "महीः" महतीः "अपः" महान्त्युदकानि "वव्रिवांसं" निरुन्धानं¶ "वृत्राय" वृत्रं§ "हन्तवे"‖ हन्तुं "इन्द्रम्" "आविथ" अरक्षः** 'स' त्वं "पवस्व" धारया चर । सोमं पीत्वा मत्तः सन्निन्द्रो महान्त्युदकानिरुन्धानं वृत्रं जघानेत्यर्थः ॥ ८ ॥ २८

---

* "वव्रिवांसं"-इति सर्वव्याख्यातृ-सम्मतः पाठोगानग्रन्थसम्मतश्च ।
† ऋ० ९, १, २२, २ ।
‡ "आङ्गिरसः"-इति ऋषि-नैगेयः ।
¶ 'वव्रिवांसं चरणस्वभावम्'-इति वि० ।
§ 'वृत्राय मेघाय' इति वि० ।
‖ "तुमर्थे सेसेन् ( ३, ४, ९ )"-इत्यादिना सिद्धम् ।
** 'आविथ अवेस्तर्पणार्थस्य, तर्पयसि'-इति वि० ।

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

३ २ ३ १र २र ३ १ २ ३ २ ३ २
अयावीतीपरिस्रवयस्तइन्द्रोमदेष्वा ।
३ १ २ ३१ २र
अवाह्ननवतीर्नव ॥ ९ ॥ २९*

५ र र २र १
(सोमसामानि त्रीणि ॥) अयावीती । पारिस्रवा ।
१ १ १र १ १ २ २ २१
यस्तइन्दाउ । मादाइषुवा । अवाहा३न्ना३ । वतो२३
५ ४ ५
४वा । नाधुवो६हाइ ॥ २२ ॥

२१र र २ २र १ २ २र २ २र र
अयावीता । औहोवा । औहो३४इ । औ । हो२ ।
२ ५र र १ २ १ २ ३र १
वा२३४ । औहोवा । परिस्रव । यस्तइन्दा । औहो
१ ३र २र १ २ ५र र
वा । औहो३४इ । औ । हो२ । वा२३४ । औहोवा ।
१ ऽर १र र २ ३र १ २ ३र २
मदे२षुवा । अवाह्नना । औहोवा । औहो३४इ ।
२र १ ३ ५र र २१र १११
औ । हो२ । वा२३४ । औहोवा । वतीर्नवा२३४५ ॥ २३॥

४ ३ र ४ २ ४ ५ १ २ र १
अयाऽ५वी । ता३इपा३रिस्रवा । यास्तइन्दो । मदा

* उ० ५. १, ६, १ = ऋ० ६, ७, १९, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

१ २ ३ १र　२र३२उ ३१ २ ३ १२
परिद्युक्षꣳसनद्रयिम्भरद्वाजंनोअन्धसा ।

२　　१ २ २　३र२१　२ ४ ५
इषूऽवा२ । अवाहाऽन्ना । वतीर्नवा । औऽहोवा ।

४
होपुइ । डा ॥ ३४ ॥ २९

अमहीयुर्ऋषिः* । हे "इन्दो" सोम ! "अया" अनेन रसेन "वीती"† वीत्यै इन्द्रस्य भक्षणाय‡ "परिस्रव" परिक्षर । कीदृशेन रसेनेत्यत आह "ते" तव "यः" रसः "मदेषु" सङ्ग्रामेषु¶ "नवतीर्नव" नवनवति-सङ्ख्याकाः§ शम्बरपुरीः‖ "अवाहन्" जघान (अमुं सोमरसं पीत्वा मत्तः सन्निन्द्रः उक्तसङ्ख्याकान् शम्बरपुरीर्जघानेति मत्वा रसो जघानेत्युपचारः ॥ ८ ॥ २९

---

* "आङ्गिरसः"-इति ऋषि-नैगेयः ।

† पा० ३, ३, ९६ । ७, १, ३९ ।

‡ "वीतिः कान्तिः, मार्गो वा तेन परि स्रव परिसमन्तात् स्रव'-इति वि० । इह नये कान्तिकर्मणोवेतेरिदं ( नै० २, ६, ३ ) रूपमिष्टम् ।

¶ 'मदेषु पुरतोऽव्यवस्थितेषु'-इति वि० ।

§ अष्टौशतानि दशोत्तराणि ।

‖ शम्बरइति निघण्टौ मेघनामसु ( १, १० )—उदकनामसु ( १, १२ ) बलनामसु ( २, ९ ) च दृश्यते । ऐतिहासिकस्तु शम्बरनाम दैत्यविशेषः, तद्वधोपाख्यानं भागवतादौ ( १०, ५५ ) द्रष्टव्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ ३ २ ३ २ २ २ २
स्वानोअर्षपवित्रआ ॥ १० ॥ ३० *

॥ इति प्रथम-दशति ॥

(भारद्वाजम्॥) ५परिद्यु॒क्षाम्। १औइ। सनद्रायी
२म्। भरद्वाजा२म्। १औइ। २नोअन्धासा२३४। ३२स्वा
२नो३४अर्षा३। ३२पवी४वा। ५ ४पुर्या४ई३हाइ ॥ ३५ ॥ ३०

॥ इति ग्रामे गेये त्रयोदशः-प्रपाठकः ॥

उवथ्यऋषिः†। "द्युक्ष" दीप्तं‡ "सनत्" दीयमानं¶ सैन्य वा "रयिम्" धनं यस्य तादृशं "वाजं" बलं "अन्धसा"§ अन्नेन सह सोमः "नः" अस्माकं|| "परिभरत्" परतोहरतु प्रयच्छत्वित्यर्थः। अथ प्रत्यक्षस्तुतिः--हे सोम! "स्वानः" सुवानोऽभिषूयमाणस्त्वम् "पवित्रे" "आर्ष" आभिमुख्येन-चर।

"द्युक्षᳬसनद्रयिं"-"द्युक्षःसनद्रयि"-इति, "स्वानः"-"सुवानः"-इति च साम्नऋचः पाठौ ॥१० ॥ ३०

इति श्रीसायणाचार्य्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

* ऋ० ७, १, ९, १।

† "आङ्गिरसः"-इति ऋषि नै०।

‡ "द्युतौ क्षियन्तइति द्युक्षम्"-इति वि०।

¶ 'सनत् चिरन्तनम्'-इति वि०।

§ 'अन्धसा तर्पितः'-इति वि०।

|| "नः अस्मान् प्रति'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थे खण्डे—

सैषा प्रथमा ।

१ २   ३ २ ३ १ २ ३ २ ३ १र २र ३ २
अचिक्रदद्वृषा हरिर्महान्मित्रो न दर्शतः ।
१र २र
सꣳ सूर्येण दिद्युते ॥ १ ॥ ३१

ओम् ॥ (वार्षाहरम् ॥) अचिक्रदा३त् । अचिक्रदा ५द्दे । वृषाहरा३इ । वार्षाहरा३इ । वृषाहरा५ए । महान्मित्रा३ः । माहान्मित्रा५ए । महान्मित्रा५ए । नद-र्शता३ः । नादर्शता३ः । नदर्शता५ए । सꣳ सूरिया३इ । साꣳ सूरिया३इ । सꣳ सूरिया५ए । णादिद्युता३इ । णादि द्युता३इ । णदा५इद्युताउ । वा ॥ १ ॥ ३१

मेध्यातिथिर्ऋषिः† । "वृषा" कामानां वर्षकः "हरिः" हरित-वर्णः "महान्" पूज्यः "मित्रो न" यथा सखा तद्वत् । "दर्शतः" दर्शनीयोयः सोमः "अचिक्रदत्" शब्दङ्करोति सोयं सोमः "सूर्येण" सह "दिद्युते" दिवि प्रकाशते ॥ [ "दिद्युते"-"रोचते" -इति साम्नऋचः पाठौ ॥ १ ॥ ३१

* उ० ४, १, ३, ९ = ऋ० ६, ७, १९, १ ।

† "काण्वः"-इति ऋषि-नि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ १ २ ३ २ ३ १ २ ३ १ २

आ ते दक्षम्मयोभुवं वह्निमद्या वृणीमहे।

३ १ २ ३ १ २

पान्तमापुरुस्पृहम्॥ २॥ ३२*

५र २ २ १ २ २

(वार्षाणि त्रीणि॥) आतेदक्षाम्। मयोभूइवाम्।

१ २ १ ७ २ ५ १ २ ऽ २

वह्निम। द्या। वृणीरमार३४ हाइ। पान्तमा३। ईइया।

१ १ २ ५र र २ ५

पुरू२३। स्पृरहा२३४ औहोवा। ऊ२३४पा॥ २॥

२ २ ५ २ ३ ५ २ ४

आतेदा२३४क्षाम्। मायोभू२३४वाम्। वह्नि-

३र ४ ५र ३ ५ १ २ २ ऽ २

मद्यावृणी। महो२३४ हाइ। पान्ता३मा३। ईइया३।

१ २ ५र र ३ ५

पूरुरू२३४ औहोवा। स्प२३४हाम्॥ ३॥

३र ४र ३ ४ ५ ३ ५ ३ ४ ३र ४ ५ र

आतेदक्षम्मयः। भुवो२३४हाइ। वह्निमद्यावृणी।

३ ५ १ २ १ २ १

महो२४४हाइ। पान्ता१मा२। पूरुस्पृहम्। इडा२३

२ १

भा३४३। ओ२३४५इ। डा॥ ४॥ ३२

---

* उ० ४, २, २, १० = ऋ० ७, २, ७, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३ १ २ ३ १र २र ३ २ ३ १ २
अध्वर्यो अद्रिभिः सुतꣳ सोमम्पवित्र आनय

३ १ २ ३ १ २
पुनाहीन्द्रायपातवे ॥ ३ ॥ ३३*

२ १ ५ २ १ ७ २
( वैरूपे द्वे ॥ ) अध्वर्यो२३४आ। द्रिभाइः सुऽता

१र ३ ५ १ २ १
३म्। सोमा२म्पा२३४वी। त्राआ१नाया२। पुना-

र २ ५र र २र १२ २ १ १ १ १
२३। हीन्द्रा३४औहोवा। यपातवे२३४५॥ ५॥

४ ५ र ५ ५ २ १ ६ २ २
अध्वर्यौ। होअद्री। भिःसुतम्। औ३हो३वा३।

भृगुर्ऋषिः†। हे सोम! यष्टारो वयं "तं" तव स्वभूतं "दक्षं" बलम् "अद्य" अस्मिन्यागदिने "आ" आभिमुख्येन "वृणीमहे" सम्भजामहे। कीदृशम्? "मयोभुवं" सुखस्य भावयितारं "वह्निं" धनादीनां प्रापकम्‡ "पान्तं" ग्रतृभ्योरक्षकम्। "पुरुस्पृहं" बहुभिः स्पृहणीयं काम्यमानम्बलमिति ॥ २ ॥ ३२

* उ० ५, १, ११, १ = ऋ० ७, १, ८, १ = जहे ४, १, २० ;—४, २, १—२—३—४-५—६ ;—१६, २, १३—१४ ।

† 'वारुणिः—भार्गवो वा जमदग्निः'-इति ऋषि-नै० ।

‡ 'वहेयागिकार्यएवेहेष्टः ( भा० उ० )।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथचतुर्थी।

२ ३ २ ३ १ २ ३ १ २ ३ १र २र
तरत्समन्दीधावतिधारासुतस्यान्धसः।
३ २ ३ १ २
तरत्समन्दीधावति ॥ ४ ॥ ३४*

१र ३ ५ १ २ १ १
सीमार्‌स्या२३४वी। ओवाआ१नाया२। पुना२३। हा२इ
३ ५र २ २ १र २ ३ १ १ १ १
न्द्रा२३४औहोवा। यपातवे२३४५ ॥ ६ ॥ ३३

५ २र १ २ १र
(तरन्त: ॥) तरत्समा। दीधावा१ता२३इ। धारा-
३ ५ २ १ १ ३ ५र २ १
२सू२३४ता। स्यआ२३१धा२सा२३४औहोवा। तरत्सम
२ २र २ २ १ १ १
न्दीधावती२३४५ ॥ ७ ॥ ३४

उचथ्यऋषि:†। हे "अध्वर्यो!" "अद्रिभि:" ग्रावभि: "सुतम्" अभिषुतं सोमं "पवित्रे" "आनय" प्रापय। एतदेव दर्शयति—"इन्द्राय" इन्द्रस्य "पातवे" पानाय "पुनाहि" पुनीहि पावय‡ ॥

"पुनाहि"-"पुनीहि"-इति, "आनय"-"आसृज"-इति च साम्नऋच: पाठ: ॥ ३ ॥ ३३

* उ० ४, १. ५, १ = ऋ० ७, १, १५, १=आर० १, २, १४।

† "आङ्गिरस:"-इति ऋषि-नि०।

‡ 'पूतं कुरु'-इति स्पष्टं विवरणे।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अवत्सारऋषिः*। "मन्दी" देवानां हर्षकः स सोमः "तरत्" स्तोतॄन् पाप्मनः सकाशात् तारयन् "धावति" द्रोणकलशङ्गच्छति†। धावतीति पुनरपि तदेवाहाभ्यस्त्वा दरार्थं तरत्सन्दद्दीधावतीति। यद्वा। अस्यऋचोयास्केनोक्तार्थो द्रष्टव्यः। तद्यथा—"तरति स पापं सर्वं मन्दी यः स्तौति धावति गच्छत्यूर्ध्वां गतिन्धारा सुतस्यान्धसोधारयाभिषुतस्य मन्त्रपूतस्य वाचा स्तुतस्येति (नि० प० १२, ६)"॥ ४ ॥३४

---

* "काश्यपः"-इति ऋषि-नैगेयः।

† अत्रेदं विवरणम्—"तरत्। विनियोगोऽस्य षष्ठेऽहनि। चतुर्ऋचोभवति प्रतिष्ठायै। प्रतिष्ठायै यजमानाय ध्वस्रो वै पुरुषन्ती तरन्तध्वस्रावर्वेद्य स्त्रियः पुरुषन्त्यो बहु सम्भजन्त्यो बहु पुरुपन्तरन्त-पुरुमीढाभ्यामृषीभ्या वैददश्विभ्यां सहस्राणि अदित्सताम् दातुमिच्छन्ताम् तौ पुरुमीढे ईचेता मनसां ग्राह्यमग्राह्यमिति। कथं केन प्रकारेण नौ आवामिदम्। आत्तम् अप्रतीगृहीतं स्यादिति। तौ प्रत्येतां चतुर्ऋचप्रत्यर्थं ध्वस्रयोः। पुरुषन्त्योरमन्त्योः आददाते सहस्राणि आत्तवन्तौ तरत् तरन् प्रतिग्रहदोषतः मन्दी सोमः धावति शोधयति। तयोर्विज्ञातयो आत्तं गृहीतम् अप्रतिगृहीतं भवति अन्यत्रापि आत्तं अस्य अप्रतिगृहीतं भवति गृहीतमपि यः। एवं विजानाति विनाशं सो भवति। तरन्त-पुरुमीढौ उभयस्याचाद्यस्यावरुध्यौ। मनुष्यस्य च दैवस्य च अवरोधनार्थं तथाच गौतमः—'अप्रतिग्राह्यं प्रतिजिघृक्षन् प्रतिगृह्य वा चतुर्ऋचं तरत्समन्दीत्यप्सु जपेत्॥ तरत सः मन्दी सोमः धावति शोधेति। गच्छति वा शोधयति वा शोधयति वा पाप। न केवलं सोमः धारा अपि सुतस्य अन्धसः अन्नस्य सोमलक्षणस्यातरत्। तरति स पापं यस्य मन्दी धावति शोधयति उक्ता मध्यमिका वाक् धारा वा वेद विजानाति। वसूनां मर्त्यस्य देवो अवसः एवंगुणविशिष्टा धारा। ध्वस्रयोरिति व्याख्याता। आययोः पुरुषन्त्याः तृणतं तृणच्छतानि शतानां सहस्राणि च आददाते—तरत्समन्दीध्वति॥"-इति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ १ २
आपवस्वसहस्रिणꣳरयिꣳसोमसुवीर्य्यम्।
३ १ र १ र
अस्मेश्रवाꣳसिधारय॥ ५॥ ३५ *

५र १
(सोमसाम॥) आपवस्व।। सहस्रिणम्। ऊवाइ।
१ २ १र २ र १
ऊवार२३हो। रयिꣳसोमा। सुवीरियाम्। ऊवाइ।
१ २ र १ २ र १
ऊवार२३होइ। अस्मेश्रवा। सिधारया। ऊवाइ। ऊवा
१ २ ५र र ३ ५
२३होर। वा२३४औहोवा। ऊ२३४पा॥ ८॥ ३५

निध्रुविऋषिः†। हे "सोम!" त्वं "सहस्रिणं" बहु-सङ्ख्याकं "सुवीर्यं" शोभन-सामर्थ्योपेतं "रयिं" धनं "आ पवस्व" आभिमुख्येन चर। अपिच "अस्मे"‡ अस्मासु "श्रवांसि" अन्नानि "धारय" स्थापय॥ ५॥ ३५

---

* ऋ० ७, १, ३०, १।

† "काश्यपः"-इति ऋषि-नै०।

‡ अस्मे इति, अस्मदः सप्तविभक्तिकमेव रूपं भवति। तत्र सुपामित्यादि (७, १ ३९) शेश्छन्दसीति च (६, १, ७०) सूत्रं स्मर्त्तव्यम्। तत्तथैव श्रूयते बह्वृचि। तद्यथा—"अस्मे ते बन्धुः (१, २, १५, ७)"-इत्यत्र वयमित्यर्थः। "अस्मे यातं नासत्याः सजोषाः (३, ३, १, १९)"-इत्यत्र अस्मानित्यर्थः। "अस्मे समानेभिर्वृषभ पौंस्येभिः (३, २, ७, १०)"-इत्यत्र अस्माभिरित्यर्थः। "अस्मे प्रयन्धिमघवन्नृजीषिन्



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथषष्ठी।

१ २ ३१ २ ३ १ २ ३१र २र
अनुप्रत्नासआयवःपदन्नवीयोअक्रमुः।
३१ २ ३ १ २
रुचेजनन्तसूर्य्यम्॥ ६ ॥ ३६ *

५ र र ५ २१
(सूर्यसाम॥) अनुप्रत्नासआयाइवाः। पदन्न
र र ७ २ २ १ २
वीये। अक्रमूः। रुचाइजना। ता३सू। ऊम्माये३।
५
री२३४याम्॥ ८ ॥ ३६

†"प्रत्नासः" पुराणाः केचिद् "आयवः" गमनवन्तोऽश्वाः "नवीयः" नवतरं "पदं" "अन्वक्रमुः" अनुक्रमन्ते (रूपकव्यवहारेण सोमाः स्तूयन्ते) "रुचे" दीप्त्यै तदर्थं "सूर्य्यं" "जनन्त" जनयन्ति‡॥ ६ ॥ ३६

---

(६, ४, ४, १२)"-इत्यत्र अस्मभ्यमित्यर्थः। "अस्मे आराचिद् द्वेषः सनुतर्युयोतु (६, ६, १०, २)"-इत्यत्र अस्मदित्यर्थः। "ऊर्व इव पप्रथे कामो अस्मे (७, ३, १, १०)"-इत्यत्र अस्माकमित्यर्थः। "अस्मे धत्त वसवो वसूनि (७, ४, ८, ५)"-इत्यत्र अस्मास्वित्यर्थश्चेति॥

* ऋ० ६, ८, १३, २।

† ऋषिः स एव।

‡ अत्रेदं विवरणम्—"अनुप्रत्नासः पुरातनाः आयवः मनुष्याः वसिष्ठादयः पदं पद्यते उत्पाद्यते संसाराख्यं नवीयो नवतरं अस्मिन् कल्पे अक्रमुः क्रमितवन्तः भवेदीप्त्यर्थं जनन्त जनयन्त ? र्य्यम्।"-इति॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

१ २ ३ १ २ ३ १र २र ३ १ २
अर्षासोमद्युमत्तमोभिद्रोणानिरोरुवत् ।
३ २ ३ २ ३ २
सीदन्योनौवनेष्वा ॥ ७ ॥ ३७*

(दाढेच्युतानि त्रीणि ॥) अर्षा । इहा । सोम द्युमा२त्तमा । इहा । अभाइ । इहा । द्रोणानिरी२ रुवा । इहा । सीदा । इहा । योनौवना२इषुवा । इहा१ ॥ १० ॥

अर्षाहाउ । सोमद्युमत्तमो । भिद्रो२३णा । निरा औ३हो । रुवा२३त् । सीदाउवा । योनौवा३ने । ऊम्मायेः३ । षू२३४वा ॥ ११ ॥

अर्षासोमद्युम । त्तमाः । अर्षासोमा । द्यूमत्तमः । अभिद्रोणा२३हा । निरोरुवत् । साइदन्योना२३ऊहाइ । वनाइषू३२वा३४३ । औ२३४५इ । डा ॥ १२ ॥ ३७

* उ० ३, २, ११, १ = ऋ० ७, २, ४, ४ = ऊह्ये ३, १, ३—४ ; — ७, २, १३ = ऊह्ये १, १, ११ ;— १, २, १३ ;—१, १, ३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

१ २ २ १ २ ३ १ २ ३ २ २
वृषासोमद्युमाँ असिवृषादेववृषव्रतः ।
३ १ २
वृषाधर्म्माणिदधिषे ॥ ८ ॥ ३८ *

५ र र २ १
( वृषकम् ॥ ) वृषासोमा । द्युमाँ २ आसा
१ २ २ १ २ ३ ५ १ १
२इ । वृषादेवा२वा३इ । वार्षव्रा२३४ता: । वृषाधर्मा

भृगुर्ऋषिः† । हे "सोम !" "द्युमत्तमः" अतिशयेन दीप्तिमान् त्वं "द्रोणानि" ( प्रयोगबाहुल्यापेक्षमेतद्बहुवचनम् ) द्रोणकलशानभिलक्षीकृत्य "रोरुवत्" पुनः पुनर्भृशं वा शब्दं कुर्वन् "अर्ष" आगच्छतु दशापवित्रमध्यान्निर्गतः सोमः अविच्छिन्नधारया पतन् शब्दङ्करोति खलु । तत्र दृष्टान्तः—"वनेषु" वननीयेषु‡ यज्ञेषु वनसम्बन्धिषु यज्ञगृहेषु वा¶ "योनौ" स्थाने§ "आसीदन्" यद्वा । वनेषु योनौ भूमौ आसदन् पूर्वं स्थितः सन् यज्ञगृहं अभ्यर्षयति सम्बन्धः ॥

"सीदन्योनौवनेष्वासीदन्"-"श्येनोनयोनिमेतिसाम्नऋचः पाठौ ॥ ७ ॥ ३७

---

* उ० २, १, ३, १ = ऋ० ७, १, २९, १ ।

† "वारुणिः"-इति ऋषि-नैगेयः ।

‡ 'वनु षणु सम्भक्तौ ( भ्वा० प० )'-इत्यस्येदं रूपमिष्टमित्यभिप्रायः ।

¶ 'वनेषु उदकेषु'-इति वि० ।

§ "योनिः"-इति गृहनामसु चतुर्दशं नैघण्टुकम् ( ३, ४ ) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

३ १ २ ३ १ २ ३ १ २ ३ १ २
इषेपवस्वधारयामृज्यमानोमनीषिभिः।

१ २ ३ १र २र
इन्दोरुचाभिगाइहि ॥ ९ ॥ ३९ *

५ २ १ २र २ १
३। ई३या। णाइदध्रिषे। इडा२३भा३४३। ओ२३

४५इ। डा ॥ १३ ॥

५र २र र र २
(ऐषम॥) इषेपवा। स्वधारयौहोवा३हा३४।

५र र २ १ ५र र र १ २ ३ २र ३ ५र २
औहोवा। मृज्यमा२नोमनीषिभिः। इन्द्रोरुचा। अभि

र र २ ५र र १ २ ३ १ १ १ १
गौहोवा३हा३४। औहोवा। उप्। इडी२३४५॥१४॥३९

काश्यपऋषिः†। हे "सोम!" "वृषा" कामानां वर्षकस्त्वं "द्युमान्" दीप्तिमान् "असि"। अपिच हे "देव" द्योतमान सोम! "वृषा" त्वं "वृषव्रतः"‡ वर्षणशीलकर्म्मासि। किञ्च हे सोम! "वृषा" त्वं "धर्म्माणि" देवानां मनुष्याणां च हितानि कर्म्माणि¶ "दध्रिषे"-"दधिषे"-इति पाठौ ॥ ८ ॥ ३८

---

* उ० २. २, ४, १ = ऋ० ७, १, ३८, ३।

† "मारीचः"-इति ऋषि-नै०।

‡ "व्रतम्"-इति कर्मनामसु सप्तमं नैघण्टुकम् (२, १)।

¶ 'धर्माणि धारणानि'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

३ १ २  ३ १ २ ३ १ २  १ २
मन्द्रयासोमधारयावृषापवस्वदेवयुः ।
३ १ २  ३ २
अव्यावारेभिरस्मयुः ॥ १० ॥ ४०*

५ ४  ११२  २
(श्यावाश्वम् ॥) मन्द्रयासो । मधारया । वृषापा

२  १  २  १  १ २
स्वा । स्वदाद्वा२३यूः । अव्या२३ः । वा२रा२३४

५ २ २  २ ५ २
औहोवा । भिरस्मयू१ः ॥ १५ ॥ ४०

कश्यपऋषिः† । हे "इन्दो" सोम ! "मनीषिभिः" ऋत्विग्भिः‡ "मृज्यमानः" शोध्यमानस्त्वं "इषे" अस्माकमन्नाय¶ "धारया" "पवस्व" क्षर "रुचा" रोचमानेनान्धसा§ "गाः" पशून् "अभीहि" अभिगच्छ ॥ ९ ॥ ३९

असितऋषिः‖ । हे "सोम !" "वृषा" कामानां वर्षिता "देवयुः" देवकामः "अस्मयुः" अस्मत्कामस्य त्वं "अव्या" अवेः

---

* ऋ० ९, ७, २९, १ ।

† "मारीचः"-इति ऋषि-नैगेयः ।

‡ "मनीषी"-इति मेधाविनामसु एकादशं नैघण्टुकम ( ३, १५ ) । 'मनसः ईषया स्तोतारः' इति वि० ।

¶ "इषम्" इति अन्ननामसु चतुर्दशं नैघण्टुकम ( २, ७ ) ।

§ 'रुचा दीप्त्या'-इति वि० ।

‖ "काश्यपो देवलो वा" इति ऋषि नैगेय ·

९ ख,

Digitized by Madhuban Trust, Delhi



अथैकादशी।

२ १ २ ५ १ १ २ २उ ३क २
अया सोम सुकृत्यया महांत्सन्नभ्यवर्द्धथाः।
३ १र २र
मन्दान इद्वृषायसे॥११॥४१*

५ ४ ३ ४ ५ २ १र
(अयासोमीयम्॥) अया३सो३मसुकृत्यया। महां
० ३ ५ १ २र १ २ २
त्सन्ना। भ्यवार्द्धा२३४थाः। मान्दानआयि३त्। वृषा३
४
या५सा६५ई॥१६॥४१

"वारेभिः" बलैः इति दशापवित्रे "मन्द्राय" मदकरया धारया "पवस्व" क्षर॥

"अव्यावारेभिः"-"अव्योवारेषु"-इति पाठौ॥१०॥४०

कविः ऋषिः†। हे "सोम!" "अया" अनया "सुकृत्यया" शोभनया अभिषवादि-लक्षणया क्रियया "महान्" पूज्यमानः "सन्" देवान् प्रति "अभ्यवर्द्धथाः" अभ्यवर्द्धयः। "मन्दानः इत्" मोदमानः एव "वृषायसे" वृषवदाचरसि यथा मोदमानो वृषभः शब्दं करोति तथाभिषववेलायां उपरवेषु शब्दं करोषीत्यर्थः॥

"अभ्यवर्द्धथाः"-"अभ्यवर्द्धत"-इति, "वृषायसे"-"वृषायते"-इति च पाठः॥११॥४१

---

* ऋ० ७,१,४,१।

† "भार्गवोऽयम्"-इति ऋषि-नैगेयः, "भारद्वाजः"-इति यजु०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी ।

३ १र २र ३ १र २र ३ १ २
अयंविचर्षणिर्हितःपवमानःसचेतति ।

३ २र २र ३ २
हिन्वानआप्यंबृहत् ॥ १२ ॥ ४२*

२ ३र ४र ५
(आग्नेयम् ॥) औ । होहोवाहाइ । अयंविचा ।

१ १ २ ३र ४र ५ र २
षणाइर्हाइता । औहौहोवाहाइ । पवमाना: । स

१ २ ३र ४र ५ र २ ३
चाइताता । औहौहोवाहाइ । हिन्वानआ । पियौ३

२ ४ ५ ४ ५
हौ३ । हवोवा । बृ५होइहाइ ॥ १७ ॥ ४२

जमदग्निः ऋषिः† । "विचर्षणिः" विद्रष्टा‡ "हितः" पात्रे निहितः "पवमानः" शोध्यमानः "अयं" सोमः "आप्यम्" अप्सु भवं "बृहत्" महत् अन्नं "हिन्वानः" प्रेरयन् "सचेतति"¶ सर्वैः सञ्ज्ञायते ॥ १२ ॥ ४२

---

* ऋ० ७, १, २५, ५ ।

† "भार्गवः"-इति ऋषि-नैगेयः ।

‡ "विचर्षणिः"-इति पश्यति-कर्मसु षष्ठं नैघण्टुकम् (३, ११) । चर्षणि शब्दव्याख्यानावसरे यास्कः "चायिता"-इत्याह (५,२४) । 'विचर्षणिः सर्वं पश्यति'-इति वि० ।

¶ 'सचेतति सम्यगानयति'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ त्रयोदशी।

१ २ ३ १र २र ३ १र १र
प्रन*इन्दोमहेतुन†ऊर्म्मिन्नबिभ्रदर्षसि।
२ ३१ २ ३ १ २
अभिदेवा१अयास्यः॥ १३॥ ४३ ‡

३४५ र र २ ३ ५
(आयास्यम्॥) प्रनइन्दोए। होऍहो२३४या।
२१र १ ऽ २ र १ १
महेतुनए २होऐ २हो३या। ऊर्मिन्नबिभ्रदर्षसऐ २होऐ
ऽ २ १ २ १ २ ५र र २१र
२हो३या। अभाये३। दा२ इवा२३४ औहोवा। अया
२ ३ १११११
सिया२३४५ः॥ १८॥

२ ४ ५ र २ २ ५
(आयास्यमुत्तरम्॥) प्रनइन्दो। इया३४३इ३४या।
२१र ऽ २ र १ ऽ २
महेतुनइया २इ३या। ऊर्मिन्नबिभ्रदर्षसइया २इ३या।
१ २ १ ३ ५र र २ २१र
अभाये३। दा२इवा२२४औहोवा। ए३। अया-
२ ३ १११११
सिया२३४५ः॥ १९॥ ४३

---

* "प्रण"-इति
† "महेतम"-इति च } —ऋ०।
‡ ऋ० ७, १, १, १

Digitized by Madhuban Trust, Delhi



अथ चतुर्दशी ।

२ १ २ ३१२ ३ २ ३ १ २
अपघ्नन्पवतेमृधोपसोमोअरावणः ॥

२ १ २ ३ २
गच्छन्निन्द्रस्य निष्कृतम् ॥ १४ ॥ ४४*

॥ इति द्वितीय-दशति ॥

२ ३ ५ ४ ५
(भारद्वाजम् ॥) चोई२३४या । २ । इयाहाइ ।

२ १ २ ३ १ १ १ २ ३ ५ ४ ५
अपघ्ना२३न्पा३४५ । चोई२३४या । २ । इयाहाइ ।

२ १ ३ ५ र र १ र २र
वताइ । मार । धा२३४ । औहोवा । अपसोमो२

१ २र १ १ १ २ ३ ५ ४ ५
अरा२वणा३४५ः । चोई२३४या । २ । इयाहाइ ।

अयास्यऋषिः† । हे "इन्द्रो" क्रियमाण !‡ त्वं "नः" अस्माकं "महे" महते "तुने"‡ धनाय¶ "प्रार्षसि" प्रगच्छति । "न" संप्रत्यर्थे§ अयास्यश्चायमृषिः तव "ऊर्मिं" तरङ्गं "बिभ्रद्" धारयन् देवान् यष्टुमभि गच्छति ॥ १३ ॥ ४३

---

* उ० २, ५, १, ७, १ = ऋ० ७, १, २२, ५ ।

† "आङ्गिरसः"-इति ऋषि-नैगेयः ।

‡ "इन्दुरिन्धे उनत्तेर्वा"-इति (४, ४१) यास्कोक्तेः उनत्तेर्योगार्थएवेह ग्राह्यते । उन्दी क्लेदने (र० प०) ।

¶ "तना"-इति धननामसु पठ्यते (२, १० नं०) ऋग्वेदेऽपपाठोऽपि 'तनं'-इत्यत्र ।

§ "अथ निपाता उच्चावचेष्वर्थेषु"-(नि० १, ४) इत्यादयुक्तं



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ १ १ १ २ २ ५ ४ ५
गच्छन्ना२३इन्द्रा२३४५। हो इ२३४या। २। इयाहाइ।
२ १ २ ५ र र २ १ १ १ १
स्यनाइ:। कार। ता२३४। औहोवा। इ२३४५॥२०॥ ४४

अमहीयुः ऋषिः*। "सोमः" "मृधः" हिंसकान् शत्रून्† "अपघ्नन्" मारयन् "अराव्णः" यज्ञे सत्यान् धनानामदातॄंश्च‡ अपघ्नन् "इन्द्रस्य" "निष्कृतं"¶ स्थानं "गच्छन्" प्राप्नुवन् "पवते" धारया चरति॥ १४ ॥ ४४

इति श्रीसायणाचार्य-विरचिते सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य चतुर्थः खण्डः ॥४॥

अथ पञ्चमे खण्डे—

सैषा प्रथमा।

३ १ २ ३ १ २ ३ १ र २ र
पुनानःसोमधारयापोवसानोअर्षसि।
१ २ ३ १ र २ र ३ १ २ ३ २ १ २ ३ १ २ ३ २ १ २
आरत्नधायोनिमृतस्यसीदस्युत्सोदेवोहिरण्ययः ॥१॥ ४५§

* "आङ्गिरसः"-इति ऋषि-नैगेयः।
† 'मृधः सङ्ग्रामान् पापनो वा'-इति वि०।
‡ 'अराव्णः अन्यताभिः शत्रवः'-इति वि०।
¶ 'निष्कृतं संस्कृतम्'-इति वि०, परिष्कृतमित्यर्थः।
§ उ० १, १, ९, १=ऋ० ७, ५, १९, ४=आर० १, १, १०=ऊहे १, १, १—३;—१, २, २०;—२, १, १;—४, १, १—५—६;—६, १, २—१२—१३;—६, २, २—१९;—१०, १, १२—१३—२०;—११, २, १९;—१३, १, ७—१९;—१३, २, १५;—१५, २, ३—४; १७, १, १०—११—१६;—१८, १, ७—२०—२१;—१९, १, २०;—२०, २, ११—१५—१६—१७;—२२, २, ८=ऊह्ये १, २, १०;—३, १, ९—२०,—४, १, ५;—४, २, ४—१५,—५, १, १४;—५, २, ८;—६, १, ७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र १ ० ५र र
(आयास्यम् ॥) पुनानःसो । मा२धा२३४औहोवा ।
२ ५ २१र ३र र १र २ २
रा२३४या । अपोवसानोअर्षसि । आरात्ना३धाः ।
१र २ २ १ ३ ५र र ३ ५
योनाइमार्त्तौ३ । स्या२सा२३४औहोवा । दा२३४सी ।
१ २ ३ १ २ ५र र ३
उत्सोदि ३ वो३ । हा२इरा २ ३ ४ औहोवा । एया-
५
२ ३ ४ या: । ॥ २१ ॥

१ ३ २ १र ३ २
(माण्डवम् ॥) इया२इ३या । पुनानःसो२ । मधा
२ ५ २१र र २र १ २ १र र र
रा२३४या । अपोवसानोअर्षा२३सी । आरत्नधायोनि
२१र १ ३ र २र१ १ ३ ५र
मृतस्यसीदा२३सा । उत्सोदिवो२३ । हा२इरा२३४औ
र २ १ १११ १
होवा । एया३या२३४५: ॥ २२ ॥

५ र ४ ५र ४र ५ ४ १ १र
(आपदासम् ॥) पुनानःसोमधारया । अपोव
२र र ३ २ ३ २ १र २१र र २१२
सानोअर्ष । स्यो३हा । ओ३हा । आरत्नधायोनिमृतस्य
र ३ २ ३ २ १ २ ३
सीद । स्यो३हा । ओ३हा । उत्सोदा२इवा२: । ओ
२ ३ २ १ २ १
३हा । ओ३हा । हिरण्या२३या३४३: । ओ२३४५इ ।
डा ॥ २३ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ २ २ ४ १ १
(सोमसाम॥) पुनानःसो५मधारया । आपो २वासा

२ १ १ २२ १
२। नोअर्षसो। आ ।रत्नाधा२ः। योनिमात्तो२।

१२ १ १ २
स्यसीदसो। ऊत्सो ।२दाइवा२ः। हिरण्या२३या३४३ः।

१
ओ२३४५इ। डा॥ २४॥

४ ५ ४ १ २१२
(ऐडमायास्यम्॥) आइपुना। नाःसो। मधा

२ १ २ १ २
रया। आपिवसा३१। नोअर्षसो। आरत्न धा३१ः।

२ २१२ १ २ १
योनिम्रता। स्यसीदसो। ऊत्सोदिवा३१ः। हिरण्या

२ १
२३या३४३ः। ओ२३४५इ। डा॥ २५॥

५ २ ४ ५२ ४२ ५ २ २४ ४ ५
(माण्डवम्॥) पुनानःसोमधारया। पोवसोवा।

१२ २ १२ १ १ १ २ २ १२
नोअर्षसि। आरत्न। धाउवा२३। होवा३हाइ। योनि

२ १ २ २ १२२ २ १ १ २ १
म्रतस्यसीदसि। उत्सोदे। वाउवा२३। होवा३हाइ।

१ २ १
हिरण्या२३या३४३ः। ओ१२३४५इ। डा॥ २६॥

५ २ ४ ५२ ४२ ४
(उद्वत्प्राजापत्यम्॥) पुनानःसोमधा। रो५रया।

२१२ २ २ १ १ १२ २ २ १ १
अपोवसानआर्षो२। षासी२। आरत्नधायोनिमतस्यसा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　　१　　　१　२
हो२इ । दासी२ । उत्सा२हो१इ । दा२३इवो३ ।
२१　५　४　५
हिरो२३४वा । ण्या५ये६हाइ ॥ २७ ॥

५ र　र　र र　४ ५
(चौणिधनमायास्यम् ॥) पुनानःसोमधाराहाउहोवा ।
२ २ ३　५　१　३ २　३　५
रायाआ२३४पो । वसा२ । नआ३४५ । षा२३४सी ।
१र २　३र ४र ५　१ र र　३ २
आरा३४ । औहोवा । त्वघायोनिमृता २ । स्यसा३४
३　५　१ २　३र ४र ५　१
५इ । दा२३४सी । उत्सा३४ । औहोवा । दाइवो२ ।
३ २　२　५
हिरा३४५ । ण्या२३४याः ॥ २८ ॥

५ र र　४　५ र　४ र ५ ४　२ १ र
(कण्वरथन्तरम् ॥) पुनानःसोमधारया । अपोवसा ।
२　१　२　२　र　र र　र　३　५ र
नो३आर्षा३सी । आरत्नधायोनिमृतस्यसीदसा२३४ऐही ।
२ १र　५　२२　२　२ ३ २
उत्सोदा२३३इवाः । हिरा३१उवा२३ । ए३ । ण्यया
॥ २९ ॥

४ र　३ ४र　३र ४५र
(तिरश्चीनिधनमायास्यम् ॥) पुनानःसोमधारया ।
२　२　४　१ २　१　२ २
ए३ । औ३हो५वाऽ । आपो३ । वसा२ । नआ३४५ ।
२　१　२ १　२ १　२　१
षा३सी२ । आरत्नधाः । योनिमृता । स्यासा३आ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ४ ५ २ १ २ १ १
औ३होइ। दा२३४सी। उत्सा औ३हो। दाइयोर्।
२ २ २ १ १ १ १ १
हिरा२३४५। ण्या३या२३४५ः॥ ३०॥

५ र र र र र र र
(सद्योविग्रीयम्॥) पुनानःसोमधारयाओहाओहा३ए।
५ र र र ४ १ १ र २ र र १ २ ५ २ ५ २
औहोऔहोइवा। अपोवसानोअर्ष। स्यो३हा। ओ३हा
२ ५ २ ५ २ २ १ र २ १ र र २ १ २ र
३ए। औ३होइ। औ३हो३वा। आरत्नधायोनिमृतस्यसीद।
५ २ ५ २ २ ५ २ ५ २ २
स्यो३हा। ओ३हा३ए। औ३होइ। औ३हो३वा।
१ २ ५ २ ५ २ २ ५ २
उत्सोदा१इवा२ः। ओ३हा। ओ३हा३ए। औ३होइ।
५ २ २ १ १ ५ र र २ र
औ३हो३वा। हिर। ण्या२या२३४औहोवा। सद्यो
१ ३ १ १ १ १
विग्रा२३४५ः॥ ३१॥

२
(स्ववासिनी द्वे॥) ओ२हो१। वाओवा। २।
२ १ २ ५ र र २ र
ओ२हो१। वाओवा३। ओ२वा२३४औहोवा। पुना
१ २र १र १र १र २र र १र २१र र
नःसोमधारया। पोवसानोअर्षसि। आरत्नधायोनि
२ १ २ र १ १र र १ २
मतस्यसीदसिउत्सोदेवाः। ओ२हो१। वाओवा। २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ३ ५र ४ २
ओ२होऽ१ । वाओवा३ । ओ२वा२३४औहोवा । ए३ ।
र १ ११११
हिरण्यया२३४४ः ॥ ३२ ॥

२ ३ २ १ ३ ५र र
ओ३ । हो१ । वाओवा३ । ओ२वा२३४औहोवा ।
१र १ २र १र १र १र २र र १र ११र र
पुनानःसोमधारया । पोवसानोअर्षसि । आरत्नधायो
२ १ २ र २ २ १ ३
निमृतस्यसीद । स्यो३ । हो१ । वाओवा३ । ओ२वा
५र र १ २र र१र र १ २
२३४औहोवा । उत्सोदेवोहिरण्ययः । इडा२३भा३४३ ।
१
ओ२३४५इ । डा ॥ ३३ ॥

१ १ २ २ १ ५
(पूर्वः ॥) हा । वे३हा३ । वो३हा । हा । ओ२३४वा ।
२ ३ ५ २ ३ ५ २ ३
हाइ । पूनाना२३४ःसो । माधारा२३४या । आपीवा
५ २ ३ ५ २ ३ ५ २
२३४सा । नोअर्षा२३४सी । आरत्ना२३४धाः । योनी
३ ५ २ ३ ५ २ ३ ५ २
मा२३४र्त्ता । स्यासीदा२३४सी । ऊत्सादा२३४इवो । हाइ
३ ५ २ २ २ ५
रण्या२३४याः । हा । गे३हा । वे३हा३ । हाँ ।
३ ५ २ ५र र २ १ २ १ २र
ओ२३४वा । हा३४ । औहोवा । ए३ । अतिविश्वानि
१र २ र३ १११
दुरितातरेमा२३४ ॥ ३४ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(रौरवम्॥) पुनानःसोमा३धारा२३४या। आपो वसानोअर्षस्यारत्नधायोनिमृतस्यसा२ईदसाइ। ओहा३ उवा। उत्सोदेवोरा२३ह्वाइ। ओहा३उवा। स्यया। औ३होवा। होधुइ। डा॥ ३५॥

(यौधाजयम्॥) पुना२१। नाइःसो। म। धारा २३४या। आपो३। वसा२। नआ३४५। षा२३४सी। आरात्नधाः। यो। निमृता२। स्यसा३४धुइ। दा२३४सी। उत्सा२ः। दाइवो२। हिरा३४५ण्या२३४याः॥ ३६॥ ४५

॥ इति चतुर्थस्यार्द्धः प्रपाठकः॥

भरद्वाजादयः सप्त ऋषयः*। हे "सोम!" "पुनानः" शोधकः "अपः" वसतीवरीः† "वसानः" आच्छादयन् "धारया" "अर्षसि" गच्छसि द्रोणकलशे किञ्च "रत्नधा" रमणीयानां धनानां दाता‡ त्वम् "ऋतस्य" यज्ञस्य "योनिं" स्थानम् "आसीदसि"

---

* "सर्वासां सप्त ऋषयोभरद्वाजः कश्यपोगोतमोऽत्रिर्विश्वामित्रोजमदग्निर्वसिष्ठ इत्येते"-इति श्रुति-कैश्यः। सर्वासामेतदृशामासां द्वादशानामित्यर्थः।

† "अपः उदकानि"-इति वि०।

‡ 'रमणीयानाम् धारयन्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३१ २　　३ २उ　१ १ २ २ २　२ २
परितोषिञ्चतासुतꣳसोमोयउत्तमꣳहविः।
२ १र　२र ३　२ ३२उ　३२ ३ २ ३ १ २
दधन्वाङ्योनर्योअप्स्वा३न्तरा*सुषावसोममद्रिभिः ॥ः ॥४६†

५ र र　　२
(अच्छिद्रम्॥) परीतोषी। चता३१उवा२३। ह२
५　१र ३र　१　२ १　२ १　५र र　२
३४ताम्। सोमो२यउत्तमꣳहवीः। सोमोयउ। त्तमा
५　२ १र　र　३र　१　२ १र
३१उवा२३। हा२३४वीः। दधन्वाꣳयोनर्यो२प्सुवन्तरा।
५ र　१५र　१　२
दधन्वाꣳयाः। नर्यो२। आ। प्सुवा३१उवा२३। ता
५　२ १र र　२　५ र　२
२३४राः। सुषावसोममद्रिभी२३४ः। सुषावसो। ममा
५
३१उवा२३। द्रा२३४इभीः॥ १ ॥

अपि च "देवः" द्योतमानः सोमः "उत्तमः" प्रस्यन्दनशीलः सन् "हिरण्ययः"‡ देवानां हितरमणीयो¶ भवसि खलु॥

"देवो"-"देव"-इति साम्नऋचः पाठौ॥ १ ॥ ४५

---

* "स्वं १तरा"-इति ऋ० स्वरपाठः।

† उ० ५, ७, १२, १=ऋ० ७, ५, १२, १=ऊहे ५, २, १,—२—३—४—५—६; —७, १, २—४;—७, २, २—४;—९, १, ३;—९, २, ४;—९, ३, ७—११;—१२, १, १८;—१२, २, २०;—१५, १, ६;—१५, २, १२—१३—१४;—१६, १, ५—६;—१९, १, १८—ऊह्ये १, १, २—३—४—५—६—७—१२;—२, २, ६—१०।

‡ "ऋतव्यवा(न्न)वाक्त्वमाध्वीर्हिरण्मयानि छन्दांसि (शा० ६, ४, १७५)।

¶ 'हिरण्ययः अमृतमयः'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र र २ १ २ २ ऽ
(रयिष्ठम्॥) परीतोषी। चताह्व३ताम्। औ३-
२ २ ऽ २ २ ऽ २ ऽ २ ५
हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।
२ १र ऽर १ २ २ १ ५र र २
हाउवा। सोमो२यउत्तमꣳहवीः। सोमोयऊ। त
१ २ २ ऽ २ २ ऽ २ २ ऽ २
माꣳहा३वीः। औ३हो३वा। औ३हो३वा। ई३या।
ऽ २ ५ २ १र र ऽर १ २ १र
ई३या३४। हा। हाउवा। दधन्वाꣳयोनर्यो२प्सुवन्तरा।
५ र १ऽर १ २ १—२ २ ऽ
दधन्वाꣳयाः। नर्यो२। आ। प्सू३वान्ताऽ२रा। औ३
२ २ ऽ २ २ ऽ २ ५ २
हो३वा। औ३हो३वा। ई३या३४। हा। हाउवा।
१र र ३ ५र २ १ २ २
सुषावसोममद्रिभी२३४ः। सुषावसो। ममाद्री३भाइ।
ऽ २ २ ऽ २ २ ऽ २ ऽ २ ५
औ३हो३वा। औ३हो३वा। ई३या। ई३या३४। हा।
२ २ ५
हाउवा३। ऊ३२३४पा॥ २॥

५र र र र २ र १
(भारद्वाजे द्वे॥) औहोइपरीतोषी। चतासुतम्।
ऽ २ ३र २ ऽ २र २ १र ऽर
औ३होइ। औहोइ। आ३। औहो३वा। सोमो-
१ २ १ २ १ ऽ २ ३र २ ऽ २र
२यउत्तमꣳहविः। औ३होइ। औहोइ। आ३। औ
२ १र र ऽर १ २ १र ऽ २ २र
हो३वा। दधन्वाꣳयोनर्यो२प्सुवन्तरा। औ३होइ। औ-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



होइ। आ३। औहो३वा। सुषावसोमद्रिभिः। औ३होइ। औहोइ। आ२३४। उहुवाईहाउ। वा॥ ३॥

प। यैपारी। नाषिञ्चतारसुतम्। आउवार२३। हाउहाउ। हो३वा। सोमोऽ२यउत्तमꣳहविः। आउवार२३। हाउहाउ। हो३वा। दधन्वाꣳयोनर्योर सुवन्तराउ। वा२३। हाउहाउ। हो३वा। सुषावा२३सो३। हाउहाउ। हो३वा। मम। द्रा२३४इभाइ। उहुवाईहाउ। वा॥ ४॥

(आभीशवम्॥) परितोषिञ्चतासुतम्। ए। सोमोयजऽ३त्तामꣳहाविः। दा२३४धा। हाइ। न्वाꣳयो नर्य्योअप्स्वन्तारा। द२३४षा। हाइ। वासोममोर२३४वा। द्रा५इभोईहाइ॥ ५॥

(उत्तरमभीशवम्॥) परीतोषिञ्चतासुतम। ए।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र १ ७ १ २ ५ २ २
ए। सोमोयऊ३त्तामꣳहाविः। हार३४धा। हाइहाइ।
१र र र ७ २ २ ५ २ १ १
न्वाꣳयोनर्योअप्सुअन्तारा। हर३४षा। हाइहाइ। वा
र २ १ ५ ४ ५
सोममोर३४वा। द्राधुइभोईहोइ॥ ६॥

४ ५र ४र ५ र ४ १र
(माण्डवम्॥) परीतोषिञ्चतासुतम्। इहा। सो
र २ १ २ १ २ १र र र २
मोयउत्तमꣳहार३वोः। इहा। दधन्वाꣳयोनर्योअप्सु
१ २ १ २ १र २ १ १
वन्तार३रा। इहा। सुषावार३सो। इहा। ममार३।
१ २ ४र र २ ५
द्रार३इभार३४औहोवा। ई३४हा॥ ७॥

४ ५र ४र ५ र ४
(माण्डवमुत्तरम्॥) इहा। परीतोषिञ्चतासुतम्।
१र र २ १ २ १ १ २
इहा। सोमोयउत्तमꣳहार३वोः। इहाउवा३। ऊ३-
५ २ १र र र २ १ २ १ २
४पा। दधन्वाꣳयोनर्योअप्सुवन्तार३रा। इहाउवा३।
२ ५ २ १र २ १ २ २ ५
ऊ३४पा। सुषावार३सो। इहाहाउवा३। ऊ३४पा।
२ १ २ १ २ २ ५
ममद्रार३इभोः। इहाउवा३। ऊ३र३४पा॥ ८॥

४ ५र ४र ५ र ४ २र १र
(अभीवासः साम॥) परीतोषिञ्चतासुताम्। सोमो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२१　२१　२१　१　२　५　१　५
यउ । नमᳫँहवाइः । दाधाँऔ२३४वा । ऊ२३४पा ।
१२　२　२　२　१　२　१२　२　१　१
न्वाᳫँयोनर्यौ अप्स् वन्ता२३रा । सुषावा२३सो । मामद्रि

१　२　१
भिः । इडा२३भा३४३ । औ२३४५इ । डा ॥ ९ ॥

४ ५र ४र ५　र　४　५　५
( परिवासःसाम ॥ ) परीतोषिञ्चतासुतम् । औ६वा ।
१र ६र　१　२१　२१　२　२　१　१
सोमोरयउत्तमᳫँहविः । दधान्वाᳫँयो३ । वा३वाइ । न-
५र　१　२१र　२　२　१　१
र्यो२प्सु वन्तरा । सुषावासो३ । व३वा । मामद्रिभिः ।
१　२　१
इडा२३भा३४३ । औ२३४५इ । डा ॥ १० ॥

४ ५र ४र ५　४　४　१र　र
( वैणवम् ॥ ) परीतोषिञ्च । ताप्सुतम् । सोमो
१　१र　र　र　र
यउत्तामा२१२म् । हावी२ः । दधन्वाᳫँयोनर्यौ अप्सु-
१　१र　२　२ १　५
वा२१२ । तारा२ । सुषावा२३सो३ । ममो२३४वा ।
४　५
द्रा५इभो६वाइ ॥ ११ ॥

१ र र　१ र
( सौमक्रतवीयम् ॥ ) परीतोषा२इ । चताप्सुता२म् ।
१र　१र　१र २　१　१　२
ऐहो२ । ऐहो२ । ऐहिया२इ । उवा२इ । ई३या ।

११ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



सामीयजू२। तमꣳहवी२ः। ऐही२। ऐही२।
ऐहिहा२इ। उवा२इ। ई३या। दधन्वाꣳयोनर्यो२।
प्सुवन्तरा२। ऐही२। ऐही२। ऐहिहा२इ। उवा
२इ। ई३या। सुषावसो२। ममद्रिभा२इ। ऐही
२। ऐही२। ऐहिहा२इ। उवा२इ। ई३या३४३।
ओ२३४५इ। डा॥ १२॥

(गर्दः॥) उपाउप। उपा३१। उपाउप। परो
तोषिञ्चतासुतम्। उपाउप। उपा३१। उपाउप।
सोमोयउत्तमꣳहविः। उपाउप! उपा३१। उपाउप।
दधन्वाꣳयोनर्यो३प्सुर्वन्तरा। उपाउप। उपा३१। उपा
उप। सुषावसोममद्रिभिः। उपाउप। उपा३१। उपा
३ऊ५पा६५६। ऊ२३४पा॥ १३॥

(प्रतोदः॥) हाउहाउहाउवा। परीतोषिञ्चतासु-
तम। उपा२३४५। हाउहाउहाउवा। परीतोषिञ्च



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ३ १११११ ५ ५ ५
तासुतम्। इ्वा। उपार३४५। हाउहाउहाउवा।
१२२ २ २ १ २ ११ ३ ११११ ५
परीतोषिञ्चतासुतम्। अवोबृहत्। उपार३४५। हाउ-
५ ५ १२२ २ २ १ २ ३२ १ २
हाउहाउवा। परीतोषिञ्चतासुतम्। सोमोरयउत्त-
१ २१ २ १२ २ ३२ १ २ १२ २ ३ १
मꣳहविः। दधन्वाꣳयोनर्योरप्सुवन्तरा। सुषावसोर-
१११ ५ ५ ५ २ ११ ३ ११११
३४५। हाउहाउहाउवा। ए३। ममद्रिभीर३४५ः॥१४॥

२ ३ ५ २ १
(महायौधाजयम्॥) हाओर३४वार। हाइआ-
५ २ १२२ २२ १ २ ३२ ३१
२३४वा। हाउवा। परीतोषिञ्चतासुतम्। सोमोरय-
२१ २ १ २ १२ २ ३२ १ २१२ २
उत्तमꣳहविः। दधन्वाꣳयोनर्योरप्सुवन्तरा। सुषाव-
२ २ ३ ४ २ १ ५ २
सोममा। हाओ२३४वा।२। हाइओ२३४वा। हाउवा३।
२ १ ११११
द्राइद्रभीर२३४५ः॥ १५॥

हे ऋत्विजः! "सुतम्" अभिषुतं "सोम" "इतः" अस्मात् कर्म्मणम् "ऊर्ध्वम्" अथवा अस्मात् प्रदेशादूर्ध्वं "परिषिञ्चत" वसतीवरीभिः। ["इतोषिञ्चत' इत्यत्र संहितायां छान्दसं रोरुत्वम्। आदेशप्रत्यययोरिति षत्वम्] "यत्र" सोमः देवानाम "उत्तमं" प्रशस्तं "हविः" भवति। अपिच "नर्यः"



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३ १२ ३२ ३ १२ ३२ ३ १ २
आसोमस्वानोअद्रिभिस्तिरोवाराण्यव्यया।
३ १२ २ ३क२२ ३२ ३ २ ३ १ २
जनोनपुरिचम्वोर्विशद्धरिःसदोवनेषुदधिषे ॥ ३ ॥ ४७*

२ ५ २ र ५र १
(आग्नम् ॥) आ२३४सो। मस्वानो३आ। द्राइभा
३ ५ २ १र र ५र १ १ २ ३
ओ२३४वा। तिरोवारा२णिअव्यया२३। जानाओ२३४
५ १ २ ३ ५ १ ५र ५र १
वा। नापाओ२३४वा। रिचमुवोवो२र्विशद्धरी२३ः।
१ २ ३ ५ १ २ ३ ५ ४
सादाओ२३४वा। वानाओ२३४वा। षुदा५धिषाइ।
४
होऽ५इ। डा॥ १६ ॥

५र र र २ ३ ५
(सोमसाम॥) हावासोमस्वा। नोअद्रा२३४इभीः।
२ ३ ५ २ ५ २
तिरोवा२३४रा। णिया३१उवा२३। षा२३४या। जनो

मनुष्याः हितः "यः" च सोमः "अप्स" वसतीवरीषु "अन्तर्" अरिचे वान्तर् "दधन्वान्" गच्छन् भवति। तं सोमम् "अद्रिभिः" ग्रावभिः अध्वर्युः "सुषाव" अभिषुतं चकार तं परिषिञ्चतेति समन्वयः ॥ २ ॥ ४६

---

* उ० ८, २, १०, १=ऋ० ७, ५, १३, ५=कण्व ४, १, ९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २ २ ५ २
नाऽ२३४पू। राइचामू२३४वोः। विश्वा३१उवा२३। ह्वा-
५ २ १ ५ २
२३४रीः। सदोवा२३४ने। घुदा३१उवा२३। घ्रौ२३४
५
षे ॥ १७ ॥

४र५र र ४र ५ ४ २१ररर २
आसोमस्वानोअद्रिभाइः। तिरोवाराणिआव्या१या
१र २ १ २ २र २
ऽ२। जनोनपुरिचामू१वोऽ२ः। विश्वाह्वा१रीऽ२ः। सदोव-
१ २ २१
नाइ। षूऽ२दभ्रिषोऽ२३४पूइ। डा ॥ १८ ॥

३र४र र ३र ४ ५ र २ ४र५४ ५
आसोमस्वानोअद्रिभिः। तिरोवाऽ३राणिअव्यया।
१र र ११ १ ५ २
जनोनपुरिचमुवोविश्वाह्वरिः। औऽ२। ऊवाइ। होऽ३वा।
१र र १ ५ २ १ २
सदोवनेषुदौऽ२। ऊवाइ। होऽ३वा। ध्रिषा। औ-
४ ५ ४
३होवा। होऽ५इ। डा ॥ १९ ॥

हे "सोम!" "अद्रिभिः" ग्रावभिः "स्वानः" अभिषूयमाणस्त्वम् "अव्यया"* अविमयानि "वाराणि" वालानि पवित्राणि "तिरस्" कुर्वन् व्यवधायकानि कुर्वाणः सन् "आ पवसे" आभिमुख्येन चरसि। "हरिः" हरितवर्णः स सोमः चम्वो-

* इयाडियेति कात्यायनवचनात् सिद्धम् (७,१,३९सू०)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ १ २ ३ २ ३ १ २ ३ १ २
प्रसोमदेववीतयेसिन्धुर्न्नपिप्येअर्णसा।
२ १ र २ र ३ १ र २ र ३ २ ३ १ २ ३ १ २
अꣳशोःपयसामदिरोनजागृविरच्छाकोशंमधुश्चुतं॥४॥४८॥*

५ र २ २ ५
(त्रीणिधनमाग्नेयम्॥) प्रसोमदा। वावीतार२३४याइ।
२ १ २ ५ २
सिन्धूर्नापाइप्यआ३१उवा२३। णा२३४सा। आꣳशोः-
२ ५ २ र १ र २ ५
पा२३४या। सामदाइरोनजा३१उवा२३। गृ२४४वीः।
२ ० ५ २ ५
आकाको२३४शाम्। मधा३१उवा२३। श्च२३४ताम्॥२०॥

३४ र ५ र ४ ५ र २
(अग्नेर्वैश्वानरस्य साम॥) प्रसोमदेववी। तयो२३४-
५ ३ ४ ३ ४ ५ र २ ५ १ २ २
हाइ। सिन्धुर्नपिप्येअ। णसो२३४हाइ। आꣳशाओ२-
रधिषवणफलकयोरुपरि स्थिते कलशे† "विशत्" प्रविशति।
तत्र दृष्टान्तः—"जनोन" यथा जनः "पुरि" पुरे प्रविशति।
स त्वं वनेषु काष्ठनिर्मितेषु पात्रेषु‡ "सदः" स्थानं "दधिषे"
"दधिषे"-इति, साम्न ऋचः पाठौ॥ ३॥ ४७

---

* उ० १, २, २०, १=ऋ० ७, ५, १४, २=आर० २, २, १५—१६=ऊहे १,२, १३;—६, २, १३;—८, १, १२;—९, २, १७—१८;—११, १, १७;—१४, १, १५;—१८, १, १२—१३—१४;—१९, २, १७;—२२, २,६=ऊह्ये ६, १, ५।

† 'आनडुहचर्मणि'-इति वि०।

‡ 'वनेषु उदकेषु' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ १ २ ३ ५ ४र ३र ४ ५र ३
३४वा । पायाओ२३४वा । सामदिरानजा । गृ२३३ ।
५ ५ १ २ ३ ५ १ २ ४
वोईहोइ । आक्काओ२३४वा । कोशाओ२३४वा । मधूपूख्-
४
ताम् । होपुइ । डा ॥ २१ ॥

२१र ५र ४र
( द्विर्हिङ्कारं वामदेव्यम् ॥ ) प्रसोमा२३देववीतयाइ ।
१ र र र र २१र २ १
साइन्धुर्नपिप्येअर्णसा ऽ᳚ ओ:पयसामदिरोनजौहा३ । ऊ-
१ २ १र र १२र २ १
म्मा २ गृ२३वोः । अक्काकोशाम्मधौहो३ । ऊम्मा २ ।
१ ४ ५ ४
श्चुताम् । औ२३होवा । होपुइ । डा ॥ २२ ॥

३ ४र र३४र५ र ३२
( उत्सेधः ॥ ) प्रसोमदेववीतये । सिन्धुः । नपा३४-
३र ४र ५ १र १ १ २
औहोवा । प्येअर्णसा२ । हा२१उवा२३ । ऊ३४पा ।
३ २ ४ ५र४ ५ १ २१ १र १ र
अ᳚ ओ३:पया । औहोवाहाइ । सामदिरो । नजागृविः ।
२ ५ ३२ ४र ५र४
हा३१उवा२३ । ऊ३४पा । अक्का३कोशम् । ओहोवा-
५ ३२४ ३११११
हाइ । मधू३श्चूपुता६५६म् । ऊ२३४५ ॥ २३ ॥

५र र ५र १ १ २१
( निषेधः ॥ ) प्रसोमदाइवा६वीतयाइ । सिन्धूर्नपा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ ३ १ ३ २ ३१ ३ २ ३ १ २
सोमउष्वाणःसोतृभिरधिष्णुभिरवीनाम्।

२र १ १ २ १ २ ४ ५ २
इ। प्यैअर्णसा२। इहाइ। आ(ए)भोऽपाया। हाँ-

३ ५ १ २१ २र १ २ १ २
होर२३४हा। सामदिरो। नजागृ२३वीः। इहाइ।

१ २ ४ ५ २ १ ५ ३ २ ४
आच्छाइकाशाम्। हाहोर२३४हा। मधूश्चूपुताईपु-

३ १ १ १ १
ईम्। होर२३४५॥ २४॥

हे "सोम!" त्वं "देववीतये" देवानां पानाय* तदर्थम् "अर्णसा" वसतीवर्याख्येनोदकेन "प्रपिप्ये" प्राप्यायसे। तत्र दृष्टान्तः—"सिन्धुः न" यथा सिन्धुरुदकेन प्रप्यायते तद्वत्† [प्यायतेः लिटि लिट्याङोश्चेति पीभावः] ततः स त्वं "मदिरः" मदकरः सुरादिरिव "जागृविः" जागरणशीलः‡ [यद्वा न सम्प्रत्यर्थे, इदानीं मदकरो जागणशीलस्त्वं "अंशोः" लता-खण्डस्य "पयसा" रसेन "मधुस्तुतं" मधुररसस्य चारयितारं "कोशं" द्रोणकलशं "अच्छ" अभि¶ गच्छसि॥ ४॥ ४८

* 'देववीतये देवतर्पणाय'-इति वि०।

† 'प्रपीप्ये प्रवर्द्धते पूर्यते वा'-इति वि०।

‡ 'जागृविः जागरणशीलः अप्रमत्तः'-इति वि०।

¶ 'अच्छ आप्तुम्'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अश्वये*वद्धरितायातिधारयामन्द्रयायातिधारया ॥५॥४९†

४ ५ २र १
(सोमसामानिषट् ॥) हाउसोमा । उवाणा३ सो
१ १ ११ ११२र र १ २ १र
ह्व१भो२ । आधिष्णुभिरवीरनाम् आश्वौ३हो । येवद्धरि-
२र २र १ १ २ २ ५र ४ ५
तायाताइधा१राया२ । मन्द्राया३वा३४ । हाम्बोवा ।
१ १र ३ १ १ १ १
तिधारया१२४५ ॥ २५ ॥

५र १ ४र५ ४र ५ १ २ २र
सोमऊ३वाणःसोतृभाइः । आधिष्णुभिरवीनाम् ।
१ २ ५ ११२र २ २ २ २ ३
आश्वये२३४वा । हरितायातिधा१रा३या । मन्द्राया
५ २ ५ १ १ २ ४ ५ ४
२३४या । ता२३४इधा । रया । औ३होवा । हा५इ ।
डा ॥ २६ ॥

४र ५ र ४ ५र ४ ५ ४ ४ १ २
सोमउप्वाणःसोतृभिः । ए५ । अधी । ष्णुभिरा३१-
५ १ २ १र र र २
उवा२३ । वो२३४नाम् । आ२३श्वा । येवद्धरितायातिधा
५ १ ० २ १ र २
३१उवा२३ । रा२३४या । मा२३द्रा । यायातिधा३१उवा-
५
२३ । रा२३४या ॥ २७ ॥

---

* 'अश्वया इव = अश्वया यथा शीघ्रं गच्छति, तद्वत् शीघ्रगामिन्या' इति वि० ।

† ऊ० ३, २, १२, १=ऋ० ७, ५, १२, ३=जरे ९, १, ५ —६—७—८,—२०, १, १९—२० ;—२०, ३, १—कद्दो ६, १, १—३—१० ;—६, २, ६ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ र ४ ५र ५ ५ ४ ४ १ २ १ ऽर १
सामउष्वाणः सोटभिः। एपु। अधी। ष्णुभिरवीर। नाम्।
२र १ ० १ र १र १ २
आस्वयेव। ह्वारितायार। ताइधारया। मान्द्रयायौवा।
२ ५ २१ २ ४ ५ ४
तीर३४धा। रया। औ३होवा। हो५इ। डा॥ २८॥

४र ५ र ४ ५र ४ ५ ४ ५ ४५र
सोमउष्वाणः सोटा। भाइ। अधिष्णुभिरवी। नाम्।
१ २ १ २ १ ऽर १ र २ १र र
आधिष्णुभिरवीर। नाम्। अस्वयेवा। ह्वरितायाता
२ ५ २ ३
२३इधा। रया२१उवा२३। मार३४०द्रा। यायाती
५ २१ ३र ४ ५ ४
२३४धा। रयाऔहोवा। हो५इ। डा॥ २९॥

३र ४ र २ ४र ५ ऽ १ १
सोमउष्वाणः सोटभिः। औ३होइ। आर३४।
५ ४ ५र १ २र र र १ २
धिष्णुभिरवीनाम्। आस्वयेवह्वरितायाः। तिधारायौ।
३ ५ २१ र १ २ ऽ
वाओर३४वा। मन्द्रयायातीरधा। ऊ३म्। ऊ३४३म्।
१ ५
रा३४५योइहाइ॥ ३०॥ ४९

॥ इति ग्रामे गेये चतुर्दशः प्रपाठकः॥

"सोटभिः" पुणृभिः "स्वानः" सुवानोऽभिषूयमाणः "सोमः" "अवीनां स्नुभिः" [मांसृत्सनूनामुपसंख्यानमिति वार्त्तिकेण सानुशब्दस्य स्नुभावः] समुच्छ्रितैर्वालैः पवित्रैरधियाति अधि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

२ १ २ २ १ २ २ १ २

तवाहꣳसोमरारण*सख्यइन्दो दिविदिवे ।

२ १ २ २ १ २ १ १२ २२ ३ २उ ११ २

पुरूणि†बभ्रोनिचरन्तिमामवपरिधीꣳरतिताꣳइहि ॥५॥पू०‡

५ र २ १

( वैष्णवम् ॥ ) ओं ॥ तवाहꣳसो । मरा२रणा ।

र १ र र र

रण । सख्यइन्दोदिवा२इ । दिवाइ । दिवे । पुरूणिबभ्रो-

१ र १

निचरन्तिमा२मवा । भव । परिधीꣳरतिताꣳ२इहा२इ ।

१ २ ५र र २ ५

आ२इ । हा२३४ । औहोवा । ऊ२३४पा ॥ १ ॥

४५र ४ २ १ र

( द्वितीयंवैष्णवम् ॥ ) तवा । तवा । अहꣳसोम-

अधिकं गच्छन्ति । "उ" इति प्रसिद्धौ । "अश्वयेव" वडवयेव हरितवर्णया धारया याति । "मन्द्रयार्ण" मदकारिण्या धारया द्रोणकलशमधि गच्छति ॥ "उभ्याप:" "उभुयाप:"—इति पाठौ ॥ ५ ॥ ४९

---

* 'रारण रमयासि । अथवा रणतिस्तुतिकर्मा तव स्तुतिं कुर्मः'-इति वि० ।

† 'पुरूणि बहूनि दुःखतानि । अथवा बहूनि यजमानकुलानि चरन्ति'-इति वि० ।

‡ उ० ३, १, ११, १ = ऋ० ७, ५, १५, ४ = ऊहे २, १, ९ — १० — ११ ;—९, १, १० ;—१३, २, १—२ ;— १४, २, १५-१६—१७ — १८ ;—१९, २, १ ;—२०, १, १४—१५—१६ = ऊह्ये २, १, १२ ;—१, १, ४ ;—५, २, १२ ;—६, १, ११—१६ ।

¶ 'मन्द्रया मदकरया'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रारण। सख्याई३०दो। दिवाश्रौ३हो। दाइवे२।
पुरूणिवभ्रो निचरन्तिमा१मा३वा। पराश्रौ३हो। धाइꣳ-
रतितो२३४वा। आ५इहोइहाइ॥ २ ॥

(आङ्गिरसानित्रीणि॥) तवाहꣳसोमाइरारणा।
साख्याई२३४०दो। दिवेदा२३४इवे। पुरूणिवभ्रोनच-
रन्तिमाम्। आवा२३४हाइ। पारीधाइꣳरा। तितो
२३४वा। आ५इहोइहाइ॥ २ ॥

तवाहꣳसोमरौ। होऽ५रणा। सख्यइन्दोर२।
दिवा३४५इ। दौ२३४वे। पूरू२णाइबा२। भ्रोनिच-
रार। तिमा३४५म्। आ२३४वा। पारी२धाइꣳ
रार। तिताꣳ३४५। ई२३४हो॥ ४ ॥

तवाहꣳसोमरारण। सख्यइन्दोदिवेदिवाइ। सख्य
इन्दोदिवेदा२३इवे। पुरूणिवभ्रोनिचरन्तिमामा२३वा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

२ १ २ ३ १र २र

मृज्यमानःसुहस्त्या * समुद्रेवाचमिन्वसि ।

२ २ ३१ २ ३१२३१ ३१२ ३क २र

रयिंपिशंगम्बहुलम्पुरुस्पृहंपवमानाभ्यर्षसि ॥ ७ ॥ ५१ †

१ २ १ २ १

पराइधार२३इ७र। तिता७२३इ्वा३४३इ। ओ२३४५इ। डा ॥ ५ ॥

( स्वारमौक्ष्णोरन्ध्रम् ॥) मृज्यमानाः। सुहस्ति-

हे "इन्दो" सोम ! तव "सख्ये" सखिकर्म्मणि अहं "दिवे दिवे" अन्वहं "रारण" रमे [रमेर्लिटि उत्तमे णलि रूपम् हे] "बभ्रो" बभ्रुवर्ण ! सोम "पुरूणि" बहूनि रक्षांसि "मां" तव सख्ये स्थितं "न्यवचरन्ति" नीचीनं चरन्ति बाधन्ते। ये मां बाधन्ते तान् "परिधीन्" ‡ रक्षसान् त्वम् "अतीहि" आगच्छ ॥ ६ ॥ ५०

---

* "सुहस्त्य"-इति ऋ० सं० ।

† उ० ४, १, १२, १ = ऋ० ७, ५, १९, १ = आर० ५, १, १२ = ऊह्य २, २, १—२—३—४—५ ;—८, १, ५—६ ;—२०, २, ७—८ ;—ऊह्य ६, १, १९ ।

‡ 'परिधीन् अतीहि-ये अन्ये यजमानाः परिचरन्ति, तेभ्यः परिधीन् स्मरणान् अतीत्य इहि मदीयं यज्ञमायाहि। अथवा दुःकृतानि ये कुर्वन्ति अतीत्य तेषां परिधीन् आयाहि'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



याइ। साम्३द्राइवा। चमिन्वसाइइ। रायोइ०पाइ-
ग्रा। गम्बङ्कलाइम्। पूरुस्पृ२३४हाम्। पवमा।
ना। श्रौ३हो। भियि२३४वा। षा५सोईहाइ॥ ६॥

(औक्ष्णोरन्ध्रम्॥) मृज्यमानाः। सुहस्ताया२।
समुद्रेवा। चामिन्वासा२३४इ। रया३४इंपिशा। गम्ब
ङ्कलंपूरुस्पृहा२म्। पवा२३। मा२ना२३४औहोवा।
भिया२र्षसी२३४५॥ ७॥

मृज्यमानाः। सुह। स्तिया। सा१मू२द्राइवा२।
चमि। न्वसाइ। रा१यी२०पाइशा२। गंवङ्कलंपुरु।
स्पृहाम्। पा१वा२मानार२इ। भा२रया२३४औहोवा।
षा२३४सीः॥ ८॥

(आग्नेयानित्रीणि॥) मृज्याइए। मानःसुहस्तिया
औ३हो। समुद्रेवाचमिन्वसाऔ३हो। रयिंपिशङ्गं बङ्क



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वंपुरुस्पृहाश्रौ३हो । पवमार२३ना३ । भियोर२३४वा ।
षा५सोइहाइ ॥ ९ ॥

मृज्यमानः सुहस्त्या । वाहाइ । समुद्राइवा ।
चमीरिन्वार२३४सी । रयाइ३४इंपिशा । गंबहुलम् । पुरु-
स्पृहा२३४म् । पवा३४मानाइ । भियोर२३४वा । षा
पुसोइहाइ ॥ १० ॥

मृज्यमाना५ःसुहस्तिया । समू२द्राइवा२ । चमा-
र्इंन्वासी२ । रयिंपिशङ्गंबहुलंपुरुस्पृहाश्रौ३हो । पव
मार२३ना३ । भियोर२३४वा । षापुसोइहाइ ॥ ११ ॥

( ऐडमौक्ष्णोरन्ध्रम् ॥ ) मृज्यमानःसुहस्त्या । समु
द्रेवाचा । चामिन्वसि । रायिंपिशा३ । हा३हा ।
गंबहुलंपुरुस्पृहम् । पवमाना३ । हा३हा । भियर्षा
२३सा३४३इ । श्रो२३४५इ । डा ॥ १२ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

३ १र २र ३ २ ३ १२ ३ २ ३ १ २
अभिसोमासआयवःपवन्तेमद्यम्मदम्।

५ ४ ५र ४ १
(वाजजित्॥) मृज्यमानःसुहा। स्तिया२।

१ १ र १ २र १
समू२द्रो। द्रेवा२चो। चामिन्वसाइ। रया२यिं

१ १ २१ २र१
ह्वोइ। पिशा२ङ्गो। गंबहुलाम। पूरुस्पृहाम्।

१ र १ २र १ २ २र
पवा२हो। माना२हो। भीयर्षसा३१उवा२३। वा

१र २ २
जीजिगीश्वा२३१॥ १३॥

हे "सुहस्त्या" हस्ते भवा हस्त्याः अङ्गुलयः,* शोभनाङ्गुलिक सोम! "मृज्यमानः" शोध्यमानस्त्वं "समुद्रे" अन्तरिक्षे† कलशे वा "वाचं" शब्दम् "इन्वसि" प्रेरयसि‡। किञ्च। हे पवमान पूयमान सोम! "पिशङ्गं" हिरण्यं रजतादिभिः पिशङ्गवर्णं "बहुलं" प्रभूतं "पुरुस्पृहं" बहुभिः स्पृहणीयं "रयिंधनं" "अभ्यर्षसि" स्तोतॄणामभिक्षरसि प्रयच्छसीत्यर्थः॥ ७॥ ५१

---

* "सुपांसु (३, १, ३९)"-इत्यादिना सुप आले रूपम्।

† "समुद्रः"-इति अन्तरिक्षनामसु पञ्चदशं नैघण्टुकम् (१, ३)।

‡ "इन्वति"-इति गतिकर्मसु पञ्चदशाधिकशततमं नैघण्टुकम् (२, १४)। व्याप्तिकर्मसु च प्रथमम् (२, १८)। अतएव 'इन्वसि व्याप्नोषि'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १र २र३१२ ३ १ २
समुद्रस्याधिविष्टपेमनीषिणो

३ १ २ ३ १ २
मत्सरासोमदच्युतः ॥८॥ ५६*

२ २ र र १ २
( वैश्वदेवेद्वे )। हाउहाइ। अभिसोमासा३आया-

२ २ र १ २
१वा२३ः । हाउहाइ। पवन्तेमदी३यांमा१दा२३म् ।

१ २ र र १ २
हाउहाइ। समुद्रस्याधिविष्टपेमा३नाइषा१इणा२३ः ।

२ र र १ २ २ २
हाउहाइ। मत्सरासोमा३दाच्यू१ता२३ः। हाउहा-

१
३४३इ। ओ२३४५इ। डा ॥ १४ ॥

४ ५ ४ ५ २ ५ ४ ५
आभीसोमा। सआ३१उवा२३। या२३४वाः। पाव

४ ५ २ ५ ४ ५ ४
न्ताइमा। दिया३१उवा२३। मा२३४दाम्। सामुद्र-

५ २ १ र १ २ ५ ४ ५
स्या। धिविष्टापेमना३१उवाये३। षी२३४णाः। मात्सा

४ ५ २ ५
रासाः। मदा३१उवा२३। च्यू२३४ताः ॥ १५ ॥

---

* ऊ० २, १, ६, १ = ऋ० ७, ५, १४, ४ = जहे २, १, १४ — १५ ;—४, २, ७—८—९—१०—११—१२ ;—७, १, १२ ;—७, २, १४—१५—१६ ; —८, १, १६; —८, २, १८ ;—९, २, १५ ;—९, ३, ६ ;—१२, १, ३ ;—१२, २, १६ ;—१४, १, ९ ; —१४, १, ५—७ ; = १६, २, १—३ ;—१८, २, १—३—१० ;—२२, २, १० = ऊहो १, १, ६ ;—१, २, ११ ; —१, २, ९ ;—५, १, १० ;—५, २, १० ;—६, १, ९—१४ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(इन्द्रसामनोद्वे ।) अभिसो३मासआयवा: । पवन्ते
मद्दियम्म । दा । औ३चे । आओ३वो । समुद्र-
स्याधिविष्टपेमनीषि । णा । औ३वो । आओ३वो ।
मत्सरासोमदच्यु । ता । औ३वो । आओ३वो ३४-
३ । ओ २२३४५इ । डा ॥ १६ ॥

अभिसोमासआ । यो५यवा: । पवन्तेमद्यम्मदम्म-
वन्तेम । दियाऽ२चोइ । मा२३दाम् । समुद्रस्याधिविष्ट-
पेमनीषिणा: । मनाऽ२चोइ । षा२३इणा: । मत्सरासोमद
च्युता: । मदाऽ२चोइ । च्यू२३ता३४३: । ओ२३४५इ । डा ।
॥ १७ ॥

(स्व: पृष्ठम् ॥ ) अभा२इसोमा३४ । औहोवा५सआ-
यवा: । पवा२ंतेमा३४ । औहोवा५दियम्मदाम् । समू-
२द्रस्या३४ । औहोवा५धिविष्टपाइ । ओये३ । मा२नार३४-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र ५ ३ ५ ३ २र १
औ होवा । वी२३४णाः । ऊ२३४पा । २ । मत्सरासो२३ ।

१ २ ५र र २ ५
मा२दा२३४औ होवा च्यू२३४ताः ॥ १८ ॥

४र ५र ४ ५ ४र ५र
( इन्द्रसामानि त्रीणि ॥ ) औ होवा । अभिसोमास-

र ४५ ४र ५र ४ १ २र २ ४
आयवः । औ होवा । पवा२ । तेमा३ओ५वा६५६ । दि-

२ १ २ १ १ २ ४ २ १ ५र र
व्यमदम् । समू२ । द्रस्या३ओ५वा६५६ । धिविष्टपे२रमनी-

१ ५र ५ २ २र २ ४
षिणा२ः । औ३हो२१६ । मत्सा२ । रासा३ओ५वा६५६ ।

२ १ २ १११२
मदच्युता२३४५ः ॥ १९ ॥

५ र र र ५ १ २र २ ४
अभिसोमास आया६वाः । पवा२ । तेमा३ओ५वा-

२ १ २ १ २ २ ४ २
६५६ । दिव्यमदम् । समू२ । द्रस्या३ओ५वा६५६ । धिवि-

१ ५र र १ ५र १ २र २ ४
ष्टपे२रमनीषिणा२ः । मत्सा२ । रासा३ओ५वा६५६ । मद-

१ २ ११११
च्युता२३४५ः ॥ २० ॥

५ र र र ५ १ ० २
अभिसोमास आया६वाः । पवन्ताइमा । दिया२ंमा-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

३ १२ ३१२ ३२३ २३ १२३१
पुनानःसोमजागृविरव्यावारैः*परिप्रियः।
१र २र ३१
त्वं विप्रोअभवो†ङ्गिरस्तम
२ ३ १ १
मध्वायज्ञं मिमिक्षणः‡ ॥८॥ पू३¶

५ १ २१ २१ २ ४ ५
२३४दाम्। समुद्रस्या। धिविष्टपाइ। मनाइषाइणाः।
१ १र१ १ ३ ५र र ३ ५
मात्सरासोर३। मा२दा२३४औहोवा। च्यू२३४ताः॥२१॥पू२

"आयवः"§ गमनशीलाः "सोमासः" सोमाः मद्यं" मदकरं मदं आत्मीयं रसं "अभिपवन्तः" अभितो निर्गमयन्ति। कुत्रेत्युच्यते—"समुद्रस्य" अन्तरिक्षस्य "अधिविष्टपे" अधिकं समुच्छ्रितपवित्रे। यद्वा। समुद्रस्य यस्मात्समुद्रवन्ति रसाः तस्य कलशस्य "अधि" उपरि "विष्टपे" स्थाने "पवित्रे" निर्गमयन्ति। कीदृशाः? "मनीषिणः" मनस ईशितारः "मत्सरासः" मदकराः "मदच्युतः" मदकरेण रसेन च्यावयितारः॥

"विष्टपे", "विष्टपि"—"मदच्युतः", "स्वर्विदः"—इति च पाठौ॥ ८॥ पू२

---

* "अव्योवारे"-इति
† "वोङ्गिरस्तमो"-इति,
‡ "मिचनः"-इति च } ऋ०।
¶ ऋ० ७, ५, १३, १।
§ 'आयवः मनुष्याः'-इति वि०। 'आयवः'-इति मनुष्यनामसु पठितं नैघण्टकम्( २, ३ )।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

१ २ ३ २ ३ १ २ ३ १ २ ३ १

इन्द्रायपवते मदःसोमोमरुत्वतेसुतः।

५ र ४ ५र ४र ५ ४ १रर

(सोमसाम ॥) पुनानःसोमजागृविरव्याः। वारैःपा-

० १ र र २ २

रिप्रिया२ः। त्वंविप्रोअभवोङ्गाइरा२३४। स्तमा३।

१ २र १ १ २ ५र र २ ५

माध्वायज्ञा२३म्। मा२इमा२३४औहोवा। चा२३४षाः।

॥ २२ ॥ ५३

हे सोम! "जागृविः" जागरणशीलः "प्रियः" प्रीणयिता* त्वं "पुनानः" पूयमानः सन् "अव्याः" मेष्याः "वारैः" वालैर्निर्मिते दशापवित्रे परिच्चरसि। "अङ्गिरस्तम" हे अङ्गिरसां वरिष्ठ! "विप्रः" मेधावी त्वं पितृणां नेता "अभवः"† भवसि। स त्वं "नः" अस्मदीयं "यज्ञं" "मध्वा"‡ मधुना आत्मीयेन रसेन "मिमिक्ष"§ सेक्तुमिच्छसि। मिहेः सेचनार्थस्य (भ्वा०प०) सनि रूपम् ॥ ८ ॥ ५३

---

* 'प्रियः प्रियतरः, भूतानां प्रियः'-इति वि०।

† 'सार्वकालिको लङ्' (३, ४, ६)।

‡ सुप आले रूपम् (७, १, ३९)।

¶ 'मिमिच सिञ्च' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ ३ १र २र ३
सहस्रधारो अत्यव्यमर्षति
१ २ ३ १ २
तमीं मृजन्त्यायवः ॥ १० ॥५४*

५ र २ १ १र र
इन्द्रायपा। वता२इमादा२ः। सोमोमरुत्वता२इ-
१ १ २र १ १
न्द्रता२ः। स। हस्रधारः। अतिअव्यमा२र्षाती२।
१ १ २ १
तमा२इमार्जा२। तिआयार२वा३४३ः। ओ२३४५इ।
डा ॥ २३ ॥

५ र २ र १
(स्वःपृष्ठमाङ्गिरसम् ॥) इन्द्रायपा। वतेमदाः।
१र र १ १ १ १ २र
सोमोमारु२। त्वतेहो२इ। न्द्रता२ः। स। हस्रधारः।
१ २ ३ ५ २ ५ १
अतिअव्यमा। र्षातात्रो२३४वा। ऊ२३४पा। तमीहो-
१ १र २ १
२इ। मार्जा२। तिआया२३या३४३ः। ओ२३४५इ।
डा ॥ २४ ॥

५ र २ ४ ५ ४ ५ १र र
(सोमसाम ॥) इन्द्रायाउपावताइमदाः। सोमोम-
२ २ १ २र १ २
रुत्वताइन्द्र३ताः। स। हस्रधारः। अतिअव्यमा३।

---

* ऋ० ९, ३, १५, २।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकादशी ।

१ २    २ १ २ ३ १र २ र ३ १ २
पवस्ववाजसातमोभिविश्वानिवार्य्या ।
१  २ ३ १ २३१र २र
त्वᳫंसमुद्रःप्रथमविधर्म
३ १ २     ३ २
न्देवेभ्यःसोममत्सरः ॥ ११ ॥५५ *

४ ५   २१ २  २   ४ ५   १ २   ५र र
षाती । तमाऔ३होइ३इ । माजाँ । तार्या२३४औहो
२   ५
वा । या२३४वाः ॥ २५ ॥

४ ५ र  ४र   २  ५   २ १ २र
पवस्ववाजसा । इहा । तार२३४माः । अभिविश्वा-
१ २र  १  २ ५र र   १ २ २र २
निवारिया । त्वᳫंसा२मू२३४औहोवा । द्रःप्रथमेविधर्म-
२  २   १ ३  ५र र   २ ३
न् । हाइवाये३ । भ्या२ःसो२३४औहोवा । ममत्स-
२
रा१ः ॥ २६ ॥ ५४

"मदः" मदकरः "सुतः" अभिषुतः "सोमः" "मरुत्वते" मरुद्भिस्तद्वते "इन्द्राय" इन्द्रार्थं "पवते" क्षरति । ततः "सह-स्रधारः" बहुधारोपेतः सोमः "अव्यम्" अविमयं पवित्रम् "अत्यर्षति" अतिगच्छति तमिमं "आयवः" मनुष्या ऋत्विजः "मृजन्ति" शोधयन्ति ॥ १० ॥ ५४

---

* ऋ० ७, ५, १६, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी ।

१ २ ३ २३१ २ १ २
पवमानासृजत्तपवित्रमतिधारया ।
३१ २ ३ १ २ ३ १२ २२
मरुत्वन्तोमत्सराइन्द्रियाहया
३ २ ३ १ २२
मेधामभिप्रयांसिच ॥१२॥५६ *

॥ इति तृतीय-दशति ॥

४५ २ २ ४ १ २
(पवित्रम् ॥) पवमानासृजत्तपवाइ । त्रामतिधार

हे "सोम !" "विश्वानि" सर्वाणि "वार्या" वरणीयानि स्तोतॄणि† "अभि" लक्ष्य "वाजसातमः" अतिशयेनान्नस्य लम्भकस्त्वं "पवस्व" क्षर। हे सोम ! "देवेभ्यः" देवानां‡ "मत्सरः" मदकरः "समुद्रः" समुन्दनशीलः¶ "विधर्मन्" विशेषेण पोषक ! || त्वं "प्रथमे" मुख्ये श्रेष्ठे यज्ञे देवेभ्यस्तदर्थं चर ॥

"विधर्मन्"-"विधारयम्"-इति, "वाजसातये"-"वाजसातमः"-इति, "वार्या"-"काव्या"-इति च क्रमेण साम्नश्छन्दसः पाठाः ॥ ११ ॥ ५५

---

* ऋ० ७, ५, १६, ५ ।

† 'वार्या वरणीयेन उदकेन' इति वि० ।

‡ "षष्ठ्यर्थे चतुर्थीति वाच्यम्"—इति का० (पा० २, ३, ६२) ॥

¶ "समनन्तीतिवा" इत्यादि निरुक्तोक्तेः (२, १०)। 'समुद्रः समुद्रसंस्थानीयः' इति वि०।

|| "विधर्मन्=विधर्मणि, विविधकर्मणि कर्मकारणे देवे' इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२    र    र २  २          १          २
यामरुत्वन्तोमत्सराइन्द्री३याः। हयाः। मार२३इधाम्।
१  २    १  ३    ५र र      ३   ५
अभाये३। प्रा२या२३४औहोवा। सी२३४चा॥ २७ ॥५६

"पवमानाः" पूयमानाः सोमाः "धारया" आत्मीयया "पवित्रम्"* "अति" अतीत्य "असृक्षत" सृज्यन्ते। कीदृशाः ? "मरुत्वन्तः" मरुद्भिर्युक्ताः "मत्सराः" मदकराः "इन्द्रियाः" इन्द्रजुष्टाः। "मेधां"† स्तुतिं "प्रियांसि" अन्नानि च "अभि" लक्ष्य स्तोतृभ्य उभयं कर्तुं वा "हयाः" यज्ञे गन्तारः सृज्यन्ते ॥१२॥५६

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने पञ्चमस्याध्यायस्य पञ्चमखण्डः ॥ ५ ॥

॥ इति बार्हतम् ॥

---

* "पवित्रं पुनातेः। मन्त्रः पवित्रमुच्यते। 'येन देवाः पवित्रेणात्मानं पुनते सदे'त्यपि निगमो भवति॥ रश्मयः पवित्रमुच्यन्ते। 'गभस्तिपूतो नृभिरद्रिभिः सुत' इत्यपि निगमो भवति॥ आपः पवित्रमुच्यते। 'शतपवित्राः स्वधया मदन्ती' र्बहूदकाः॥ अग्निः पवित्रमुच्यते। वायुः पवित्रमुच्यते। सोमः पवित्रमुच्यते। सूर्यः पवित्र-मुच्यते। इन्द्रः पवित्रमुच्यते। 'अग्निः पवित्रं स मा पुनातु वायुः सोमः सूर्य इन्द्रः पवित्रं ते मा पुनन्तु' इत्यपि निगमो भवति" इति (नि॰ ५,६)।

† 'मेधां प्रज्ञाम्'-इति वि॰।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठेखण्डे—

सैषा प्रथमा।

१र २र३२३२ २ ३ १२ ३१ १ ३ २३१र १र
प्रतुद्रवपरिकोशंनिषीदनृभिःपुनानोअभिवाजमर्ष।
३ १ २३ १ २३१ ३१ २ ३
अश्वंनत्वावाजिनंमर्जयन्तोऽच्छा
१ २ ३ १ २
बर्हीरशनाभिर्नयन्ति ॥ १ ॥ ५७ *

२ ३५ २१ २१
(अशनम् ॥) ओइप्रतु। इहा३१। द्रवा। परि
२ २३४५ २ ३५ ३२ २१
कोइ। शन्निषीदा। औइनृभिः। इहा३१। पुना।
२ १ २३ ४५ २ ३४ ३२ २१
नोइअभि। वाजमर्षा। ओअश्वम्। इहा३१। नत्वा।
२ १ २३४५ २ ३५ ३२ २१
वाइजिनम्। मर्जयन्ताः। ओअच्छ। इहा३१। बर्हीइः।
१र २ २ ४
रशना। भा३४३इः। ना३या५न्ताई५६इ ॥ २८ ॥

४५ ४५ २१ २१
(वृषौशनं साम ॥) प्रतु। एप्रतू। द्रवा। द्रवा।
२ २३४५ ४५ ५ २१
परिकोइ। शन्निषीदा। नृभिः। एनृभिः। पुना।
२१ २ १ २३४५ ४५ ४५
पुना। नोइअभि। वाजमर्षा। अश्वम्। एअश्वाम्।
२१ २१ २ १ २३४५ ४५ ४ ५
नत्वा। नत्वा। वाइजिनम्। मर्जयता:। अच्छ। एअच्छा।

* उं० १,१,१०,१=ऋ० ७,३,२२,१=जबे १,१,४—१९,१,०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १　　२ १　　२ १र २　　३ २　　५　　५
बर्हाइ: । बर्हाइ: । रश्नाभिः । नये३४ । द्वियाइ्हा-

२ १ १ १ १
उवा । ता२३४५इ ॥ २९ ॥

४ ५ ४　　१　　र
( जानस्याभीवर्तौद्धौ ॥ ) प्रतुद्रा । वापरिकोशाम् ।

२　　२　　१　　२　　३र २　　३र ऽ　　२　　१
निषीऽ३दा । साइदा । औहोइ । औहो३वा । नृभिः

र र　　७　　२　　१ २　　३र २
पुनानोअभिवा । जमार३र्षा । आर्षा । औहोइ ।

३र ऽ　　२　　१　　र र　　७
औहो३वा । अश्वन्नत्वावाजिनम्मा । जया२३न्ताः ।

१ २　　३र २　　३र ऽ　　२　　१र २ १　　२
यांता । औहोइ । औहो३वा । अच्छाबर्हाइ: । रश्न-

१र २　　३ २　　५　　५　　२ १ १ १ १
नाभिः । नये३४ । द्वियाइ्हाउवा । ता२३४५इ ॥ ३० ॥

५र　　५　　३　　२　　५　　५　　२　　१
हाओइ्हा । उऊवा३४ । ओइ्हा । प्रतुद्रवा ।

२　　२ ३ ४ ५　　२ १　　२　　२　　१
परिकोऽ३ । शन्निषीदा । नभाइ:पुना । नो३अभि ।

२ ३ ४ ५　　२ १　　२　　१　　२ ३ ४ ५
वाजमर्षा । अश्वन्नत्वा । वा३जिनम् । भर्जयन्ताः ।

र　　५　　३　　२　　५　　५　　२ १र २ १
हाओइ्हा । उऊवा३४ । ओइ्हा । अच्छाबर्हाइ: ।

२ १ र　　२　　२　　४
रश्नना । भा२४३इ: । ना३या५०ता६५६इ ॥ ३१ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४५ १ र
( त्रिष्टुवौशनम् ॥ ) प्रातू। द्रवापरिकोशाम्।
२ २ १ २१ २ १ २ ३ ४ ५
निषी२दा। नृभाइ:पुना। नो३अभि। वाजमर्षा।
१ र र ७ २ १र २ र
अश्वन्नत्वावाजिनम्मा। जया२३ँताः। अक्ढाबर्हीइ:।
२ १ र २ २ ४
रशना। भा३४३इ:। ना३या५ँ॰ताई५ईइ ॥ ३२ ॥ ५७

उशनाऋषिः*। हे सोम! "नु" क्षिप्रं † "प्रद्रव" प्रगच्छ आगत्वाच "कोशं" द्रोणकलशं परिनिषीद" निषसोभव। "नृभिः" नेतृभिः "पुनानः" पूयमानः "वाजम्" अन्नं यजमानार्थमुद्दिश्य "अभ्यर्ष" [वाजं सङ्ग्रामं वा] "वाजिनं" बलवन्तं "अश्वं न" अश्वमिव तं यथामार्जयन्ति तद्वत् ताम् "अर्जयन्तः" शोधयन्तः "वर्हिः" यज्ञम् अच्छ "प्रतिरशनाभिः" रशनावदायताभिरङ्गुलीभिः "नयन्ति" अध्वर्यु प्रमुखाः ॥ १ ॥ ५७

---

* "काव्यः"-इति ऋषि नै०।

† 'अच्छ आप्तुम्'-इति वि०। मन्त्रश्रुतौ 'अच्छा'-इति दीर्घो निपातत्वात् ( ६, ३, १३६ पा०। )

‡ 'रशना यूपयोजनी'-इति वि०।

¶ "नु-इत्येषोनेककर्मा, इदन्नु करिष्यतीति हेत्वपदेशे, कथन्नु करिष्यतीत्यनुपृष्टे, नन्वेतदकार्षीदिति चाथाप्युपमार्थे भवति वृक्षस्य नु ते पुरुहूतवयाः वृक्षस्येव ते पुरुहूत शाखाः"-इत्यादि नि० १, ४। "नु"-इति क्षिप्रनामसु च प्रथमन्नैघण्टुकम् ( २, १५ )।

§ 'वर्हिः प्रवृद्धम्'-इति वि०।

‖ 'रशनाः'-इति अङ्गुलिनामसु षष्ठं नैघण्टुकम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१　२र ३ १ २　　३ २ ३ २ ३ २ ३ १ २
प्रकाव्यमुशनेव ब्रुवाणो देवो देवानां जनिमा विवक्ति ।
१ २ ३ १　२　३ २
महिव्रतः शुचिबन्धुः पावकः
३ १ २ ३ २ ३क २र ३ १ २
पदा वराहो अभ्येति रेभन् ॥ २ ॥ ५८*

४८　१र　१
( वाजसनीद्वे ॥ ) प्रा । काविया२म् । उशने वा२ ।
१ २　१र र　१र　१
ब्रवा२३णाः । देवोदेवा२ । नाञ्जनिमा२ । विवा-
२ १　१　१ २
२३क्तौ । महिव्राता२ः । शुचिबन्धू२ः । पवा२३काः ।
१ र　१र　३ २ ५र र　२
पदावारा२ । हो अभिया२इ । तिरा३४औहोवा । भा
१ १ १ १
२३४५न् ॥ ३३ ॥
१ र　१　१　१र र
प्रकाविया२म् । उशने वा२ । ब्रुवाणा२ः । देवो
१र　१　१
देवा२ः । नाञ्जनिमा२ । विवाक्तौ२ । महिव्राता२ः ।
१　१　१ र　१
शुचिबन्धु२ । पवाका२ः । पदावारा२ । हो२ ।
३ २ ५र र　२ १र ३ १ १ १ १
भिया३४औहोवा । तिरेभा२३४५न् ॥ ३४ ॥

---

* उ० ४, २, ९, १= ऋ० ७, ४, १२, २= जद्वे ६, २, ५ ;— १६, २, १९ ;— २१, १, ३—९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र र १ २ ३
(वाजजित्साम ॥) प्रकाव्यमुशने वब्रू३वाणी । देर-
५ २र र र र १ २ ३ ५ २
३४वाः । देवानाञ्जनिमावी३वाक्ती । मा२३४ची । व्रतः
१ २ ३ ५ २ र र र १
शुचिबन्धुः पा३वाकः । पा२३४दा । वराहोऽभ्येतिरा
२ १ १ १ १
२३ । हाउवा३ । भा२३४५न् ॥ ३५ ॥

५र र १ २ १र
(वाराहम् ॥) हाउहाउ । ऊप् । प्रकावियाम् ।
२ १ र २ ३ ४ ५ २र१र र २ १ २
उशने । वब्रूदाणाः । देवोदेवा । ना३०जनि । मावि
४ ५ २ १ २ २ ३ ४ ५ र
वक्ती । महिव्रताः । शुचिवा३ । धुःपवाकाः । हाउ
र १ २ १र २ १ २
हाउ । ऊप् । पदावरा । हो३अभि । आ२३४३इ ।
२ ४
तीरा५इभा६५६न् ॥ ३६ ॥

॥ इति पञ्चदशस्यार्द्धः प्रपाठकः ॥

वृषगणो वासितऋषिः* । "उशने एव" तन्नामकऋषि-रिव "काव्य" कविकर्म स्तोत्रं "ब्रुवाणः" "देवः" स्तोता †

* "वृषगणो वासिष्ठः"-इति ऋषि- नै० ।

† 'देवः सोमः'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अयमृषिर्वृषगणोनाम "देवानाम्" इन्द्रादीनां "जनिमा" जन्मानि* "प्रविवक्ति" प्रकर्षेण वदति। [ वच परिभाषणे (अदा०प० )। व्यत्ययेन विकरणस्य श्लुः ( ३,१,८५) बहुलं छन्दसीति (७,४,७८) अभ्यासस्य इत्वम् ] "महिव्रतः प्रभूतकर्मा†। "शुचिबन्धुः" बध्नन्ति शत्रूणिति बन्धूनि तेजांसि बलानि वा दीप्ततेजस्कः‡ "पावकः" पापानां शोधकः "वराहः" वरञ्च तदहश्च वराहः [ "राजाहःसखिभ्यष्टच्"-इति टच् समासान्तः। तस्मिन्नहनि अभिषूयमाणत्वेन तद्वान्। अर्शआदित्वान्मत्वर्थीयोऽच् ] तादृशः¶ सोमः "रेभन्" शब्दं कुर्वन् § "पदानि" स्थानानि पात्राणि "अभ्येति" अभिगच्छति। यद्वा। यद्वा कश्चन वराहः "पदा" पदेन भूमिं विक्रियमाणः शब्दं करोति तद्वत्॥ २॥ ५८

* 'जन्मानि कर्माणि वा'-इति वि०।

† 'महिव्रतः महतः कर्मणः सन्नस्य वा धारयिता' इति वि०।

‡ 'शुचिबन्धुः शोभनबन्धुः शुद्धबन्धुर्वा'-इति वि०।

¶ 'वराहः. सोमः'-इति वि०। "वराहो मेघो भवति वराहारः। वरमाहारमाहार्षीरिति च ब्राह्मणम्। विध्यद्वराहन्तिरोअद्रिमस्तेत्यपि निगमो भवति। अयमपीतरो वराह एतस्मादेव। वृहति मूलानि वरं वरं मूलं वृहतीति वा। वराहमिन्द्रएमुषमित्यपि निगमो भवति। अङ्गिरसोऽपि वराहा उच्यन्ते 'ब्रह्मणस्पतिर्वृषभिर्वराहैः। अथाप्येते माध्यमिका देवगणा वराहव उच्यन्ते—'पश्यन् हिरण्यचक्रानयो दंष्ट्रान् विधावतो वराहून्"-इति नि० ५, ४।

§ 'रेभन् स्तुवन्' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

तिस्रो वाच ईरयति प्र वह्निर्ऋतस्य धीतिं ब्रह्मणो मनीषाम्।

गावो यन्ति गोपतिं पृच्छमानाः

सोमं यन्ति मतयो वावशानाः॥ ३ ॥ ५९ *

( संक्रोशास्त्रयः ॥ ) हाइ। हो। हा३हाइ।

तिस्रोवाचा। ई३रय। तिप्रवह्नीः। हाइया२३हाइ।

तिस्रो वाचाः। ई३रय। तिप्रवह्नीः। आ। हाइया२३हाइ।

तिस्रो वाचाः। ई३रय। तिप्रवह्नीः। हाइहा। इहाइहा।

औ३हो३१इ। इहा। तिस्रो वाचाः। ई३रय। तिप्रवह्नीः।

हाइया। इयाइया। औ३हो३१इ। इया। तिस्रो वाचाः।

ई३रय। तिप्रवह्नीः॥ १ ॥

( वैणविशाले द्वे ॥ ) इहाइह। इहाइहा३हो।

वाहाइह। तिस्रो वाचाः। ई३रय। तिपवह्नीः। इहा

---

* उ० २, २, १०, १ = ऋ० ७, ४, १७, ४ = ऊहे २, १, १७ = ऊह्य ३, २, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ ५ ४ ४
वापु। इहोवार३। ई३४हहाइ। ई५। इहा।

२ १र र २ १ २ ३ ४ ५ २ १
तिस्रोवाचाः। ई३रय। तिप्रवर्ह्णीः। इहोवार३।

२ ५ ४ २ १र र २ १ २ ३
ई३४हहाइ। इहा। तिस्रोवाचाः। ई३४रय। तिप्र-

४ ५ १ २ २ १ २ २ ५र र
वर्ह्णीः। आऔ३हो। आऔ३हो३४। औहोवा।

२ २ १र र २ १ २ ३ ४ ५ १
हा३हाइ। तिस्रोवाचाः। ई३रय। तिप्रवर्ह्णीः। आ।

२ र र २ ३र ४र ५ २ १र र २
औ३होवाहा३४। औहोवा। तिस्रोवाचाः। ई३

१ २ ३ ४ ५
रय। तिप्रवर्ह्णीः॥ २॥

३र २ ४ ५ ४ २ २ १ २ १
आहो३। आहाआहा। ऋतस्यधाइ। तौ३०ब्रह्म।

२ ३ ४ ५ १ २ १ २ ३र २ १ २र १र
णामनीषाम्। हहहोइ। हहाहहो३। गावोयन्ताइ।

२ १ २ ३ ४ ५ १ २ १ २ ३र २ १
गो३पतिम्। पृच्छमानाः। इहहोइ। इहाहहोइ।

२र १ २ १ २ २ ४
सोमंयन्ताइ। मतयः। वां३४३। वा३शा५नाई५६ः॥

॥ ३॥ ५९

१ ५ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पराशरऋषिः*। "वह्निः" वोढा यजमानः "तिस्रो वाचः" ऋग्यजुःसामात्मिकाः स्तुतीः प्रेरयति। तथा "ऋतस्य" यज्ञस्य "धीतिं" धारयित्रीं† "ब्रह्मणः"‡ परिवृढस्य सोमस्य "मनीषां" मनस ईशित्रीं कल्याण-वाचं च प्रेरयति। किञ्च। "गोपतिं"¶ वृषभं यथा गावोऽभिगच्छन्ति तद्वत् गवां स्वामिनं सोमं "गावः" "पृच्छमानाः" पृच्छन्त्यः सत्यो "यन्ति" स्व-पयसा माश्रयितु मभिगच्छन्ति। तथा "वावशानाः" कामयमानाः "मतयः" स्तोतारः§ "सोमं" "यन्ति" स्तोतु मभिगच्छन्ति‖ ॥ ३ ॥ ५९

---

* "शाक्त्य"-इति ऋषि-नि०। "पराशरः पराशीर्णस्य वसिष्ठस्य स्थविरस्य जज्ञे। पराशरः शतयातुर्वसिष्ठ इत्यपि निगमो भवति। इन्द्रोऽपि पराशर उच्यते पराशातयिता यातूनाम् इन्द्रो यातूना मभवत् पराशर इत्यपि निगमो भवति"-इति नि० नै० ६, ३०॥

† 'धीतिं कर्म'-इति वि०।

‡ 'ब्रह्मणो मनीषां वेदोक्तानि कर्माणि'-इति वि०।

¶ 'गोपतिं यजमानं दक्षिणासम्बन्धेन पृच्छमान' इव, वृषभं वा' इति वि०।

§ मतय इति स्तोतृनामसु न दृश्यते परं मेधावि-नामसु द्वाविंशतितमं निघण्टुक-मिति लक्ष्यते (३, १५)। 'मतयः बुद्धयः'-इति वि०।

‖ यास्कव्याख्यानन्त्वित्थम्—"वह्निरादित्यो भवति स तिस्रो वाचः प्रेरयत्यृचो यजूंषि सामान्येतस्यादित्यस्य कर्माणि ब्रह्मणो मतान्येष एवैतत् सर्वमक्षरमधीत्यधिदैवतम् अथाध्यात्मं वह्निरात्मा भवति स तिस्रो वाच ईरयति प्रेरयति विद्यामतिबुद्धिमता मृतस्यात्मनः कर्माणि ब्रह्मणो मतान्ययमेवैतत् सर्वमनुभवत्यात्मगति माचष्टे"-इति (प० ९, १४)॥ विवरणकारस्तु पूर्वं यथावत् व्याख्यायानन्तरमपरमपि व्याख्यानजालमाविष्कृतवान्, तद्यथा—'यद्यपि पावमानीषु सोममुक्त्वा अन्या देवता न सम्भवति तथाप्यष्टादशे व्याख्यातेति कृत्वा तेनापि आत्मनानुस्मरणार्थं मालिख्यत। तिस्रो वाचः। ऋग्यजुःसामानि अथवा तिस्रो वाचः सत्वरजस्तमांसि अथवा जाग्रत्स्वप्नसुषुप्ति-वृत्तयः। ईरयति प्रेरयति उदकरश्मींश्च वहतीति वह्निरादित्यः। ऋतस्य आदित्यस्य



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ २ ३ १ २ ३ १ २
अस्यप्रेषा हेमनापूयमानोदेवोदेवेभिःसमपृक्तरसम्।
३ २ ३ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ २ ३ १ २
सुतःपवित्रम्पर्येतिरेभन्मितेव सद्मपशुमन्तिहोता॥४॥६०॥*

३ २ ३र ४र ५ १र २
(अगस्त्यस्य यमिके द्वे ॥) अस्या३४औहोवा। प्रेषा। हे३
१ र २ ३ ४ ५ ३ २ ४ २ ३र ४र ५
मना। पूयमानाः। उहुवाइ। अस्या३४औहोवा।
१र २ १ र २ ३ ४ ५ २
प्रेषा। हे३मना। पूयमानाः। हाइ। उहुवा।
३र २ ३र ४र ५ १र २ १ २ ३ ४ ५
देवा३४औहोवा। देवाइ। भौ३ःसम। पृक्तरसाम्।

---

धीतिः। अथवा ऋतस्य सत्यस्य ब्रह्मणः। अथवा ऋतस्य धीति यज्ञस्य वा आदित्यस्य वा हय इव 'अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते'। 'ब्रह्मणो मनीषा गावः रश्मयः तेन विसृष्टा अथवा उदकानि। एतमेव गोपति रश्मि-स्वामिनं वा पृच्छन्त इव सोमं यन्ति पृथिवीं वसाना सर्वोपकाराय सोमं आदित्यं मतयः। प्रज्ञायते विषयाः अतिप्रकाशन्त इति रश्मयः। वावशाना आदित्यं यन्ति प्रविशन्ति। अध्यात्मे विद्या वह्निरात्मा भवति। वश्यादिगुणसंयोगात। सः तिस्रो वाचः प्रेरयति। विद्या बुद्धिमनांसि। विद्या महान्। बुद्धिरहङ्कारं मनइति प्राधान्याद् भूतेन्द्रियाणि ऋतस्यात्मनः धीतिं मनसः इष्टानि कर्माणि प्रेरयन्ति ब्रह्मणः आत्मनः। गोपाः गोपायति। आत्मानं इन्द्रियाणि स्वामिनं पृच्छमानाः। आत्मानं तदभिप्रायेण शब्दाद्यनुगमनात। एतमेवमात्मानं सोमङ्कामयमाना इव यन्ति न भयः तदर्थं प्रादुर्भवन्ति'-इति।

* उ० ६, २, ८, १ = ऋ० ७, ४, ११, १ = ऊह६'२। ७,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ ३र ४र ५ १ २ १
२
हाउ। हौंइ। सुता३४औहोवा। पवाइ। त्रा३म्परि।
२ ३ ४ ५ २ र २ २ ३र ४र ५ १
एतिरेभान्। हा। हाऔहोइ। मिता३४औहोवा। वसा।
२ १ २ ३ ४ ५ १ २ २ ४
ह्मा३पशु। मन्तिहोता। पशु। मा३४३। ती३हो५

ताई५६॥ ४॥

१र २र ३र २ १ ३ २ १ र १ २र
औहोवाहा३होइ। इहा। अस्यप्रेषा। हे३मना।
२ ३ ४ ५ २र १र र २ १ २ ३ ४ ५
पूयमानाः। देवोदेवाइ। औ३ःसम। पृक्तरसाम्।
२ १ २ १ २ ३ ४ ५ १र २र ३र २
सुतःपवाइ। त्रा३म्परि। एतिरेभान्। औहोवाहा-
१ ३ २ १र २ १ २
३होइ। इहा। मितेवसा। ह्मा३पशु। मा३४३।
२ ४
ती३हो५ताई५६॥ ५॥ ६०

वसिष्ठऋषिः*। "अस्य" सोमस्य "प्रेषा" [ प्रेषतिर्गत्यर्थः (भ्वा० प०) क्विपि रूपं। सावेकाच इति विभक्तेरुदात्तत्वं † प्रेषा ] प्रेरकेण‡ "हेमना"¶ हिरण्येन "पूयमानः" हिरण्य-

* "मैत्रावरुणः"-इति ऋषि-नै०।

† "सावेकाचस्तृतीयादिर्विभक्तिः"-इति पा० ६, १, १६८।

‡ 'प्रेषा प्रकर्षेच्छया'—इति वि०।

¶ बाहुलकादल्लोपाभावः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ ३ १ २ २ २
सोमःपवतेजनितामतीनाञ्जनितादिवोजनितापृथिव्याः।
७ १र २र ३ १र २र ३ १ २ ३ १र २र
जनिताग्नेर्जनितासूर्यस्यजनितेन्द्रस्यजनितोतविष्णोः॥५॥६१*

२र र र १
(कालकाक्रन्दौ॥) सोमःपवतेजनितामा२ताइना२म्।
र र र १ १र र र
जनितादिवोजनितापृ३थाइव्या२ः। जनिताग्नेर्जनितासू।

पाणिरभिषुणोतीति हिरण्यसम्बन्धः। तादृशः "देवो" दीप्य-मानः अंशुः "रसम्" आत्मीयं "देवेभिः" देवैः सह† "समपृक्त" सम्पर्कयति संयोजयति। [पृची सम्पर्के (अदा० आ० ] ततः "सुतः" अभिषुतः सोमः "रेभन्" शब्दायमानः सन् "पवित्रम्" ऊर्णास्तुकेन निर्मितं‡ "पर्येति" परिगच्छति। कथमिव? "होता" देवाना माह्वाता¶ ऋत्विक् "मितेव" निर्मातेव§ "पशुमन्ति" बहुपशून् "सद्म" सदनानि यज्ञगृहान् यथा पर्येति तद्वत्॥ ४॥ ६०

* उ० २, १, १९, १ = ऋ० ७, ४, ६, ५ = ऊहे ३, २, १९;—८, २, १;—१२, १, १०—१६।

† 'देवेभिः देवेभ्यः वस्वादिभ्यः'-इति वि०।

‡ दशापवित्रमित्यर्थः।

¶ होतेति ह्वेञोरूपम् (६, १, ३४ पा०)।

§ 'मिता कर्त्ता' इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



० २ १र २ १ २ २
रियार३स्या। जनितेन्द्रा। स्या३जनि। ता३४३। ता२

४
वा५इ्ष्णो६५६ः॥ ६॥

३ ४ ५ र र २ २ ४ १
सोमःपवतेजनिता। ए३। औ३हो५वाऽ। माता

२ १र २ १र २ १र २ १र
२३४५इ्ना६५६म्। जनिताद्दिवोजनितापृथिव्याः। जना-

३ ५ २ र २ ४
इ्ता२३४ग्नेः। जनिता। सू३४३। री३या५स्या६५६।

२ १र २ १र ३ १ १ १ १
जनितेन्द्रस्यजनितोतविष्णो२३४५ः॥ ७॥

५र ४ ४ ५
(जनित्रे द्वे॥) हाउजनत्। ३। जनद्धाउ। ३।

१ १ २र १ २
हाइ। जनत्। २। हाइ। जनात्। सोमःपवा। ते३

१ २ ३ ४ ५ २ १र २ १ २ २
जनि। तामतीनाम्। जनितादाइ। वो३जनि। तापृ

५ ५ २ १र २ १ र २ ३ ४ ५ ५र
थिव्याः। जनिताग्नाइः। जनिता। सूरियस्या। हाउ

४ ४ ५ १
जनत्। ३। जनद्धाउ। ३। हाइ। जनत्। २। हाइ।

१र २ २ २ ४
जनात्। जनितेन्द्रा। स्या३जनि। ता३४३। ता३वा

५इ्ष्णो६५६ः॥ ८॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ४ ५ १
जनद्धाउ । ३ । जनदाउ । ३ । जनत् । होइ । ३ ।
२र १ २ १ २ ३ ४ ५ २ १र
सोमःपवा । ते३जनि । तामतीनाम् । जनितादाइ ।
२ १ २ ३ ४ ५ २ १र २१र२ ३ ४ ५
वो३जनि । तापृथिव्याः । जनिताग्नाइ । जनितासूरियस्या ।
४ ५ ४ ५ १ र २
जनद्धाउ । ३ । जनदाउ । ३ । जनत् । होयि । ३ । जनि-
१ र २ १ २ २ ४
तेन्द्रा । स्या३जनि । तो३४३ । ता३वा५यिष्णो६५ई:

॥ ८ ॥ ६१

प्रतर्दनऋषिः* । "सोमः" अभिषूयमाणः "पवते" पात्रेषु क्षरति । कीदृशः ? "मतीनां" बुद्धीनां । यद्वा । मननीयानां स्तुतीनां "जनिता" जनयिता† [ "जनिता मन्त्रे" (६,४,५३) इति निपातेन णि-लोपः ] किञ्च "दिवः" द्युलोकस्य "जनिता" प्रादुर्भावयिता । तथा "पृथिव्याः जनिता" । "अग्नेः" "जनिता"

---

* "दैवोदासिः"-इति वि० ।

† अत्रेदं विवरणम्—'सोमः पवते । विनियोगोऽस्य चतुर्थेऽहनि । अधियज्ञपक्षे पर्णसोमस्य पृथिव्यादीनां । जनयितृत्वेन सम्भवात् । यज्ञद्वारेण स्थितिहेतुत्वात् जनयतीति जनिता मतीनां जनयिता दिवः जनयिताग्नेर्जनयिता सूर्यस्य जनयिता । इन्द्रस्य जनयिता । उत अपि विष्णोर्व्याप्तिमत इति । जनयिता पृथिव्यादिभ्यः रसेन वर्द्धयिता । अधिदैवेनेन्द्रः सोमः यदात्मनि तदायमर्थः । सर्वमिदं श्रयति । आत्मा सोमः पवते साधयति भोक्तृत्वात । आत्मा सत्कारण वा । प्रधानभूतेन्द्रियाणां जनयिता पृथिव्यादीनाञ्च द्वयोर्ग्रहणनान्यत्रिण्यापि अग्न्यादीनाञ्च स्थानानां तिसृणां विष्णोश्च व्याप्तिमतः ॥ "



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

३१ २ ३१र २र ३ १ २ ३ १ २ ३ १ २
अभित्रिपृष्ठंवृषणंवयोधामङ्गोषिण*मवावशन्तवाणीः।
३१ २ ३ १ २ ३ २उ ३ १ २ ३ १ २ ३ १ २
वनावसानोवरुणोनसिन्धु†र्विरत्नधादयतेवार्याणि॥ ६॥६२॥‡

(अङ्गिरसां व्रतोपोहः॥) ओ३हायि। ओ३हा। ओहा।
दुया२। ओ३हा३ए। अभित्रिपा। ष्ठा३०वृष। णंव-
योधाम्। अङ्गोषिणाम्। अवाव। शन्तवाणीः।
वनावसा। नो३वरुणोनसिन्धूः। ओ३हायि। ओ३-
हा। ओहा। दुया२। ओ३हा३ए। विरत्नधाः।
दयते। वा३४३। यो३याणा३५ई यि॥ १०॥ ६२

प्रकाशयिता। "सूर्य्यस्य" सर्व्वप्रेरकस्यादित्यस्य "जनिता" "इन्द्रस्य" जनिता पानेन मदस्य जनयिता। "उत" अपि च। "विष्णोः" व्यापकस्य "जनिता" जनयिता¶। एतत्सर्वं सोमेऽभिषूयमाणे भवति सोमेन हि देवताप्यायन्त इति॥ ५॥ ६१

---

* "आङ्गूषाणाम्"-इति, } ऋ०।
† "सिन्धून्"-इति च }

‡ उ० ६, २, ११, १ = ऋ० ७, ६, २६, २ = ऊहे ७, २, १७।

¶ अवाह यास्कः—"सोमः पवते सोमः सूर्यः प्रसवनाज्जनिता मतीनां प्रकाशनकर्मणामादित्यरश्मीनां दिवो द्योतनकर्मणामादित्यरश्मीनां पृथिव्याः प्रथनकर्मणा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

१ २　 ३१ २ ३ १र २र ३ १ २ ३ १र २र　 १ २
अक्रान्त्समुद्रः प्रथमे विधर्मञ्जनयन्प्रजा भुवनस्य गोपाः* ।

वसिष्ठ ऋषिः† । "त्रिपृष्ठं" त्रीणि पृष्ठानि द्रोणकलशादि-स्थानानि सवनानि वा यस्य स तथोक्तस्तम् । "वृषणं" वर्षकम् । "वयोधाम्" अन्नस्य दातारम्‡ । "अङ्गोषिणं" आघोषन्तं सोमं¶ "वाणीः" स्तोत्ररूपा वाचः "अवावशन्त" कामयन्ते शब्दायन्ते वा । "वना" वनानि उदकानि "वसानः" । आच्छादयन् "वरुणो न" वरुण इव§ "सिन्धुः" अपां स्यन्दयिता पर्यन्तप्रदेशानाच्छादयति तद्वत् । "रत्नधाः" रत्नानां दाता सोमः "वार्याणि" धनानि‖ "दयते" स्तोतृभ्यः प्रयच्छति ॥ ६ ॥ ६२

---

मादित्यरश्मीनां, सूर्यस्य स्वीकरणकर्मणामादित्यरश्मीनां, विष्णोर्व्याप्तिकर्मणा मादित्य-रश्मीनामित्यधिदैवतम् । अथाध्यात्मं सोम आत्माप्येतस्मादेवेन्द्रियाणां जनितेत्यर्थः । अपिवा सर्वाभिर्विभूतिभिर्विभूतत आत्मेत्यात्मगति माचष्टे"—इति प० २, १२ ।

* "भुवनस्य राजा"—इति ऋ० ।

† "मैत्रावरुणः"—इति ऋषि नै० ।

‡ "सुतः", "सुतं", "वयः"-इति त्रीण्यपि पदानि पाठभेदात् सप्तमनैघण्टुकत्वेन श्रयन्ते (२, ७)। 'वयोधा मन्नानां धातारं यशस्विनं वा'—इति वि० ।

¶ "आङ्गूषस्तोम आघोषः "एनाङ्गूषेण वयमिन्द्रवन्तः" अनेन स्तोमेन वयमिन्द्र-वन्तः"—इत्यादि नि० ५, ११ ।

§ "वरुणः वृणोतीति सतः"—इत्यादि नि० १०, ३—४ ।

‖ 'वार्याणि वननीयानि धनानि'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २ ३ २ ३ २ ३ १ २३१र २र ३ १र
वृषापवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे स्वानो*-
२र
अद्रिः ॥ ७ ॥६३†

२ १ १ २र १ २ १र २ १
(सम्यावैयश्वम् ॥) हो। होपि। अक्रान्त्समुद्रः प्रथमे विधामान्।
१ २ १ २ १ २ र १ १ १ र
होहोयि। जनयन् प्रजा भुवनस्य गोपाः। हो। होयि वृ
२र १ २र १ २ १र २ऽ १ २ १
षापवित्रे अधिसानो २ अ। व्यायि। हो। हो। बृह
र र ७ र र र १र र २ र र २
त्सोमो२ वावृधे स्वानो ३ अ। द्रा। औ३। होवाहाउवा
२ २र १र १ १ १ १
३। ए३। स्वानाअ। द्री२३४५ः॥ ११ ॥ ६३

पराशरऋषिः‡। "समुद्रः" अस्मादापः सन्द्रवन्ति स समुद्रः अपां वर्षकः। "गोपाः" यज्ञस्य रक्षकः सोमः "प्रथमे" विस्तृते "भुवनस्य" उदकस्य¶ "विधर्मन्" विधारकेऽन्तरिक्षे "प्रजाः" "जनयन्" उत्पादयन् "अक्रान्" सर्व्वमतिक्रामति [क्रमते- लुङि, तिपि, इड़भावे वृद्धौ च कृतायां सिज्लोपे मकारस्य

---

* "सुवान"—इति ऋ०।

† उ० ५, २, १, १=ऋ० ७, ४, १८, प= ऊहे १७, २, १;—२३, २, ५— ८—९; ऊह्येऽ, २, ५।

‡ "प्राक्ताः"—इति ऋषि-नै०।

¶ "भुवनम्"-इति उदकनामसु पञ्चाशत्तमं नैघण्टुकम् ( १,१२ )।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

१ २　३ २ ३ २ ३ १ २ ३ २ ३ १ ३　३ १ २　३ २
कनिक्रन्ति हरिरासृज्यमानः सीदन्वनस्य जठरे पुनानः ।
१ २ ३ १ ३　३ २ ३ १ र　२ र ३ १ २　३ १ २
नृभिर्यतः कृणुते निर्णिजं गामतो मतिं जनयत स्वधाभिः ॥८॥६४ *

मोनोधातोरिति नकारे रूपम्] "वृषा" कामानां वर्षिता "स्वानः" अभिषूयमाणः† ॥

"अद्रिः"-"इन्दुः" इति च साम्नऋचः पाठौ ॥ ७ ॥ ६३

---

* ऋ० ७, ४, ५, १ ।

† अथेदं विवरणम्—

"अक्रान् समुद्रः विनियोगोऽस्य नवमेऽहनि, क्रान्तत्वात् प्रथमे परमे उत्कृष्टे विधर्मणि धारणेन नयन् प्रजाः प्रजायन्त इति प्रजाः देवाः याः भुवनस्य गोपाः भूतानां रचिता वृषा सक्ता पवित्रे वा लमाय । अधि उपरि सानो समुत्पन्नो अव्ये अविमये । बृहत् सोम वावृधे वर्द्धते स्वानः अद्रिः अदरणः । यद्वा अक्रान् समुद्रः सामर्थ्यात् अत्यक्रमीत् अतीतं गच्छत्युदयादस्तं सदा समुद्रः । आदित्यः प्रथमे प्रकृष्टे व्योमन् सामर्थ्यादन्तरिक्षे प्रजा जनयन् वर्षकर्मणा । भुवनस्य त्रैलोक्यस्य गोपा रचिता वृषा वर्षणशीलः । पवित्रे व्याप्तिमये अधिसानः अभिषिच्यमाणः सौम्यैः । वावृधे वर्द्धते बृहदिति बृहद्विशेषणम् । स्वानः सुतः अद्रिरादित्य अदरणः अत्यक्रामत् अधिष्ठितवान् । समुद्रः आत्मा अभिद्रवत् तं भूतानि परमेभ्यः धने भूतेन्द्रियमिश्रशरीरे जनयन् ज्ञानकर्मणा बोध्य मुत्पादयन् प्रजा वर्द्धयन् । भुवनस्य गोप्ता प्रकाशरूपत्वात् । वृषा पवित्रे सत्यमये आत्मा वर्षिता भवति शरीररूपेण पवित्रे ज्ञानमये अवतेर्गत्यर्थः । गत्यर्थास्र बुद्ध्यर्थाः । अधिसानो सम्बध्यमान-शब्दादिषु महत्त्वावृधे सुष्ठु वर्धितं पवित्रे । प्रवः अद्रिः अदरणः"—इति ॥

यास्कस्त्वेवं व्याख्यातवान्—"अत्यक्रमीत् समुद्र आदित्यः परमे व्यवने वर्षकर्मणा जनयन् प्रजा भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधिसानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यधिदैवतम् । अथाध्यात्ममत्यक्रमीत् समुद्र आत्मा परमे व्यवने ज्ञानकर्मणा जनयन् प्रजाः भुवनस्य राजा सर्वस्य राजा । वृषा पवित्रे अधि सानो अव्ये बृहत्सोमो वावृधे सुवान इन्दुरित्यात्मगतिमाचष्टे"—इति प० २,१६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(सामसामनि द्वे॥) कानो। क्रान्तो२क्रान्तो२। हरिराहृज्य-
मा२३ना३:। सायिदान्। वाना२वाना२। स्यजठरेपुना२३-
ना३:। द्रभीः। याता२याता२:। कृणुतेनिर्णिजा२३-
गा३म्। आताः। माती२म्माती२म्। जनयता२३स्वा२र्धा
२३४ओहावा। भो२३४५:॥ १२॥

कनिक्रन्तिहा। होयि। हरिराहृज्यं। मा२३४ना।
हाहोयि। सोदन्वनस्यजठरेपुना२३नाः। हाहोयि। नृभि
र्यतःकृण्डतेनिर्णिजा२३ङ्गाम्। हाहोयि। अतोमतायिम्
जनयता२३। स्वा२र्धा२३४औहोवा। भो२३४५:॥१३॥६४

प्रस्कण्व ऋषिः*। "सृज्यमानः" आ समन्ताद्धि सृज्यमानो-ऽभिषूयमाणः† "हरिः" हरितवर्णः सोमः "कनिक्रन्ति" पुनः पुनः शब्दायते [क्रन्दतेर्यङ्लुकि, तिपि, इडभावे, "दाधर्त्तिदर्धर्त्ती त्यादिना‡ निपातनादभ्यासस्य निगागमः। अभ्यस्तस्वरः¶ ]

* "काण्वः"-इति ऋषि-नै०।

† 'सृज्यमानः संस्तूयमानः'-इति वि०।

‡ "दाधर्त्ति दर्द्धर्त्ति दर्द्धर्षि बोभूतु तेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च" —इति पा० ७, ४, ६५।

¶ "अभ्यस्तानामादिः"-इति पा० ६, १, १८९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

३ २उ ३ १ २ ३ २ ३ १ ३ २ ३ १ २ ३ १ २
एषस्यतेमधुमाꣳइन्द्रसोमोवृषावृष्णःपरिपवित्रेअक्षाः ।
३ १ २ ३ १ २ ३ १ २ ३ २ ३ उ ३क २र
सहस्रदाःशतदाभूरिदावाशश्वत्तमम्बर्हिरावाज्यस्थात्॥९॥६५*

४ ५ ४ ५ ३ २ ४ ५ र ४र ५
(ऐषम्॥) एषाएषाः । स्यता३१२३४यि । मधुमाꣳइन्द्रसोमः ।
र ३ २ ५ ४ ५र र
वृषावृषाइए । वृष्णो३१२३४ः । परिविन्नेअक्षाः । सहस्रा
५ ३ २ ५ ४र ५ ४र ५र ५
इए । स्रदा३१२३४ः । शतदाभूरिदावा । शश्वत्तस्माइदे ।
२ २ र ५र ४ ५ ५ ५
तमा३१२३४म् । बर्हिरावाजिपे । ह्वियाइहाउवा स्था२
१ १ १ १
२३४५त् ॥ १४ ॥ ६५

तथा "पुनानः" पूयमानः "वनस्य" वननीयस्य चास्य द्रोण-कल-शस्य "जठरे" "सीदन्" उपविशन् शब्दायते । किञ्च "नृभिः" कर्मनेतृभिर्ऋत्विग्भिः "यतः" संयतः सोमः "गाः" गो-विकारान् क्षीरादीन् आच्छादयन् "निर्णिजं" शुद्धम् आत्मनोरूपं † "कृणुते" ग्रहादिषु करोति । अतोऽस्मै सोमाय "मतिं" मननीयां स्तुतिं "स्वधाभिः" हविर्भिः सह "जनयत" स्तोतारोऽजनयन् [ झस्यान्तादेशाभावः छान्दसः । अदादेशः ] यद्वा हे स्तोतारः अस्मै सोमाय स्तुतिं जनयत उत्पादयत कुरुतेति यावत् ॥ ८ ॥ ६४

* ऋ० ७, ३, २९, ४ ।
† "निर्णिक्"-इति रूपनामसु प्रथमं नैघण्टुकम् ( ३, ७ ) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

१२ ३१२ २२ ३१र २र३ १ ३२ ३ १ २
पवस्वसोममधुमाँ ऋतावापो वसानो अधिसानो अव्ये।
३१ २ २१२ ३ १ १ ३१२२
अवद्रोणानिघृतवन्ति* रोहमदिन्तमोमत्सर इन्द्र-
१ २
पानः ॥ १० ॥ ६६†

॥ इति चतुर्थ-दशति ॥ ४ ॥

उशना ऋषिः‡। हे इन्द्र! "वृष्णः" वर्षकस्य "ते" तुभ्यं [चतुर्थ्यर्थे षष्ठी¶] "एषः" "स्यः§" स सोमः "मधुमान्" माधुर्योपेतः "वृषा" वर्षकः "पवित्रे" "पर्यक्षाः" पर्यस्रवत् [क्षरतेर्लुङि रूपम्] स एव "सहस्रदाः" सहस्रसङ्ख्याकस्य धनस्य दाता "शतदाः" शतसङ्ख्याकस्य दाता "भूरिदावा"‖ ततोऽपि भूरेर्दाता 'वाजी' बलवान् सोमः "शश्वत्तमम्" अतिशयेन पुराणं "बर्हिः" यज्ञम् "अस्थात्" अधितिष्ठति ॥

"वृषा वृष्णः"-"वृषा वृष्ण"—इति, "सहस्रसाः"-"शतसाः" इति च साम्नऋचः पाठाः ॥ ९ ॥ ६५

---

* "घृतवान्ति"—इति ऋ०।

† ऋ० ७, ४, ८, ३।

‡ "काव्यः"—इति ऋषि-नै०।

¶ "षष्ठ्यर्थे चतुर्थीति वाच्यम् (२, ३, ६२)"—इति कात्यायनवचनादित्यर्थः।

§ "स्यश्छन्दसि बहुलम् (पा० ६, १, १३३)"—इतीह मन्त्रे स्य इत्यस्य सोर्लोपः।

‖ "आतो मनिन्क्वनिब्वनिपश्च (पा० ३, २, ७४)"—इति वनिपि रूपम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ७ ५ ३ २
(माधुच्छन्दसम्॥) हाओ२३४हाइ। इहा३१।
२ १ २ १ २ ३ ४ ५ २ १र
पवस्वसो। मा३मधु। मा३क्तावा। अपोवसा।
२ १ २ ३र ४ ५ २ १ र २ १
नो३अधि। सानोअव्याइ! अवद्रोणा। नी३घृत।
२ ३ ४ २ २ ३ ५ ३ २ २ १
वन्तिरोहा। हाओ२३४हाइ। इहा३१। मदिन्तमो।
२ १ २ २ ४
मत्सरः। आ२४३इ। द्रा३पा५नाई५ई:॥ १५॥ ६६

प्रतर्दनऋषिः*। हे "सोम!" "मधुमान्" [ मत्वर्थीयः ] तादृशस्त्वं "अपः" वसतीवरीः एकधनाः "वसानः" आच्छादयन् "अधि" अधिकं "सानौ" समुच्छ्रिते "अव्ये" अविभवेपवित्रे "पवस्व" चर। ततः "मदिन्तमः" अतिशयेन मदकरः "इन्द्रपानः" इन्द्रेण पातव्यः "मत्सरः" मादयिता सोमः "घृतवन्ति" उदकवतः† "द्रोणानि" द्रोणकलशान् "अवरोह" प्रादुर्भवसि॥

"रोद"-"सीद"—इति पाठौ॥ १०॥ ६६

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य षष्ठः खण्डः॥ ६॥

---

* "दैवोदासिः"—इति ऋषि-नि०।

† "घृतम्"—इत्युदकनामसु दशमं नैघण्टुकम् (१, २)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमे खण्डे--

सैषा प्रथमा ।

१ २ ३ २र ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
प्रसेनानीः शूरो अग्रे रथानाङ्गव्यन्नेति हर्षते अस्य सेना ।
३ २ ३ १ २ ३ १र २र ३ २उ ३ १ २ ३ १ २
भद्रान्कृण्वन्निन्द्रहवांत्सखिभ्य आसोमो वस्त्रा रभसानि-
दत्ते ॥ १ ॥ ६७*

३ ५ ३ ५
( कुत्सस्याधिरथीयानि त्रीणि ॥ ) होऽवा । उहुवा
४ ५ २ १र २र १ र र २ २ ३ ४
३ । होवा । प्रसेनानाइः । शूरोआ३ । ग्राइरथा
५ २ १ २र १ २ २ ३ ४ ५ २ १र
नाम् । गव्यन्नेताइ । हर्षताउइ । अस्यसेना । भद्रा
१ १ २ २ ३ ४ ५ २र १र २र १
न्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । आसोमोवा ।
२ १ २र ३ ४ ५ ३ ५ ३ २ ४
स्त्राइरभ । सानिदत्ताइ । होऽवा । उहुवा३ । हो
५ ५
वा६ । हाउवा ॥ १६ ॥

५र ४ २ १११ २ १र २र १ र र २ २
औहोइवा३४५ । प्रसेनानाइः । शूरोआ३ । ग्राइ
१४ ५ २ १ २र १ २ १ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षताउइ । अस्यसेना ।
२ १र २ १ २ २ ३ ४ ५ र ४
भद्रान्कृण्वान् । इन्द्रहा३ । वांत्सखिभ्याः । औहो३

* ऋ० ७, ४, ६, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १११　२र १र २र १　२ १　२　२
वा३४५ । आसोमोवा । ह्वा३रभ । सा३४३ । नो३

४
दापुत्ता६५६६ ॥ १७ ॥

५र४　२ १११　३ र२र १　र र २　२
औहोइवा३४५ । प्रसेनानाइः । शूरोआ३ । ग्राइ

३ ४ ५　३　२र १　२　२ ३ ४ ५
रथानाम् । गव्यन्नेताइ । हर्षता३इ । अस्यसेना ।

३ र　२ १　१　२ ३ ४ ५　र ४　२
भद्रान्कृण्वान् । इन्द्रवा३ । नात्सखिभ्याः । औहोइवा

१११　३र र २र १　२ १　२　२ ४
३४५ । आसोमोवा । ह्वा३रभ । सा३४३ । नोइदा५ ।

२ १११
ता२३४५६ ॥ १८ ॥ ६७

प्रतर्दनऋषिः* । "सेनानीः" सेनाना मग्रे नेता । "शूरः" शत्रूणां बाधकः "सोमः" "गव्यन्" † इच्छन् यजमानानां पश्वादिक मिच्छन् "रथानाम्" "अग्रे" पुरतः "प्रैति" प्रकर्षेण सङ्ग्रामङ्गच्छति । "अस्य" सोमस्य "सेना" च "हर्षते" हृष्यति [वाक्यभेदादनिघातः] किञ्च "सखिभ्यः" समानख्यानेभ्यो यजमानेभ्यः "इन्द्रहवान्" तैः कृतानि इन्द्रस्य आह्वानानि "भद्रान्" कल्याणानि यथार्थानि "कृण्वन्" । आहूतो हीन्द्रः सोमं पीत्वा

---

* "दैवोदासिः"—इति ऋषि-ब्रा० ।

† "छन्दसि परेच्छायामपि क्यच् वक्तव्यः"—इति तृतीयाध्यायीय-कात्यायनवचनादिह क्यचि रूपम् ।

१७ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२३१ ३ १ २ ३ २ ३ १ २ ३ १ ३ १र २र
प्रतेधारामधुमतीरसृग्रन्वारंयत्पूताअत्येष्यव्यम्।

१ २ ३ १ २ ३ १ २ १ २ ३ २ ३ १ २ ३ २
पवमानपवसेधामगोनाञ्जनयत्सूर्यमपिन्वोअर्कैः ॥२॥६८*

२र र २
(त्रैयम्बज्योतिषाणि त्रीणि ॥) हाउहोवा३हाइ।

र र र १ ७ १ १ १ १ २र र २
प्रतेधारामधुमा३ताइरसृग्रा२३४५न्। हाउहोवा३हाइ।

र र र १ ७ १ १ १ १ २र र
वारंयत्पूतोअतौ३याइषिआव्या२३४५म्। हाउहोवा३

२ र २र १ ७ १ १ १ १ २र र
हाइ। पवमानपवसे३धामगोना२३४५म्। हाउहोवा

कामान् प्रयच्छतीति। "रभसानि" इन्द्रस्य वेगेनागमन-निमित्तानि "वस्त्रा" वस्त्राण्याच्छादकानि पयःप्रभृतीन्याश्रयणानि "आ दत्ते" आ गृह्णाति † ॥ १ ॥ ६७

---

* ऋ० ७, ४, १७, १।

† अत्र विवरणं यथा—"प्रसेनानी। सेनां नयति इति सेनानीः। शूरः विक्रान्तः। अग्रे रथानां ये देवरथाः गव्यम् इच्छन्। धनं पृथिव्यां भवं प्रेति प्रयाति। हर्षति अस्य सेना भद्रान् भन्दनीयानि। कुर्वन् क्षणम्। इन्द्रहवान् इन्द्रियाणि। सखिभ्यः ऋत्विग्भ्यः। एवं गुणविशिष्टः। सोमः वस्त्राणि रभसानि परान्ति। आदत्ते परसैन्येभ्यः। अथवा सेनानीः स्कन्दः शूरः विक्रान्तः। अग्रे पुरतः देवरथानां गव्यम्। पृथिव्यां भवन्धनम्। राति गृह्णाति ददाति सैन्येभ्यः सोमइव रश्मीन् वस्त्राणि सैन्येभ्यो ददाति॥"—इति॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

१ २ ३क २र ३ १र २र ३ १र २र

प्रगायताभ्यर्चामदेवांत्सोमꣳहिनोतमहतेधनाय ।

३ १ २ ३ २ ३ २ ३ २ ३ १ २ ३ १ २ ३ १ २र

स्वादुःपवतामतिवारमव्यमासीदतुकलशन्देवइन्दुः ॥३॥९९*

२ र १ ७र १ १ १ १ २र

इहाइ । जनयंत्सूर्यमा३पाइन्वोअर्का३३४५इः । हाउ

र २ १ १ १ १

होवा३हाउ । वा३४५ ॥ १९ ॥ ९८

धराश्वरऋषिः† । तदा प्रसृज्यन्ते "यद्" यदा "पूतः" वसतीवरीभिस्त्वं "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि" अतीत्य गच्छसि । किञ्च हे "पवमान" शोध्यमान सोम! "गोनां‡" गवां¶ "धाम" धीयते पीयत इति धाम पयः तत् वसनीकृत्य "पवसे" चरसि । ततः "जनयन्" जायमानस्त्वं "अर्कः" अर्चनीयैः स्व-तेजोभिः "सूर्यम्" आदित्यम् "अपिन्वः" पूरयसि ॥

"वारं यत्पूतोअत्येष्यव्यम्"--"वारान्यत्पूतो अत्येष्यव्यान्"—इति, "जनयन्"-"जज्ञानः"—इति च साम्नऋचः पाठौ ॥ २ ॥ ९८

* ऋ० ७, ४, ११, ४ ।

† "शाक्त्यः"—इति ऋषि-नि० ।

‡ "गोः पादान्ते (७, १, ५७)"—इति सिद्धं गोनामिति ।

¶ 'गवां रश्मीनां मदकानां वा'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र २ १ २ ३ ४ ५ २र १
प्रगायता। अभिय। चामदेवान्। सोमꣳ-

२ १ २ ३ ४ ५ २र १ २
हिनो। ताइमह। तेधनाया। स्वादुःपवा। ताइ

१ २ ३ ४ ५ २र १र २ १ २
मति। वारमव्याम्। आसीदतु। कलशम्। दा-

२ ४
३४३इ। वाइआ५इन्दूई५ई॥ २०॥ ६९

इन्द्रप्रमतिर्वासिष्ठऋषिः। हे स्तोतारः! "प्रगायत" 'सोमं' प्रकर्षेणाभिष्टुत। वयन्तु "देवान्" "अभ्यर्चामः" अभिष्टुमः*। यद्वा। देवानभ्यर्चामोऽभ्यर्चत [पुरुष-व्यत्ययः]। किञ्च। "महते" महत् प्रभूतं धनाय धनं प्राप्तुं सोमं "हिनोत"† अभिषवार्थं प्रेरयत [क्रियार्थोपपदस्य च कर्मणि स्थानिनः (२,३,१४,)-इति धन-शब्दस्य चतुर्थी] ततः "स्वादुः" मधुरः सोमः "अव्यम्" अविमयं "वारं" वालं पवित्रम् "अतिपवताम्" अतीत्य क्षरतु। "देवः" द्योतमानः। सोमः "इन्दुः" दीप्तः सन् "कलशं" द्रोणम् "अति आसीदतु" आभिमुख्येन तिष्ठतु ॥

"पवतां"-"पवाते"—इति, "देवइन्दुः"-"देवयुर्न"—इति साम्नऋचः पाठौ॥ ३॥ ६९

* 'स्तोतारश्चैव'—इति वि०।

† "तप्तनप्तनथनाश्च (७, १, ४५ पा०)"—इति तपि सिद्धं हिनोतेति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

१ २ ३ १ २ ३१र २र१ २ ३ १र २र ३ १ २
प्रहिन्वानोजनितारोदस्योरथोनवाजꣳसनिषन्नयासीत् ।
३ १ २ १ २ ३ १ १ १ २ ३ २ ३ १ २ ३ १
इन्द्रङ्गच्छन्नायुधासꣳशिशानोविश्वावसुहस्तयोराद-
२
धानः ॥ ४ ॥ ७०*

२र र २ र र र १ ३र ५र
चाउहोवा३हाइ । प्रहिन्वानोजनितारो३४३दसीयोः ।
२र र २ र र २ ३र ५र
हाउहोवा३हाइ । रथोनवाजꣳसनिषा३४३नयासीत् ।
२र र २ र र २ ३र ५
हाउहोवा३हाइ । इन्द्रङ्गच्छन्नायुधासा३४३ꣳशिशानः ।
२र र २ र र २ ३र ५ ४
हाउहोवा३हाइ । विश्वावसुहस्तयोरा३४३दधानः । इधा

पुनाउ । वा ॥ २१ ॥ ७०

वसिष्ठऋषिः† । "प्रहिन्वानः" अध्वर्युभिः प्रेर्यमाणः‡ "जनिता"¶ उत्पादयिता "रोदस्योः" द्यावापृथिव्योः§ तयोर्जनयितृत्वं वृष्टिप्रदान-हविः-प्रापणाभ्याम् । तादृशः सोमो "वाजम्" अन्नं "सनिष्यन्" दास्यन्‖ "प्रायासीत्" प्रगच्छति ।

* ऋ० ७, ३, २९, १ ।   † "मित्रावरुणः"—इति ऋषि-नि० ।

‡ 'प्रीणानः गच्छन् वा'—इति वि० ।

¶ "जनिता मन्त्रे (६,४,५३)"—इति पा० ।

§ "रोदसी"—इति द्यावापृथिवी नामसु चतुर्थं नैघण्टुकम् (३, ३०) ।

‖ 'सनिष्यन् सम्भजमानः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

२ २ ३ १२३१२३१र २र३ १२३ १र २र
तवत्यदीमनसोविनतोवागज्ज्येष्ठस्यधर्मन्द्युक्षोरनीके।
१ २ ३२३१ २ ३ २उ ३१२३२३ २ ३१ २
आदीमायन्वरमावावशानाजुष्टम्पतिङ्कलशगावइन्दुम्॥५७१

३ ४ ५र २ १११११ २ ४
(वाचःसामनी द्वे)॥ तवत्यदी। होर२३४५इ। मन-
र २र४५ ३ ११११ ३र ४ ५ ३ ११११
सोविनतः। वार२३४५क्। ज्येष्ठस्यधा। होर२३४५।
४ ३र४५र ३ ११११ ३र ४र५र ३ ११११
मन्द्युक्षोरनी। कार२३४५इ। आदीमायन्। होर२३४५इ।
२४३र४र५ र ३ ११११ ३४ ५ ३ ११११
वरमावावशा। नार२३४५ः। जुष्टम्पतिम्। होर२३३५इ।
४ र
कलशेगाप्५वः। इ। दाउ। वा॥ २२॥

२ १ २ ३४ र३र४५ २ ११११
तवत्यदा३१२३४इ। मनसोविनतः। वार२३४५क्।
२र१ २ ३र ४ ५र ३११११ २र१
ज्येष्ठस्यधा३१२३४। मन्द्युक्षोरनी। कार२३४५इ। आदा-

"इन्द्रङ्गच्छन्" प्राप्नुवन् "आयुधा" "आयुधानि" "संशिशानः" सम्यक् तीक्ष्णीकुर्व्वन् इन्द्रं सहायगमनार्थं तीक्ष्णायुधः सन् "विश्वा"† सर्व्वाणि "वसु"‡ वसूनि धनानि "हस्तयोरादधानः" अस्मभ्यन्दानाय एवं कुर्व्वन् प्रायासीत्॥ ४॥ ७०

---

* ऋ० ७, ४, १५, २।

†,‡ 'विश्वा'—इति सुप आले, 'वसु'—इति सुपो लुकि च रूपम् (७, १, ३९)।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२　　　　१ ४ ३ र ४ र ५ र　　७ १ १ १ १　　२ १
इमायाइ१२३४न् । वरमावावशा । नार३४५ः । जुष्ट-
२　　　　　र
स्पताइ१२३४इम् । कलशेगा५वः । इ । दाउ । वा ।
॥ २३ ॥ ७१

मृडीको वासिष्ठऋषिः । "वेनतः" [ वेनो वेनतेः कान्ति-कर्म्मणः ( दै,४,३८ )"—इति यास्कः ] कामयमानस्य "मनसः" [ मनो मन्यतेः स्तुतिकर्म्मणः*] स्तोतुः "वाक्" स्तुतिलक्षणा† यद्येनं "तक्षत्" संस्करोति‡ । "धर्म्मन्" धारके¶ यज्ञे "ज्येष्ठस्य" प्रशस्यस्य "द्युक्षोः" दीप्त-स्तुतिकस्य [ दृक्ष् शब्दे(अ०प०)इत्यस्मात् कु-प्रत्ययः ] सवनस्य "अनीके" प्रमुखे यदा यज्ञेषु सवन-मुखे स्तोतुर्वाक् सोमं स्तौतीत्यर्थः । "आ" अनन्तरमेव "वरं" वरणीयं "जुष्ट" देवानां मदाय पर्याप्तं "पतिं" सर्वस्य पालकं "कलशे" स्थितं "इन्दुम्" "ईम्" एनं सोमं "वावशानाः" कामयमानाः "गावः" "आयन्" पयसा क्षीयेन मिश्रयितु मागच्छ　"

"धर्म्मन्"-"धर्म्मणि"—इति पाठौ ॥ ५ ॥ ७१

---

* "मन्यते"—इति स्तुति-कर्मसु अष्टविंशमेषष्ठ कम् ( ३, १४ ) ।

† 'वाक सखिलम्'—इति वि० ।

‡ 'सचत करोति'--इत्येव वि० ।

¶ धारणार्थ--धृ-धातोः कर्त्तरि मनिपि धर्म्मन्निति ततश्छान्दस-लुकि रूपम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

३ १ २ ३ १ २ ३ २३ १ २ ३ २ ३ १ २
साकमुक्षो मर्जयन्त स्वसारो दश धीरस्य धीतयो धनुत्रीः ।
३ १ २ ३ १ २ १२ ३ १ २ ३ २ ३ २ ३ २
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं ननक्षे अत्यो न वाजी ॥ ६ ॥ ७२*

(दाशस्पत्ये द्वे ॥) साकाम् । उक्षोमर्जयन्त । स्वसा२३राः । दाशा२ । धीरस्यधीतयोधनू२३त्रीः । हारी२ः । पर्यद्रवज्जाःहरिया२३स्या । द्रोणा२म् । ननक्षेअत्योनवा२३ । हाउवा३ । जी२३४५ ॥ २४ ॥

साकमुक्षा६ए । ए३१२३४ । मर्ज्जयन्तस्वसारः । दशधीरा६ए । ए३१२३४ । स्यधीतयोधनुत्रीः । हरिः पर्या६ए । ए३१२३४ । द्रवज्जाःसूर्यस्य । द्रोणन्नना६ए । ए३१२३४ । क्षेअत्योनवा६ । हाउवा । जी२३४५ ॥ २५ ॥ ७२

---

* उ० ६,२,१५,१=ऋ० ७,४,२,१=ऋक्वे ८,९,७-१२,१,९-१८,२,४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

३ १२ ३ १२ ३२ ३ १२ ३ २३ २ ३१र २र
अधियद्‌स्मिन्वाजिनीवशुभस्पर्द्धन्तेधियःसूरेनविशः ।
३ १ २ ३ १ २ ३ १ २ ३ १र २र३ १ २ ३ १ २
अपोवृणानःपवतेकवीयान्व्रजन्नपशुवर्द्धनायमन्म ॥ ७ ॥७३*

नोधाऋषिः†। "साकमुचः" [ उच सेचने ( भ्वा०प० ) क्विपि रूपम् ] ताट्टश्यः "स्वसारः" कर्म्म-करणार्थं मितस्ततः सुष्ठु गच्छन्त्यः‡ अङ्गुलयः¶ "मर्जयन्त" सोमं शोधयन्ति [ मृज् शौचालङ्कारयोः ( चु०उभ० ] ताः दशसङ्ख्याकाः "धीतयः" [ अङ्गुलिनामैतत् ( नै०२,५,७ ] अङ्गुलयः "धीरस्य" समर्थस्य प्राज्ञस्य वा देवैर्ध्यातव्यस्य काम्यमानस्य वा सोमस्य "धनुत्रीः" प्रेरयित्र्यो भवन्ति§। ततः "हरिः" हरितवर्णः सोमः "सूर्य्यस्य" "जाः" प्रादुर्भूता जाया दिशस्ताः‖ "पर्य्यद्रवत्" परितो गच्छति। सूर्य्यस्य तेजसा हि आविर्भवतीति दिशां तस्य जायात्वम्। "अत्यः" अतनशीलः "वाजी न" अश्व इव स्थितः सोमः "द्रोणं" कलशं "ननक्ष" व्याप्नोति [नक्षति-र्व्याप्ति-कर्मा (नै०२,१८,२) ॥ ६ ॥ ७२

---

* ऋ०७,४,४,१ ।

† "गौतमः"—इति ऋषि नै०।

‡ सृ शब्दोपतापयोः ( भ्वा० प० )—इत्यस्य रूपं स्वसेत्यभिप्रायः ।

¶ "स्वसारः"—इत्यङ्गुलि-नामसु त्रयोदशतमं नैघण्टुकम्।

§ "तायन्ति"—इति वि०।

‖ "अपत्यम्"—इति वि०। "जाः"—इत्यपत्यनामसु नवमं नैघण्टुकम् २,२।

१८ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ४ ३ ऽर २
( कश्यपस्य च शोभनम् ॥ ) अधियदा। स्माइन्वाऽरजि
ऽर १ २ र १ र २ ३ ४ ५
नीऽरवप्सु। भाः। स्पर्द्धन्तेधियःसू। राइनविश्माः।
२ १र र ७ २ १
अपोवृणानःपवताइ। कवीऽ२३यान्। व्रजन्न। पा।
२ १ २ २ ४
शुवर्द्ध। नाऽ३४३। याइमाऽ५न्माई५ई ॥ २६ ॥ ७३

कण्वऋषिः*। "यद्" यदा "अस्मिन्" सोमे "वाजिनीव शुभः"† अश्वे यथा वस्त्रप्रभृत्यलङ्कारा भवन्ति। यदा वास्मिन् सोमे "सूरे न" सूर्ये न यथा सूर्ये "विशः" रश्मयः उदिता भवन्ति तदा "धियः" अङ्गुलयः "अधिस्पर्द्धन्ते" अहं पुरस्ताच्छोधयाम्यहं पुरतः शोधयामीत्यहमिकया उपतिष्ठते। ततोऽयं सोमः "अपः" वसतीवरीः "वृणानः" आच्छादयन् "पवते" पात्रेषु चरति कलशानभिगच्छति। कीदृशः? "कवीयान्" कविरिवाचरन्। यद्वा। कवयः स्तोतारः तानिच्छन्। तत्र दृष्टान्तः—"व्रजं न" "मन्म" मननीयं बोद्धव्यं रक्षितव्यं गवां गोष्ठं पशुवर्द्धनाय गोपालः परिगच्छति यथा तथा देवानां प्रीणनाय पात्राणि पवते॥

"सूर्ये"-"सूरे"—इति, "कवीयान्"—"कवीयन्"--इति च साम्न ऋचः पाठः॥ ७॥ ७३

* "घोरः"—इति ऋषि० नै०।

† शुभइति शुभ शोभायाम् (भ्वा०आ०)—इत्यस्य रूपम्। विसर्गस्तु न दृश्यते मूले।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

१ २ ३ १ २ ३ १ २ ३ २ ३ १ २ २३१२ १२
इन्दुर्वाजी पवते गोन्योघा इन्द्रे सोमः सह इन्वन्मदाय ।
३ २३ १ २३१२ २२३
हन्ति रक्षो बाधते पर्यरातिं
१ २ ३ २ ३१२३१ २
व*रिवस्कृ†ण्वन्वृजनस्य राजा ॥ ८ ॥ ७४‡

२ १ १ २२
( दाशस्पत्यानि चत्वारि ॥ ) इन्दूर्वाजो २ । पवतेगो
२ १ ५ १ २
नियोघाः । इन्द्राइसो२३४माः । साहइन्वन्मदाया ।
१ ५ १२ २ २ १ २
हन्ताइरा२३४क्षाः । बाधतेपर्यरातिम् । वराइवा२३४स्कृ ।
२ १ १ ऽ २ २ ५ ४
ण्वन्वृजाना२३स्या । रा३जौवाओ२३४वा । हो५इ ।
डा ॥ २७ ॥

४ ५ २ ४२ ५ २ ४२ ५ १ ० २
इन्दुर्वाजीपवतौ । हौहोवाहाइ । गोनियोघौ ।
३ ५ १ ऽ२ १२ ऽ२ १ २ १ २
वाओ२३४वा । इन्द्र२सोमा२ःसहइ । न्वान्मदायौ । वा-
३ ५ १ २ १ २२ १२ २२ १ ० २ ३
ओ२३४वा । हन्तिरक्षोबाधते । पार्यरातौ । वाओ-

* "अरातीर्व"—इति,　　　† "वरिवःक"—इति च क०।

‡ उ०३,२,२०,१ = ऋ०७,४,१२,५ = जहे ३,९,१५—८,२,५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२३४वा। वरिवस्कृण्वन्वृजना३। स्या। रा३जौवा-

ओ२३४वा। ह्वो५इ। डा॥ २८॥

इन्दुरौह्वोवाह्वाईयावाजाउ। वा३। ह्वाउवा।

पवतेगोनियोघाउ। वा३। ह्वाउवा। इन्द्राइसोमः।

सहइन्वाउ। वा३। ह्वाउवा३। मा२दा२३४औह्वोवा।

या२३४५। हन्ताइरक्षो। बाधानाइपाउ। वा३।

ह्वाउवा३। यरि२रा२३४औह्वोवा। ती२३४५म्। वरा-

इवस्कृ। ण्वन्वृजनाउ। वा३। ह्वाउवा३। स्या२-

रा२३४औह्वोवा। जा२३४५॥ २९॥

इन्द्वाजीपवतेगोनियोघाः। इन्द्रे सोमःसहइन्वन्म-

दाया। हन्तिरक्षोबाधतेपर्यरातीम्। वरिवस्कृण्वन्वृज-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ ३र २ ५र र २ २ १र ३ १ १ १ २
नस्यराजा। राजा३४औहोवा। ए३। स्यराजा२३४५

॥ ३० ॥ ७४

## ॥ इति ग्रामे गेये पञ्चदशः प्रपाठकः ॥

मन्युर्वासिष्ठ ऋषिः । "इन्दुः" चरणशीलः* "वाजी" बलवान् "गोन्योघाः" गमनशील-नीचीनाग्र-रससङ्घातः† "इन्द्रे" "सहः" बलकरं रसम् "इन्वन्" प्रेरयन्‡ "सोमः" "मदाय" तस्य मदार्थं "पवते" चरति। किञ्च। "रक्षः" रक्षःकुलं "हन्ति" हिनस्ति। किञ्च। "अरातीः" अरातीन्¶ शत्रून् "परिबाधते" परितः संहरति। कीदृशः ? "वरिवः" वरणीयं धनं "कृण्वन्" स्तोतॄणां कुर्वन् "वृजनस्य" बलस्य§ "राजा" ईश्वरः‖ सोम इति ॥ ८ ॥ ७४

---

* अतएव "इन्दुः"—इति उदकनामसु दृश्यते च (नै०१,१२,८३) "उन्द ार्द्रादेः—(उ,१)"—इत्युनत्तेरिन्दुरिति।

† गो—गमनशीलः, नी—नीचिनः, (तस्य अग्रे विद्यमानः) ओघः—रससङ्घातः। "गोनी"-शब्दो गमनशीलार्थेऽपभ्रंश इत्युदाजहार च पशपशे पतञ्जलिः।

‡ "इन्वति"—इति गतिकर्मसु पञ्चदशाधिकशतं नैघण्टुकम् २,१४।

¶ भाष्यकारस्त्वत्र ऋग्वेदीयपाठमनुसृत्य व्याचख्यौ, सामवेदीयपाठस्तु "अरातिम्"—इति।

§ "वृजनम्"—इति बलनामसु एकविंशतितमं नैघण्टुकम् २,९।

‖ "राजति"—इति ऐश्वर्यकर्मसु चतुर्थं नैघण्टुकम् २,२१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१ २ ३१ २ ३ १र २र ३ १ २ ३ १ २ ३ १ २
अयापवापवस्वैनावसूनिमाँश्वत्वइन्दोसरसिप्रधन्व।

३ २ ३ २ ३ २ ३ २ ३ १
ब्रध्नश्चिद्यस्यवातोनजूति

२ ३१ २ ३ १ २ ३ १ २
म्पुरुमेधाश्चि*त्तकवेनरन्धात्॥ ९॥ ७५†

(औष्ठानि त्रीणि॥) ५र ४ ५ औहोहाइ। ४ ५ अयोहाइ।

१र २र२१ २ ५ २ २ २ ५ २
पवापवस्वैनावसू२३नी। औ२होइ। इहा। ई३या।

र १ र २ १ २ ५ २ ३ २
माँश्वत्वइन्दोसरसिप्रधा२३न्वा। औ२होइ। इहा।

५ २ १ र र २ १ २ ५ २ २ २
ई३या। ब्रध्नश्चिद्यस्यवातोनजू२३तीम्। औ३होइ। इहा।

५ २ १र र र२१ २ ५ २
ई३या। पुरुमेधाश्चित्तकवेनरा२३न्धात्। औ३होइ।

१ २ ५ ३ ५र र २ २र३ २
इहा। ई२। या२३४। औहोवा। ए३। दोदिहो१॥

॥१॥

५ ४ ५ ४ ५ १ र र२१ २ र
अयोहाइ। पवोहाइ। पवस्वैनावसू२३नी। इहो

* "पुरुमेधश्चि"—इति क॰।

† उ॰४,१,२१,१ = ऋ॰७,४,२६,२ = ऊहे ९,२,१०—८,२,१०—२३,२,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २ र १ र २ १ २
इयाइ । ईइया । मा॒ᳪस्वत्वइन्दोसरसिप्रधा२३न्वा । इ

र ५ २ १ र र २ १ २
होइयाइ । ईइया । अध्वस्चिद्यस्यवातोनजू२३तीम् ।

र ५ २ १र र र २ १ २
इहोइयाइ । ईइया । पुरुमेधाश्चित्तकवेनरा२३न्धात् ।

र १ २ ५र र २ २र
इहोइयाइ । ईइ । या२३४ । औहोवा । ए३ । दी

१ १ १ १ १
द्या२३४५त् ॥ २ ॥

२ ३ ५ २ १ ५ २ १र
हाओ२३४वा । २ । हा३ओ२३४वा । हाउवा । अया-

२ १र २ र १र २र १ २ १ १ २ १ २
पवापवस्वैनावसूनि । इहइ । हिया२ । इहा । इहा ।

र १ २र १ २ १ २ १ २ १ १ २
मा॒ᳪस्वत्वइन्दोसरसिप्रधन्व । इहइ । हियार । इहा ।

१ २ १ २ १ २ १र २र १ २र १ २ १
इहा । अध्वस्चिद्यस्यवातोनजूतिम् । इहइ । हिया२ ।

१ २ १ २ २ ३ ५ २ १ ५
इहा । इहा३ । हाओ२३४वा । २ । हा३ओ२३४वा ।

२ १र २र १ २र १ २र १ २ १
हाउवा । पुरुमेधाश्चित्तकवेनरन्धात् । इहइ । हिया

१ २ २ ३ १ १ १ १
२ । इहा । इहा२३४५ ॥ ३ ॥ ७५



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



कुत्सऋषिः*। हे सोम! "अया" अनया "पवा" पवमानया धारया सह "एना" एनानि "वसूनि" धनानि "पवस्व" चर [पवा—पूञ् पवने (क्र्या० उ०) "अन्येभ्योपि दृश्यन्ते (३,२,१०१)" —इति विन् प्रत्ययः। आर्धधातुकलक्षणो गुणः। "सावेकाचः (६,१,१६८)"—इति तृतीयाया उदात्तत्वम्]। तथा हे "इन्द्रो"! त्वं "मांश्चत्वे" मन्यमानानां चातके "सरसि" उदके† वसतीवर्य्याख्ये कलशे "प्रधन्व" प्रगच्छ‡। ततः "यस्य" यं "ब्रध्नश्चित्" सर्वेषां प्रज्ञापकः मूलभूतो वा आदित्यः¶ "वातो न" वात इव "जूतिं" वेगं§ कुर्वन्। किञ्च। "पुरुमेधाश्चित्" बहुविधप्रज्ञ इन्द्रश्च "तकवे" [तकतिर्गतिकर्म्मसु पठितः॥। अस्मादौणादिक उन् प्रत्ययः यस्येति (२,३,३७) कर्मणि षष्ठी॥ "न लोकाव्ययेति (२,३,६९) षष्ठी-प्रतिषेधश्छान्दसः] सोमभि गच्छता मित्यर्थः॥

"यस्य"-"यच"—इति, "जूतिं"—"जूतः"-इति,—"नरध्यात्"-"नरन्द्रात्"—इति च साम्न ऋचः क्रमेण पाठाः॥९॥७५

---

* "आङ्गिरसः"—इति ऋषि-नै०।

† "सरः"—इत्युदकनामसुपठितं प्रत्यदम् नै०१,१२।

‡ "धन्वति"—इति गतिकर्मसु चतुःषष्ठितमन्नैघण्टुकम् २,१४।

¶ 'ब्रध्नः ब्रह्म, सविता वा महान् वा'—इति वि०।

§ अवतेर्वेगकर्मणि ऊतिजूतीत्यादिना (३,३,९७) निपातनात् जूतिरिति।

‖ नि० नै० २,१४,९८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

३ १र　२र　३ १ २ ३ ३ १र　२र　३ २
महत्तत्सोमोमहिषश्चकारापांयद्गर्भोवृणीतदेवान्।
१ २ ३ २ ३ १ २　३ १र
अदधादिन्द्रे पवमानओजो
२र ३ २ ३ २　३ १ २
जनयत्सूर्येज्योतिरिन्दुः॥ १० ॥ ७६ *

२　र र　१　र
(आत्रम्॥) महत्तत्सोमोमहिषश्चा३कारा२। अपां
र र　१　र र र　१
यद्गर्भोवृणीता३दा३इवा२न्। अदधादिन्द्रे पवमाना३ओ
र ऽर　१　२　२
जा२:। अजनयत्सूर्ये३ज्यो२३। तिरिन्द्राउवा३। ए३।
१　२　१र २र १र २ १　१ १ १ १
अजनयत्सूर्येज्योतिरि। न्दू२३४५ः॥ ४ ॥ ७६

"पराशरऋषिः*†"। "महिषः" महान्‡ पूज्यो वा "सोमः" "महत्" प्रभूतं¶ "तत्" कर्म "चकार" अकरोत्। किं तत्?

---

* उ० ५,२,१,२ = ऋ० ७,४,१९,१ = ऊहे १०,२,१—२३,२,५—२३,२,८—२३, २,९ = ऊह्यो ६, २,५।

† "शाक्त्यः"—इति ऋषि-नै०।

‡ अत्राह यास्कः—'महत्तत्सोमोमहिषश्चकारापां यद्गर्भोऽवृणीत देवानामाधिपत्य मदधादिन्द्रे पवमान ओजोऽजनयत् सूर्ये ज्योतिरिन्दुरादित्य इन्दुरात्मा'—इति नि०प०२,१७।

¶ 'महत् असम्भाव्यम्'—इति वि०।

१९ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकादशी।

१ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २ ३ २
अपाᳬ गर्भः सुम्भृतानि सूर्ये ज्योतिरदधाच्छुक्रमाप्येतमिन्द्रे ।

३ १ २ ३ २ ३ २ ३
दधावसा हरिप्सुखसारा

१ २ ३ २ ३ २ ३ १ २ ३ १ २
अध्येम्वजन्ति*वक्कि९सदनेषच्छ ॥ ११ ॥ ७७ †

"अपाङ्गर्भः" उदकानां गर्भभूतः‡ जनयितृत्वाज्जन्यत्वाद्वा। स सोमः "देवान्¶" "अवृणीत"§ समभजतेति "यत्" तत् कृतवानिति। किञ्च। "पवमानः" पूयमानः‖ सोमः "ओजः"+ सोमपानजन्यं बलम् "इन्द्रे"÷ "अदधात्" न्यधात् तथा "इन्दुः" सोमः × "सूर्ये"** "ज्योतिः" तेजः†† अजनयत्‡‡ ॥ १० ॥ ७६

---

* "अध्येषजन्ति"—इति ऋ०।

† ऋ० ०,४,१,१ = आरण्ये १,२,२२।

‡ 'अपां यद् गर्भदर्शनमात्र पञ्चानां भूतानां गर्भः'—इति वि०।

¶ 'इन्द्रियाणि'—इति वि०।

§ 'अवृणीत अधिष्ठितवान्'—इति वि०।

‖ 'पूयमानः विषयप्रमाणेन'—इति वि०।

+ 'ओजः बल मणिमादि'—इति वि०।

÷ 'इन्द्रे आत्मनि'—इति वि०।

× 'ज्योतिरिन्दु रादित्यः अध्यात्मम्'—इति वि०।

** 'सूर्ये सरणशीले'—इति वि०।

†† 'तेजः इन्द्रः'—इति वि०।

‡‡ 'तथायोग्यः—येन सूर्यस्तपति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ २ १ १
(वासिष्ठम् ॥) असाऔ३वो। जिवाका२। रथ्या

२ ५र ३ ११११ २ १ २ २ १
दूया३४। था। जा२३४५उ। धियाऔ३वो। मनो-

१ २ ५र ३११११ २ १ २ २
ता२। प्रथमामा३४। नौ। षा२३४५। दृशाऔ३वो।

१ १ २ ५ ३ ११११ १ १
स्वसारा२ः। अधिसानो३४। अ। व्या२३४५इ। सृजा

२ २ १ १ २ ५
औ३वो। तिवाक्रौ२म्। सदनाइषू३४। अक्षा२उ।

१११
वा३४५॥ ५॥ ७८

कश्यपऋषिः*। "वक्ता" शब्दायमानः [वच परिभाषणे (अदा०प०) वनिप्] तादृशः पवमानः सोमः "आजौ" अजन्ति कर्मार्थं मृत्विज इति आजिर्यज्ञः तस्मिन् "धिया" कर्मणा स्तोत्रेण वा† साकम् "असर्जि" पात्रेषु सृज्यते‡। तत्र दृष्टान्तः। "रथ्ये यथा" रथ्ये रथार्हे [आजौ सङ्ग्रामनामैतत्¶। अजन्ति प्रक्षिपन्त्या युधान्यत्रेति तस्मिन्] अश्वो यथा सृज्यते तद्वत्। कीदृशः? "मनोता" यस्यां देवानां मनांसि प्रोतानि सा [तथाच ब्राह्मणम्—"तस्यां हि तेषां मनांस्योतानि"—इति] "प्रथमा"

* "मारीचः"—इति ऋषि-नै०।

† 'धिया प्रज्ञया कर्मणा वा'—इति वि०।

‡ 'सृष्टवाम्'—इति वि०।

¶ नि० नै० २,१७,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी।

३२ ३२३२ ३१२ ३ १२३१२ ३२३१२
अपामिवेदूर्मयस्तर्तुराणाःप्रमनीषाईरतेसोममच्छ।
३ २३ १२३२ ३१२
नमस्यन्तीरुपचयन्तिसञ्चा
२र ३२३१२
चविशन्त्युशतीरुशन्तम्॥ १२॥ ७८*

॥ पञ्चमदशति॥ ॥ अर्द्धः प्रपाठकः॥

५ ४र ५ ४र५र ४ ५ ४र
(अपाञ्च साम॥) अपामिवेदूर्मयस्तौ। होवा।
५ २२३ ३र २ १ २र १ २र
हाइ। तुराणा२३४ः। हाहोइ। प्रमनी। षाः। ईर-

मुख्या "मनीषा" मनस ईषा मनीषा स्तुतिः तद्वान्। यद्वा। धिया विदधाति स्तुतीरिति धीः स्तोता तेन स्तुतिः प्रेर्यते। किञ्च। "दश स्वसारः" दशसङ्ख्याका अङ्गुलयः† "सदनेषु" यज्ञगृहेषु पात्राण्यभिमुखीकृत्य "वह्निं" वोढारं सोमं "सानौ" समुच्छ्रिते [अधिः सप्तम्यर्थानुवादकः] "अव्ये" अविभवे अविबालेन कृते पवित्रे "अञ्जन्ति" प्रेरयन्ति‡॥

"प्रथमा मनीषा"--"प्रथमो मनीषी"—इति, "सदनेषु"--"सदनानि"—इति च साम्न ऋचः पाठः॥ ११॥ ७७

* ऋ० ७,४,५,२।

† "स्वसारः"—इति चङ्गुलिनामसु पष्ठमं नैघण्टुकम् २,५।

‡ "चञ्जन्ति"—इति तु ऋग्वेदीयः पाठः, तमेवावावलम्बितं सायणेन। सामवेदीयपाठस्तु "सृजन्ति"—इति ; चतएव 'सृजन्ति शोधयन्ति'-इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ ५ २ ३र २ १
ते३। सोमम। च्छा३४। हाहोइ। नमस्य। ताइः।
२ २ ३ ५ २ ३र २ १ २
उपचा३। यन्तिसम्। चा३४। हाहोइ। आचवि।
१ २ ३ २ ३ ५ २ ३र २ ५र
शा। तियुश। तीरुश। ता३४म्। हाहा३४। औ
र २ १ १११
होवा। वा३हा२३४५ः॥ ६॥ ७८

प्रस्कण्वऋषिः*। "अपामिव" यथा उदकानाम् "ऊर्मयः" त्वरन्ते। "इत्"—इति पूरणः। तद्वत् "तर्तुराणाः" कर्मणि देवान् स्तोतुन्त्वरमाणाः। [तुर त्वरणे जौहोत्यादिकः (आ०)। यङ्लुगन्तस्य शानचि रूपम्। अभ्यासस्य उवर्णस्य रेफादेशश्छान्दसः। अभ्यस्तस्वरः†। तादृशा ऋत्विजः "मनीषाः" मनसश्चिलीः स्तुतीः "सोममच्छ" सोमं प्रति प्रेरयन्ति। "नमस्यन्तीः" नमस्यन्त्यः सोमं योजयन्त्यः सत्यः तम् "उपयन्ति" च। उप समीपे गच्छन्ति। तमेव "संयन्ति च" सङ्गच्छन्ते। "[च वा योगे प्रथमा (८,१,५९)—इति न निघातः] "उशतीः" कामयमानाः स्तुतयः "उशन्तं" कामयमानं सोमम् "आविशन्ति च" प्रविशन्ति च॥ १२॥ ७८

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य सप्तमः खण्डः॥

॥ इति त्रैष्टुभम्॥

* "काण्वः"—इति ऋषि-नि०।

† "अभ्यस्तानामादिः (६, १, १८९)"—इति पा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पुरोजितीति--मुख्यास्तु नवर्चो वृहतीत्यसौ—
"आहर्य्यतायधृष्णवे" त्विष्टा अनुष्टुभः स्मृताः* ॥
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे † ॥

तत्राष्टमे खण्डे—

सैषा प्रथमा।

३ १ ३ ३ १ २ ३ १ २ ३ १ २
पुरोजितीवोअन्धसःसुतायमादयित्नवे।
२ १ २ ३ १ २ २क २र
अपश्वानꣳश्नथिष्टनसखायोदीर्घजिह्वयम् ॥ १ ॥ ७९

५ र २ २ ५ २
(प्रह्वौ द्वौ ॥) पुरोजितौ। वाअन्धाऽ२३४साः। सु-
१र २ ५ १
तायामाऽ२दया३१उवायेऽ। त्नाऽ२३४वे। अपश्वानाऽ२ꣳ

* पुरोजितीतिमुख्याः 'पुरोजितीवोअन्धसः'–इतिप्रभृतयः नव ऋचः, अत्राष्टमे खण्डे श्रूयन्त इति शेषः। तत्र आहर्यतायेति सप्तमी ऋक् वृहतीच्छन्दस्का, शिष्टा अष्टौ अनुष्टुप्छन्दस्का इत्यर्थः।

† 'विनियोगस्त्वासां ज्योतिष्टोमे'—इति वि०।

‡ उ० १,१,१८,१ = ऋ०७,५,१,१ = आरण्ये १,२,२२ = ऊहे १,१,११—१,१,१२—२,२,१८—४,१,१३—४,१,१४—६,२,९—७,२,१०—८,२,१५—८,२,१६—८, २,१७—१०,१,३—१०,१,१७—१२,१,६—१२,२,११—१२,२,१२—१२,२,१३—१२,२,१४—१३,१,६—१३,२,६—१६,१,२—१६,१,८—१६,१,९—१६,२,६—१७,१,३—१७,१,४—१७,१,१७—२०,१,१८—२०,२,१२—२०,२,१३—(२१,२,१)—२१,३,२—२१,१,६—२२,१,७—२२,१,९—२२,२,१३—२२,२,१५—२३,१,९ = ऊह्ये ३,१,१—२,१,१८—२,२,२—२,२,५—२,१,१—३,१,१९—३,२,२—४,१,८—४,२,५—४,२,८—४,२,१४— ४,२,१६—(५,१,८—५,१,१२)—५,२,१४—६,१,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ र
अथा३१उवाये३। छा२३४ना। सखायोदी२र्घजा३१

२ ५
घाये३। क्षी२३४याम्॥ ७॥

५र २ १ २ २ १ २र
पुरोजिती। वो३अन्धा३साः। सुतायमा२। ऊ२।

१ २ २ १ २र
हा२इ। ओ२। दा३याइत्ना३वे। आपश्वाना२म्।

१ १ २ २ १ २र
ऊ२। हा२इ। ऊ२। अ्ना३थाइष्टा३ता। साखा

र १ १ २
योदा२इ। ऊ२। हा२इ। ऊ२३। घा२जा२३४

५र र १ १ ११११
औहोवा। ए३। क्षिया२३४५म्॥ ८॥

५र र २ ५ २र
(कार्त्तयशम्॥) पुरोहाहाउ। जा२३४इती। वो

१ २ २ ४ ५ २१ २ १ ४ ५
आऔ३हो३। धासाः। सुताऔ३हो३। यामा६।

५ २ १२र १२ १ र २ २
हाउवा। दयित्नवे२। उपा। अपश्वान ॅअथा१इष्टा

२ १ २ २ ४ ५ ५ २
३ना। सखाऔ३हो३। योदा६। हाउवा। घजि

१ २ ११११
क्षियम्। उपा२३४५॥ ९॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५४र ५ र ४ ५ ४
(औद्व्ँसद्मनम्॥) पुरोजितीवोअन्धसः। ओवा-
५ २ र र १ र
हाइ। सुतायमादयित्नवओवा२३होइ। अपश्वानꣳ
१ २र र १ २ ३
श्नथिष्टनओवा२३होइ। साखायोदाइ। घाजिह्वा२३
२ २ १र २१र५३२
४५याई५६म्। सुवृक्तिभिर्नृ माद्नम्भरे२धुवा१॥१०॥

३२ २ ४ र ५ २
(श्यावाश्वम्॥) पुरो३१। जी३ती। वो३अ। धा
४ ५ १ र र २ १
३सः। एहिया। सू। तायमादा। यि। त्नवा२इ।
१र १र २ ४ ५ २र
एहिया२। अपश्वानꣳश्ना३थी३। ष्टा२३४ना। एहा
१र र १र २ ४ २
२इ। एहिया२। सखायोदाइघी३जी३। ह्वा३४५यो
५
६हाइ॥११॥

५र र ५ २ १र
(आन्धीगवम्॥) पुरोजितीवो४न्धासाः। सुताय।
र २ १ १र र २
मादा२३या। ऊम्मा२१ऽ२। त्नवेअपश्वानꣳश्नथिष्टन।
१ २ २ १ २ १
साखा३उवा। यो२दो। घा२३जी। ह्वियाम्। औ
४ ५ ४
२३होवा। हो५इ। डा॥१२॥ ७९



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ २ ९ २ ३ २उ ३ १ २ ३ १ २
अयम्पूषारयिर्भगःसोमःपुनानोअर्षति।

२ १ २ ३ १ २ ३क २र ३ १ २ ३ २
पतिर्विश्वस्यभूमनोव्यख्यद्रोदसीउभे ॥ २ ॥ ८०*

श्यावाश्वऋषिः†। हे "सखायः" सखिभूताः समानख्याना वा हे स्तोतारः! "वः" यूयं "पुरोजिती" [षष्ठ्याः पूर्वसवर्णदीर्घः‡] पुरः-स्थित-जयस्य "अन्धसः" अदनीयस्य सोमस्य स्वभूताय "सुताय" अभिषुताय "मादयिष्णवे" अत्यन्तं मदकराय रसाय "दीर्घजिह्व्यं" [दीर्घा जिह्वा अस्य स दीर्घजिह्वी "दीर्घजिह्वी च छन्दसि (४,१,५९)—इति "ङीषन्तत्वेन" निपातितः। तादृशं] "श्वानं" च "अपश्नथिष्टन" अपश्नथयत¶ अपबाधध्वम्। यथा श्वा राक्षसा वा "सुतं" सोमं न लिहन्ति तथा कुरुतेत्यर्थः॥ १ ॥ ७९

* उ० ४,१,१६,१ = ऋ० ७,५,२,१ = आरण्ये १,२,८—२,२,१७—२,२,१८—२,२,१९ ऊहे २,२,८—२,२,९—७,१,९—११,२,१०—११,२,२०—१३,१,२—१५,१,१३—१५,१,१४—१५,१,१७—२०,१,५—२०,२,१८—२२,२,९ = ऊह्ये २,१,६—२,१,८—२,१,११—२,२,११—५,२,९—६,१,८।

† 'आम्भीगुः श्यावाश्विः'—इति ऋषि·नै०।

‡ सुपांसुलुगित्यादिना (७,१,३९)।

¶ 'शिथिलीकरोतु'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ · १र र २र १ २र
(क्रौञ्चानि त्रीणि ॥) अयम्पूषौहो। रायिर्भगाः। सो

१ २ ४ २ १ र २र
मःपुनाइ। नोऽऽश्रार्षापूताइ६५६इ। पतिर्विश्वौहो। स्या-

१र २ १ २ ४
भूमनाः। वियख्यद्रोइ। दासीइऊपभाइ६५६इ॥ १२ ॥

५ र र १ १ २र १
अयम्पूषा। अयम्पूषा। रयिर्भगाः। सोमःपूना

र १ २ १ १ २
२। नोऽर्षताइ। पतिर्वाइस्वा२। ओस्याभू१माना२ः।

१ २ १ र १ २
ओइवियख्या२३द्रो। दासीउभ। इडा२३भा२३४३।

१
ओ२३४५ई। डा॥ १४ ॥

४ २४र५र २ ३४ ५ ५ १ १
अयम्पूषा। हो। रयिर्भगाइ६ए। सोमा२ःपुना२।

१ २ ३ ५ १ २१र २ १
नआ२३४५। षा२३४ती। पतिर्विश्वस्यभूमनः। विय-

२ १र २ १
ख्या२३द्रो। दसीऊ२३भा२३४३इ। ओ२३४५इ। डा॥

॥ १५ ॥ ८०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ २ ३ १ २　　२ २ ३ १ २　　३ १ २
सुतासोममधुमत्तमाःसोमाइन्द्रायमन्दिनः ।

३ १ २　　　३ १ २　　३ १२
पवित्रवन्तोअक्षरन्देवान् गच्छन्तुवोमदाः ॥ २ ॥ ८१*

५ र र　　२　२　१र
( त्वाष्ट्रीसाम ॥ ) सुतासोमा । धुमाइत्तमाः । सो-

२　२　२　१ २ २　१　२　२
माइन्द्राइयमाइ । ए३ । दिनया । पवाइत्रवाइन्तो

ययातिर्नाहुषऋषिः† । "पूषा" पोषकः सर्वेषाम्‡ । "भगः" भजनीयः¶ "रयिः" धनहेतुः "अयं" सोमः "पुनानः" पवित्रे पूयमानः सन् "अर्षति" कलशमभिगच्छति । तथा "विश्वस्य" सर्वस्य "भुवनः" भूतजातस्य "पतिः" पालयिता§ "सोमः" "उभे" "रोदसी" द्यावापृथिव्यौ "व्यख्यत्" स्व-तेजसा प्रकाशयति । अनेन लोकद्वयपतित्वं सूचितम्‖ ॥ २ ॥ ८०

---

* सं० १,२,१५,१= ऋ०७,५,१,४=ऊहे २,२,३—२,२,३—२,२,४—७,१,२०—१५, १,२—१९,१,२—२०,१,१२—२७,१,१३—२२,२,११=ऊह्ये २,१,१०—४,१,७—५,१, ११—५,१,१२—६,१,१०—६,१,१५—६,२,२ ।

† 'नाहुषो मानवः'—इति ऋषि-नै० ।

‡ 'पूषा पुष्टालेः । सोमः । अथवा पूषा आदित्यः'—इति वि० ।

¶ 'भगः सएव सोमः शोभनः'—इति वि० ।

§ 'आदित्यात्मना'—इति वि० ।

‖ 'विनियोगोऽस्य द्वितीयेऽस्मि'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३। ए३। त्वरन्ना। दाइवान्गच्छा३न्तुवा३ः। ए३। मदा-
आ॥ १६॥

(ऊर्द्ध्वइत्वाष्ट्री॥) सुतासोमधुमत्तमाः। सोमा२
इन्द्रा२। यमा३४५। दी२३४नाः। पवित्रवन्तोअक्ष-
रन्। देवानगच्छा। तुवोमा२३दा३४३ः। ओ२३४५
इ। डा॥ १७॥

(वासिष्ठम्॥) सुतासोमधुमत्तमाः। सोमाइन्द्रा
यमन्दिनः। पाविन्त्रावा२। तोअक्षरन्। दाइवान
गच्छौवा। तू२३४वाः। मदा। औ३होवा। होपूइ।
डा॥ १८॥

(आष्कारणिधनं त्वाष्ट्री॥) सुतासोमधुमत्तमाः। सो
माहाउ। इन्द्रा३यामन्दिना२ः। इन्द्रा३हो। यमा२



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



दा२३४इना:। पवित्रवा३न्तोअत्तारा२न्। त्रवा३द्दो। तो२त्तार२३४रान्। देवान् गच्छा३न्तूवो१मादा२:। देवा ३न् द्दोइ। गच्छो२३४द्दा। तू२वार२३४औद्दोवा। मदा-३आर२३४५॥ १९॥

(वासिष्ठम्॥) सुतासोमधुमत्तमा६ए। सोमाइ न्द्रा३यामन्दिना२:। दाइना२:। पवित्रवा३न्तोअक्षा-रा२न्। क्षारा२न्। देवान् गच्छा३न्तूवो१मादा२:। मादा२:। देवा३न् द्दोइ। गच्छा२३४द्दा। तू२वार२३४औ द्दोवा। मदा३ई२३४५॥ २०॥

(स्वारत्वाष्ट्री॥) सुतासोमा३द्दा। धुमत्तामा२:। सोमाइन्द्रा३द्दा। यमन्दाइना२:। पवित्रवा३द्दा। ता-अत्तारा२न्। देवान् गच्छा३द्दा। तुवो३द्दो२३४। वा। मापुदो६द्दाइ॥ २१॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ र ३र २ २ २
(द्विरभ्यस्तत्वाष्ट्री॥) सुता। सोमा३। हा३हा।
२ १ २ र ५र ३ २ २ २ १ २
धुमत्तामा२३४ः। सोमाः। इन्द्रा३। हा३हा। यम
१ ५ ३ २ २ १ १र २ १
न्दाइना२३४ः। पवि। त्रवा३। हा३हा। तोआहा
र ५र ३ २ २ २ १ २ १
रा२३४न्। देवान्। गच्छा३। हा३हा। तुवो३हो२
५ ४ ५
३४। वा। मा५दो६हाइ॥ २२॥
५ र १ ४ ५ ४ ५ २र १र
(वासिष्ठम्॥) सुतासो३माधुमत्तमाः। सोमा
२ १ १ १ २ २ ५ २ र
इन्द्रा। यमन्दिनः। पावाओ२३४वा। त्रवन्त आचरन्।
१र र २ १ २१र २ १
देवान् गच्छ। तुवोमा२३हा३४३ः। ओ२३४५इ। डा॥
॥ २३॥ ८१

ययातिर्नाहुषऋषिः*। "मधुमत्तमाः" अतिशयेन माधुर्योपेताः अतएव "मन्दिनः" मदकराः "सुतासः" अभिषुताः सोमाः "पवित्रवन्तः"† पवित्रे वर्त्तमानाः सन्तः "इन्द्राय" इन्द्रार्थम् "चरन्" पात्रेषु चरन्ति। अथ प्रत्यक्षस्तुतिः। "वः" युष्माकं

* 'विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

† 'दशापवित्राख्याः'—इति वि०।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

१ २ २ १ २ ३ १ २ २ १ २
सोमाःपवन्तइन्दवोस्मभ्यङ्गातुवित्तमाः ।
३ २ २ १ २ ३ १ २ ३क २र ३ १ २
मित्राःस्वानाअरेपसःस्वाध्यःस्वर्विदः ॥ ४ ॥ ८२*

४ ५ २ १ ७ २
(कौत्से द्वे ॥) हाउसोमाः । पवाइन्ताइन्दावाउ ।
२ २ १ ७ २ २
वाइ । हाउवा । अस्मभ्यङ्गातूवित्तामाउ । वाइ । हा
१र र र २ २ २
उवा । मित्राः स्वानाआरे१पासाउ । वाइ । हाउवा
५र ३ २ १ ४ २ ५
३४ । सुवा । धियाइः । हूर२वाइः । वा३४५इदोईहा
इ ॥ २४ ॥

५र र ३ २ ३ ४ ५ २ १ २ १ २ ३ २ १
सोमाः पवन्तइन्दवाः । अस्माभ्यङ्गा । तुवित्तमाः ।
२ ३ ५ २र १र २र १ २ ३ र २ १ १ १
माइत्राओ२३४वा । स्वानाअरेपसः । सुवाधियाः । सुव
२ १
र्वी२३इदा३४३ः । ओ२३४५इ । डा ॥ २५ ॥ ८२

"मदाः" मद--हेतवो रसाः "देवान्" इन्द्रादीन्† "गच्छन्तु" ॥
॥ ३ ॥ ८१

* उ० ४,१.२०,१—ऋ० ७,५,२,५=कहे ३,२,१३—३,२,१४—३,२,१५—३,२,१६
—१५,२,१६—१५,२,१७—१५,२,१८—१६,१,१—२२,१,१४=ऊह्य ६,१,२० ।

† 'वस्वादीन्'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

२ १ २ ३ १ २ ३ १ २ ३ १ २
अभीनोवाजसातमꣳरयिमर्षशतस्पृहम् ।
१ २ ३ १ २ २ १ २ ३ १ २
इन्दोसहस्रभर्णसन्तुविद्युम्नं विभासहम् ॥ ५ ॥ ८३*

५ र र १ २
( सोमसामानि त्रीणि ॥ ) अभीनोवा । आ२सा२३
५र र १ ५ २ १ २ १ २ १ र
४औहोवा । ता२३४माम् । रयिमरिशतस्पृहम् । इन्दो

मनुः सांवरणऋषिः । "गातुवित्तमाः" अतिशयेन मार्गस्य लम्भकाः:† "इन्दवः" दीप्ताः‡ सोमाः "पवन्ते" अस्मभ्यं मदर्थं "चरन्ति" आगच्छन्ति वा। कीदृशाः? "मित्राः" देवानां सखिभूताः "स्वानाः" अभिषूयमाणाः "अरेपसः" पापरहिताः अतएव "स्वाध्यः" शोभन-ध्यानाः "स्वर्विदः" सर्वज्ञाः ॥

"स्वानाः"-"सुवानाः"—इति पाठौ ॥ ४ ॥ ८२

---

* उ० ५,१,१६,१ = ऋ० ७,४,२२,१ = ऊहे ५,१,३—५,१,४—५,१,५ — ५,१,६—५,१,७—५,१,८—१२,१,१५—१२,१,१६—१७,१,१२—१७,१,१३—१७,१,१४—१७,१,१९—१८,१,१०—१९,१,२—१९,१,९।

† "गातुः"—इति पृथिवी-नामसु विंशतितमं नैघण्टुकम् १,१। किञ्च निरुक्त-चतुर्थे—"गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति। गमनं यज्ञाय गमनं यज्ञपतये"—इति च यास्कः।

‡ 'ज्योतिरिन्दुः'—इत्यादि नि० नै० प० ९,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　७　　१　　१ २
सहस्रभा२३हो । णसा२म् । तुविद्युम्नं विभा२३होये

२ ३
३ । सहमा२३४५इ । डा ॥ २६ ॥

५ र र　　१ र २　　१　　र
अभीनोवा । जासातमम् । रयिम । षाउवा२३ ।

१ २ २　　१ २　　१ ५र　　१
होवा३हाइ । शतस्पृहम् । इन्दा२स । हाउवा२३ ।

१ १ २　　१　　२　　१ ३　　५र र
होवा३हा । स्वभर्णसम् । तुवाये३ । द्यू२म्ना२३४औहो

१र १ ३ १११
वा । विभासहा२३४५म् ॥ २७ ॥

२　　१　　२र र　　४　　२ ३　　५
अभी२होइ । नोवाजा३सा३ । हाता२३४माम् ।

२　　१　　२　　४　　२ ३　　५　　२
रयी२होइ । अर्षशा३ता३ । हास्पृ२३४हाम् । इ

१　　२　　४　　२ ३　　५　　२
न्दो२होइ । सहस्रा३भा३ । हार्णा२३४साम् । तुवा

१　　२　　४　　२ ४
२होइ । द्युम्नं वी३भा३ । हा३सा५हाई५ईम् ॥ २८ ॥

२ १　　२　　५र　　२ २
(क्रौञ्चम् ॥ ) अभीनोवा२१२३४ । जसा । तमा२

२ १ २　　५　　२ २　　२ १
म् । रयिमर्षा३१२२४ । शत । स्पृहा३म् । इन्दो

२१ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



साहा३१२३४। स्रभ। पसा३म्। तुवाइद्युम्ना३१२३

म्। विभा५सहाउ। वा ॥ २९ ॥

(सोमसाम॥) अभीनोवौहो५जसातमाम्। रयि

मर्षौहो५शतस्पृहाम्। इन्दोसहौहो५स्रभर्णसाम्।

तुविद्युम्नौहो५विभासहाम्। सहम्। तुविद्युम्नं विभाई।

हाउवा। सहा३मे२३४५ ॥ ३० ॥ ८३

अम्बरीषऋजिश्वानौ* द्रष्टारौ। हे "इन्दो" दीप्यमान सोम! "वाजसातमम्" अत्यन्तं बलप्रद मन्नप्रदं वा धनं पुत्रं "नः" अस्माकम् "अभ्यर्ष" अभिगमय†। कीदृशम्? "शतस्पृहं" बहुभिः स्पृहणीयम्। "सहस्रभर्णसं" बहुविधभरणम् अनेक-पोषण-युक्त मित्यर्थः। "तुविद्युम्न" [ द्युम्न द्योततेर्यशो वान्नं वेति‡ यास्कः ] बह्वन्नं बहुयशोयुक्तं वा। "विभासहं"¶ महतः प्रकाशस्याभिभवितारम् अतितेजस्विन मित्यर्थः ॥

---

* "अम्बरीषः वार्षागिरः"—"ऋजिश्वा भारद्वाजः"—इति ऋषि-नै०।

† अर्षेति ऋषतेर्गति-कर्मणो रूपम् ( २,१४ )।

‡ "द्युम्नं द्योततेर्यशो वान्नं वा "अस्मे द्युम्न मधि रत्नञ्च धेहि" अस्मासु द्युम्नं च रत्नं च धेहि"—इति निरु० नै० ५, ५।

¶ "विभा[illegible]" शब्दोऽसौ एकत्रावैव श्रूयते विवेद-संहितास्विति ध्येयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी ।

३ १ २ ३१२ १२र २र३ १ २
अभीनवन्ते अद्रुहः प्रियमिन्द्रस्य काम्यम् ।

१ २उ ३१र २र २ १ २ ३१२
वत्सन्न पूर्व आयुनि जातꣳ रिहन्ति मातरः ॥ ६ ॥ ८४

(आङ्गिरसानि त्रीणि ॥) आ२३४भी । ओइनवन्त

आहू१हा२ः । ओइप्रियमिन्द्रस्यकामा१या२म् । ओइ

वत्सन्नपूर्वआयू१नो२ । ओइ । जातꣳरिहन्तिमो१२३

४ । वा । तापुरोइहाइ ॥ २१ ॥

अभो । नवो२२ । तअ५द्रुहाः । प्रियामिन्द्र१२ ।

स्याकामा२३४याम् । वत्सन्नपू३ । वाआयू२३४नो ।

जाता२ꣳहोइ । रिहा२हो । तिमाता२३रा२४३ः । ओ

२३४५इ । डा ॥ २२ ॥

"शतस्पृहं"-"पुरुस्पृहम्"—इति, "विभासहं"-"विभ्वासहम्"

—इति च साम्न ऋचः पाठः ॥ ५ ॥ ८३

---

* ऋ० ७,४,२७,१ = आरण्ये १,२,२४—२,१,२—३,१,४—४,१,१२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ १ २३ २३१ २ ३ १ २
आ हर्यताय धृष्णवे धनुष्टन्वन्ति* पौंस्यम्।
२ २उ ३ १ २ ३१ २ ३१र २र ३ १ २
शुक्रा वि यन्त्यसुराय निर्णिजे विपामग्रे महीयुवः॥ ७॥८५†

५ ४र ५ र ४ ५ ४ ५ ४ ५ ४र ५
अभीनवन्ते अद्रुहः। ओहाइ। प्रियमिन्द्रस्यकामि
४ ५ ४ र ५ ४र ५ र ४ ५
यम्। ओहाइ। वत्सन्नपूर्वआयुनि। औहोवाहा
१ २ ३ ५ २ १ १ ४
इ। जातꣳरिहौवा। तो२३४मा। तरा। औहो
५ ४
वा। होप्इ। डा॥ ३३॥ ८४

ऋभ-सूनू काश्यपौ द्वयोः‡। यथा "मातरः" गावः "पूर्वे" प्रथमे "आयुनि"¶ वयसि "जातं" वत्सं "रिहन्ति" लिहन्ति तथा "अद्रुहः अद्रोहाः वसतीवर्याख्या आपः इन्द्रस्य "प्रियं" काम्यं सर्वैः काम्यमानं सोमम् "अभि नवन्ते"§ अभिगच्छन्ति॥

॥ ६॥ ८४

---

* "धनुस्तन्वन्ति"—ऋ०।

† ऋ० ७,४,२५,१।

‡ अस्याः परस्याश्चेत्यर्थः। न चात्र यथासङ्ख्यम्।

¶ "आयवः"—इति मनुष्य-नामसु सप्तदशं नैघण्टुकम् (२,३)। इह तु तस्यैव क्लीवता वयोऽर्थता चेष्टा भगवतः सायणस्य।

§ "नवते"—इति गति-कर्मसु ऊनत्रिंशत्तमं नैघण्टुकम् २,१४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र २ १
(गृत्समदस्य सूक्तानि चत्वारि ॥) आहा३। ओ२३

५ २१र २१२र ३२ १ ५ २
४वा। यंतायष्णवे२। धनूः। ओ२३४वा। तन्न

१र २ ३२ १ ५
न्तिपौंसियम्। भूद्भा३ः। ओ२३४वा। वियन्त्यस्तु

२र १२र ३२ १ ५ १२र र
रायनिर्णिजे२। विमा३। ओ२३४वा। अग्रे२मह्नी

१ ११११
युवा२३४५ः॥ ३४ ॥

२ २ १ ० २ ३ ५ २ २
हा३हाइ। आद्दयंता। या२३४धृ। हा३हा३४।

५र र २ ५ २ २ १ २
औ३होवा। ष्णा२३४वे। हा३हाइ। धनूष्टान्वा।

३ ५ २ २ ५र ५ ३ ५
ती२३४पौ। हा३हा३४। औ३होवा। सी२३४याम्।

२ २ १ र २ १ ० २ ३ ५
हा३हाइ। भूद्भाविय। ताअसुरा। या२३४नौ।

२ २ ५र र ३ ५ २ २
हा३हा३४। औ३होवा। णी२३४जे। हा३हाइ।

१ २ ३ ५ २ २ ५र र
विपामाग्नाइ। मा२३४ह्नो। हा३हा३४। औ३होवा।

३
यू२३४वाः॥ ३५ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ःर ५ ४ ५ ४ ० २ १
आहर्यतायधृष्णवआ। धनूष्टा१न्वा२। तिपौ९
२ १ र २ १ ७ २ १ ३
सा१या२म्। प्रुङ्काविय। ताअसुरा३। यानीरणा२३४
५ १ २ १ ४
इजाइ। विपामा१ग्रा२इ। ओइ। मा२३हो३।
२ ५
यू३४५वो६हाइ ॥ ३६ ॥

३ ५ १ ५ २ ४ ५ १
आ४हर्य। ता४यधृ। ष्णा३वोधनुष्टन्वा। तिंपौ
३ २ १ र २ १ ७ २ ३ २
९सियाम्। प्रुङ्काविय। ताअसुरा। यनाउवा३।
५ १ २ २ १ २ २ १र
णी२३४जे। वाइपा२९हाइ। आग्रे२हाई। महीयू
२ १
२३वा३४३ः। ओ२३४५इ। डा ॥ ३७ ॥ ८५

"हर्य्यताय"* सर्वैः स्पृहणीयाय "धृष्णवे" शत्रूणां धर्षण-शीलाय सोमाय "पौंस्यं" पुंस्त्वस्याभिव्यञ्जकं वरं "धनुरा-तन्वन्ति" धनूंषि ज्यां कुर्वन्तीति सोमस्य धारा-विसर्गार्थं वितायमानं पवित्र मभिधीयते। तदेव विवृणोति—"विपां" मेधाविनां "अग्रे"† पुरस्तात् "महीयुवः"‡ पूजाकामा अध्वर्यवः

* 'आहर्यतिः प्रेप्साकर्मा'—इति वि०।

† 'अग्रे प्रथमे'—इति वि०।

‡ 'महत्सोमं मिश्रयन्ति रश्मयः उदकानि वा'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

२३ १ २ ३ १र २र३ १ २ ३ १ २
परित्यꣳ हर्यतꣳ हरिम्बभ्रुम्पुनन्तिवारेण ।
३ २उ ३ २उ ३ १ २ ३ १र २र
योदेवान्विश्वाꣳ इत्परिमदेनसहगच्छति ॥ ८ ॥ ८६*

३ ४ ३ ४ ३ ४
( द्विरभ्यस्तमाकूपारम् ॥ ) परित्यꣳ हर्यतꣳ हरिम् ।
२ र ४ ३ ४ २
पा२३४ । रित्यꣳ हौहोऽपूर्यतꣳ हराइम् । बभ्रुम्पुनन्ति
र ४र ५ १ र र ४र ३र ४र
वारेण । वा२३४ । भ्रुम्पुनौहोऽपून्तिवारेणा । यादे

"शुक्रा"† शुक्लवर्णानि गो-पयांसि "असुराय"‡ बलवते "निर्णिजे" स्वरूपाय शोधनार्थं "वयन्ति"¶ आच्छादयन्तीत्यर्थः ॥

"शुक्राविवयन्त्यसुरायनिर्णिजे"-"शुक्रांवयन्त्यसुरायनिर्णिजम्" —इति साम्न ऋचः पाठौ ॥ ७ ॥ ८५

* उ० ५,२,१८,१—८,२,८,३ = ऋ०७,४,२४,१ = ऊहे५,२,१८—५,२,१९—५,२,२० —६,१,१—६,१,२,— ६,१,३—१२,२,१— १२,२,२—१४,२,१६—१४,२,१७—१४,२, १८—१४,२,१९—१४,२,२०—१४,२,२१ —१७,१,८—१७,१,९—१७,२,२—२०,२,४ = ऊह्ये ४,२,१ ।

† 'शुक्राः शुभ्रविषमन्तः'—इति वि० ।

‡ 'असुराय सुखाय वसुदानवते'—इति वि० ।

¶ वयन्तीति पाठस्तु ऋग्वेदीयः । तस्यैवाथस्तस्य तत्रैव व्याख्यान भगवता सायणेनेति बोध्यम् । सामवेदीय-पाठस्तु वियन्तीति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१ २ ३ १र २र ३ २ ३ १ २ ३ १र २र
प्रसुन्वानायान्धसोमर्त्तोनवष्टतद्वचः।
३ १ २ ३ १ २ ३ २ ३ १र २र
अपश्वानमराधसꣳहतामखन्नभृगवः॥ ९ ॥ ८७*

॥ प्रथम-दशति ॥

३र ४र ३ ४ ५ १ २ २ २ २ ४
वान्विश्वाꣳइत्यरि। यो२३४। देवान्वौहो५श्वाꣳइत्य
३ ४र २ ४ ५ १ २ २
राइ। मदेनसहगच्छति। मा२३४। देनसौहो५ह-
४ ५
ग। च्छा५तोई६हाइ॥ ३८ ॥ ८६

ऋजिश्वाम्बरीषावृषी†। "हर्यतः" सर्वैः स्पृहणीयं "हरिं हरितवर्णं "बभ्रुं" बभ्रुवर्णं च "त्वं" तं सोमं "वारेण" वालेन पवित्रेण "परि‡ पुनन्ति" परिशोधयन्ति। "यः" सोमः "विश्वान्" सर्वानिन्द्रादीन् "देवानित्" देवानेव "मदेन" मदकरेण रसेन सह "परि¶ गच्छति" इति §॥ ८ ॥ ८६

---

* उ० ६,२,३,१—१,१,२२,३ = ऋ० ७,५,३,३ = ऊहे१,२,१७— १,२,१८—६,२,१७—६,२,२०—११,२,२—११,२,३—११,२,१३—१५,१,१६—१६,१,१४— १८,१,१७—१९,२,१९—१९,२,२०—१९,२,२१—२२,२,७ = ऊह्ये २,१,४—३,२,४—६,१,६।

† "ऋजिश्वा भारद्वाजः—अम्बरीषो वार्षस्पत्यः"—इति ऋषि-नि०।

‡ 'परि समन्तात्'—इति वि०।

¶ 'परि देवं लक्षयित्वा'—इति वि०।

§ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ ४र ५ १ २
(वैरूपम् ॥) प्रसुन्वार२३नायअन्धसाः। मर्त्तः।

१ ३ २ ३ ५ २ र ३ २ ३ ५
नवा२। ष्टतद्वार२३४चाः। अपश्वानमरा। धार२३४सा-

२ १र २ ३ २ ४
म्। ह्वतामार२३खम्। नभृ३गा५वा६५६ः॥ ३९॥ ८७

॥ इति अष्टः प्रपाठकः॥

प्रजापतिर्ऋषिः*। "सुन्वानाय" अभिषूयमाणाय [षष्ठ्यर्थे चतुर्थी†] अभिषूयमाणस्य "अन्धसः" सोमस्य "तत्" प्रसिद्धं "वचः" वचनं घोषं "मर्त्तान" मर्त्य इव कर्म-विघ्न-कारी "नवष्टन" कामयतां न शृणोत्विति यावत्। तथा हे स्तोतारः "अराधसं" साधक-कर्म-रहितं‡। "श्वानम्" "अपहत"। तत्र दृष्टान्तः—"मखन्न"¶ यथा पुरा अराधसं मखम् एतन्नामानं भृगवोऽपहतवन्तः तथा अपहतेत्यर्थः॥

"सुन्वानाय"-"सुन्वानस्य"—इति, "वष्ट"-"ष्टते"—इति च साम्न ऋचः पाठः॥ ९॥ ८७

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्याष्टमः खण्डः॥ ८॥

॥ इत्यानुष्टुभम्॥

---

* "वाम्यः"—इति ऋषि-नि०।

† "षष्ठ्यर्थे चतुर्थीति वाच्यम्(२, ३, ६२,"—इति का० वा०।

‡ "अधनं धन-रहितम्'—इति वि०।

¶ "ह्वतामखम्"—इति मन्त्र-पाठस्य 'ह्वता'—'मखम्'—इति पदकारस्य छेदः।

२२ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



जगत्योऽभिप्रियाणीति मुख्या द्वादश सम्मताः* ।
आद्यास्तिस्र ऋचो दृष्टाः कवि†नाम्ना महर्षिणा ।
उत्तरा विप्रकीर्णत्वाद्वक्ष्यन्ते ऋषयः पृथक्‡ ॥

अथ नवमे खण्डे—

सैषा प्रथमा ।

२ १ ३१ २ ३ १ २ ३
अभिप्रियाणिपवतेचनोहितो

१ २ ३ २३ ३ १ २ १ २
नामानियह्वोअधियेषुवर्द्धते ।

१ २र ३ २ ३ १उ २
आसूर्यस्यबृहतोबृहन्नधि

२ ३ १ २ ३ २
रथंविष्वञ्चमरुहद्विचक्षणः ॥ १ ॥ ८८ ¶

---

भगवान् सायणोऽपि तथैव व्याख्यातवान् । अत्र नये इतेत्याकारश्च द्व्यचोऽतस्तिङ (६,३, १३५) दीर्घे 'इता'—इति रूपम् ॥ विवरणकारस्तु 'इत'—'धनकम्'—इत्येवं छेदं कीकृत्य 'धनकं यत्र-बहिष्कृतम्'—इति व्याचख्यौ ।

* अत्र नवमे खण्डे अभिप्रियाणीत्याद्याः द्वादश ऋचः सम्मताः पूर्वाचार्य्या-णामिति शेषः ।

† "कविः भार्गवः"—इति ऋषि नै० ।

‡ तत्र द्वादशसु आद्यास्तिस्र ऋचः कविनाम्ना महर्षिणा दृष्टाः । उत्तराः ऋचः नैकेन दृष्टा इति तत्र ऋषि-विप्रकीर्णत्वम् तस्मात् तत्र ऋषयः पृथग् वक्ष्यन्ते ।

¶ उ० १,१,१९,१=ऋ० ९,२,२३,१= आरण्ये २,१,६ ऊहे =१,१,१२—९,१,२—१४,१,१८—१६,२,१५—१९,१,१४=उह्ये १४,१,१—१४,१,१९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ओम् ॥ (कावम् ॥) आभिप्रीर२३४या । णोपावार२३४ ताइ । चानोहिता२३ः । नामानीर२३४या । क्रोअधी २३४ये । षूवर्द्धतायें२ । आह्वरीर२३४या । स्याबृहा २३४ताः । बृहन्नधायें२ । राथंवा२३४इष्वा । चामाह् २३४हात् । विचा३१उवार२३ । चार२३४णाः ॥ १ ॥

(ऐडकावम् ॥) एपू । अभिप्रियार२ । णिपवताइ । एपू । चनोहिताः । एपू । नामानीयार२ । क्रोअधि याइ । एपू । षुवर्द्धताइ । एपू । आह्वरियार२ । स्य बृहताः । एपू । बृहन्नधी । एपू । रथंविष्वार२ । चम हहात् । एपू । विचक्षणाः । होपूइ । डा ॥ २ ॥

(वाजसनि ॥) अभ्योहोवाहाइप्रियाणी । पवता इचार२३४नो । हिताः । नामानियह्वोअधियेषुवर्द्धताइ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ र १ २ १ २ १२
आहूर्यस्यव, हतोव, हन्नधाइ। रथम्। वाइमन्त्रमरुहत्।
२ १ १११११
विचा२१उवा२३। णा३णा२३४५ः॥ ३॥

२ १ २र १ १
(वाजजित्॥) अभिप्रिया। णीपवताइ। होइहो
२ १२ ५र ४ ५र ४ ५ २र
वा३होये३४। चनोहिताः। हाहो। वाहाइ। ना
र १ २र १ १ २ १ २ ५
मानिया। कोअधियाइ। होइहोवा३होये३४। धुव
४ ५र ४ ५ २र र १ २र १
र्हताइ। हाहो। वाहाइ। आहूरिया। स्याव, हताः।
१ २ १ २ ५ ४ ५र ४ ५
होइहोवा३होये३४। व, हन्नधी। हाहो। वाहाइ।
२ १ २र १ २ १ २ ५
रथंविष्वा। चामरुहान्। होइहोवा३होये३४। विच
४ ५र ४ ५ ५ २र१र २ १
क्षणाः। हाहो। वाइहाउ। वा। वाजीजिगी३वा
ऽ१॥ ४॥

२ १ २र १ २र१र
(वाजजित्साम॥) अभिप्रिया। णीपवताइ। चानो
१ १ २र र १ २र १
हिताः। होवा३होइ। नामानिया। कोअधियाइ।
२र १ २ १ २र र १ २र १
धूवर्हंताइ। होवा३होइ। आहूरिया। स्यावृहताः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २ १ २ १ २र १
बृहन्नधाइ। होवा३हो। रथंविषा। चामरुद्दात्।
२र १ २ १ २ ५र र १र१र
वीचक्षणाः। होवा३होर। वार३४औहोवा। वाजी
२र१र २र १ ऽर २ १ १ १ १
जिगीवाविश्वाधनार२नीर२३४पु॥ ५॥

५ ४ २ १र २
(स्वारकावम्॥) अभ्योवा। प्रियाणिपवताइ। च
र १ १र र र २ १
नोहाइता२ः। नामानियह्वोअधियाइ। षुवर्द्धाता२इ।
१र र २ १ १ २ ४ ५
आह्वर्यस्यबृहनो। बृहन्नाधीर२३। राथा३०वाइषा।
२ १ १ २ ४
चमरुद्दा२३त्। वाइचा३त्तापुणा६५ई॥ ६॥ ८८

"चनोहितः" [चन इत्यन्ननाम* चायतेरन्नुनि चन इत्यौणादिक-सूत्रेण निपातितः] चनसेऽन्नाय हितः। यद्वा। हितान्नः सोमः "प्रियाणि" जगतः प्रीणयितॄणि नामानि नमनशीलानि तान्युदकानि "अभिपवते" अभितः चरति करोति। "येषु" अन्तरिक्ष-स्थितेषु उदकेषु "यह्वः" महानहं सोमः "अधि

* "अद्यौन्द्र प्रांस्नतानीमानि चर्णी॑पि चनो दधिष्व। चन इत्यन्ननाम"—इति नै०६,१६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ १ २ ३ १ २ ३
अचोदसोनोधन्वन्त्विन्दवः

२ ३ १ २ ३ २३ २ ३ १ २
प्रस्वानासोबृहद्दे वेषुहरयः।

१ २ ३ २ ३ २ ३ १ २ ३
विचिदश्नानाइषयोअरातयो

१ २ ३ १ २ ३ १ २
र्योनःसन्तुसनिषन्तुनोधियः॥ २॥ ८९*

२ ३ १ २ ३ १
(आङ्गिरसानि त्रीणि॥) अचोदासा२३। नोधनूवा

२३ १ २ ३ १ २ १ २३
२३। तूइन्दवाः। प्रस्वानासा२३। बृहद्दाइवे३२। षू

१ २ १ २३ १ २३ १२
हरयाः। विचिदाश्ना२३। नाइषायार२३ः। आरातयाः।

वर्द्धते" अधिकं प्रवृद्धो भवति। अपां मध्ये सोमो वसति खलु। ततः "बृहन्" महान् सोमः "बृहतः" महतः परिवृढस्य "सूर्यस्य" "विष्वञ्च" विष्वग्गमनं रथम् "अधि" उपरि† "विचक्षणः"‡ विश्वस्य द्रष्टा सन् "आरुहत्" आरोहति। "अग्नौ प्रास्ताहुतिः सम्यगादित्य मुपतिष्ठते(म० ३,७६)"—इति ॥१॥ ८८

* ऋ० ७,३,४,१।

† 'अधि उपरि आदित्यमण्डलात् चतुर्थं मण्डलं रथं विष्वञ्चं नाम'—इति वि०।

‡ 'विचक्षणः विविधं प्रकाशयन इत्यर्थः'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ १  २र १  २र १र २ १
अर्योनाःसा२३। तूसनाइषा२३। तूनाधिया३१उवा२-
१ ११
३४५ ॥ ७ ॥

१ २र ३ २ १र४ ५ ४ ५ १ २र
आचोदसो। नोधनुवन्तु। इन्दवाः। प्रास्वा
र २ ३ ४ र र ५ ४ ५ १ २ ३ २ २र ४
नासो। बृहद्दे वेषु। हरयाः। वाइचिदश्ना। नाइ
र ५ ४र ५ १ २र ३ २ ३ ४ ५ ४
षयोश्र। रातयाः। अर्योनःसा। तुसनिष। तुनो
धियाउ। वा ॥ ८ ॥

२र र २ र र ऽर १ २ ४
हाउहोवा३हाइ। अचोदसोनो३धा। नुवा३न्तू
२ ३ १ १ १ १ २र र २ र र र
३। इन्दवा२३४५ः। हाउहोवा३हाइ। प्रस्वानासोवृ३
१ २र ४ २ ३ १ १ १ १ २र र २
३हात्। देवे३षू३। हरया२३४५ः। हाउहोवा३हाइ।
र ऽर १ २ ४ २र ३ १ १ १ १ २र
विचिदश्नाना३आइ। षयो३आ३। रातया२३४५ः। हा
र २ र १ २ ४ २र
उहोवा३हाइ। अर्योनःसन्तू३सा। निषा३न्तू३। नोधि
१ १ १
या३२उवा३४५ ॥ ९ ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ ४ १ र र २
(सामराजम् ॥) अचोहाइ। दासोनोधनुवा। तु
१ १ र र र र २ १ २
इन्दावा२ः। प्रस्वानासोबृहद्देवाइ। षुहरायार२ः। वि
५ २ ५ २र २
चो२३४हाइ। अस्मो२३४हाइ। नाइषयः। अरो२३४
५ १ २ ३ ५ ३ ५ २
हाइ। तायाः। अर्यो२३४हाइ। नःसो२३४हा। तू
३ ५ १ ५ २ ५
सानौ२३४षा। तूना३उवा३। धीर२३४याः॥ १०॥

५ र ४ ५ १ र र
(सामराजम् ॥) अचौहोवा। दासोनोधनुवाः।
२ १ १ र र र र २ १
तुइन्दावा२ः। प्रस्वानासोबृहद्देवाइ। षुहरायार३ः।
१ २ ४ ५ २ ३ ५ २ १ २ २
वाइचीइदास्मा। नाइषा२३४या। होइ। अरातार
५ ३ १ २ ४ ५ २ ३ ५
३४याः। होइइ। आर्योइनाःसा। तूसानौ२३४षा।
१ ३ २ ४
हो। तुनो३धा५याई५६ः॥ ११॥

५ र ४ ५ १ र
(सिमानांनिषेधः॥) अचो। वाहाइ। दासो
र २ १ १ र र र र २
नोधनुवा। तुइन्द्२ावाः। प्रास्वानोसोबृहद्देवाइ। षुह



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



रायाइ३ः । वाइ३इचीत् । आइ३ । आ३४ । नाइ

षयोआ । ताउयाः । आइ३र्या । नाइ३ःसा३४ ।

तुम्रनिष । तुनोइधा५याई५ई: ॥ १२ ॥ ८९

"अचोदसः"* अचोदनाः अनन्यप्रेरिताः "इन्दवः" सोमाः "नः" अस्माकं† "प्रधन्वन्तु" प्रगच्छन्तु [ धन्वतिर्गति-कर्मा‡ ]। कुत्र? "बृहद्देवेषु हरयः" प्रभूत-देवयुक्तेषु यज्ञेषु [ यथा क्षा बृहद्देवकुलजेषु मध्यते इति सम्बन्धः ] कीदृशा इन्दवः? "स्वनासः" सूयमानाः "हरयः" हरितवर्णाः¶। किञ्च। "अरातयः" धनादि-दान-रहिताः "नः" अस्माकम् "अर्यः"§ अरयः "इषयः" इषोऽन्नानि इच्छन्तः "अस्नानाः"‖ अशनेन भोजनेन वियुक्ता एव सन्तु। किञ्च। नोऽस्माकं "धिया" कर्माणि देव--विषयाणि स्तोत्राणि+ "सनिषन्तु" देवान् सम्भजन्तु ॥

---

* 'चोदयति'—इति वि० ।

† 'नः अस्मान्'—इति वि० ।

‡ निघ २,१४,६४ ।

¶ 'हरयः हरणशीलाः'— इति वि० ।

§ 'अर्यः स्वामिनः'— इति वि० ।

‖ 'अस्नानाः विनाशयन्ति'— इति वि० ।

+ 'धियः कर्माणि प्रज्ञा वा'—इति वि० ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३ ३ १ २ २
एषप्रकोशेमधुमाँ२ अचिक्रद-

१ २ ३ २ ३ १ २ ३ १ २
दिन्द्रस्यवज्रोवपुषोवपुष्टमः।

३ २ १ २ ३ १ २ ३ १ २
अभ्यृ३तस्यसुदुघाघृतश्चुतो

३ १ २ ३ १२ ३ १ २
वाश्राअर्षन्तिपयसाचधेनवः॥ ३॥ ९०*

२र१ १
(वासिष्ठम्॥) एषप्रकोशे२। म। धुमाँ२।

१ २ ३ ५ २ १ २ १ १ ३
अचाइक्रा२३४दात्। इन्द्रास्यवाज्रा२ः। पुषो२। व

३ ३ ५ २ १ २ १ १ २
पुष्टा२३४माः। अभ्यार्ताश्चा२। सु। दुघा२ः। घृ

२ ३ ५ २र १र २ १ १
ताश्चू२३४ताः। वाश्राअर्षान्ती२। प। यसा२३।

२ ४
चधा३इनापूवा३५६ः॥ १३॥ ९०

"देवेषु"—"दिवेषु" इति पाठौ॥ "विचिदश्माना इषयो अरातयोर्या नः सन्तु सनिषन्तु नः धियः"—इति छन्दोगाः। "विचिनशन्न इषो अरातयोर्यो नः सन्तु सनिषन्तनो धियः" बह्वृचाः॥ २॥ ८९

* ऋ० ७,३,१,१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २　३ २ ३ १ २　　१ २उ
प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं

२ ३ १ ३र २र　　३ १ २
सखा सख्युर्न प्रमिनाति सङ्गिरम्।

"एषः" अयं सोमः "मधुमान्" मधुर-रसः "कोशे" द्रोण-कलशे "प्राचिक्रदत्" प्रकर्षेण शब्दायते। कीदृश एषः? "इन्द्रस्य" "वज्रः" वज्रस्थानीयः बलकरत्वेन वज्रवत् प्रहरण-साधनत्वाद् वज्रत्वोपचारः*। "एषः" एव हि सोमः "वपुषः" वीजानां वप्तुरन्यस्मात् "वपुष्टमः"† अतिशयेन वप्ता। वीजावापस्य सोम-कर्त्तृकत्वात् [सोमो वै रेतोधा इति श्रुतेः]। "ऋतस्य" सत्यफलस्य सोमस्य धारा इति शेषः। ता "अभ्यर्षन्ति" अभि गच्छन्ति‡। कीदृश्यः? "सुदुघः" सुष्ठु दोग्ध्र्यः फलानाम्। "घृत-श्चुतः" उदकस्य रसस्य वा चारयित्र्यः "वाश्राः" शब्दयन्त्यः¶। पयसा युक्ता वाश्रा धेनव इव§ सुशोपमस्येतत्॥

"वपुष्टमः"-"वपुष्टरः"—इति, "अभ्यृतस्य" "अभीमृतस्य"—इति, "पयसा च धेनवः"-"पयसेन धेनवः"—इति च छन्दोग-बह्वृचानां पाठाः॥ २॥ ९०

* 'पीते वज्रं चेन्तुं समर्थः'—इति वि०।

† 'दीपितारः'—इति वि०।

‡ 'वर्षन्ति चरन्ति'—इति वि०।

¶ वाश्राः कामयमानाः'—इति वि०।

§ 'चरन्ति पयः धेनव आदित्यरश्मयस्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ १ १ २ २
मर्यइवयुवतिभिःसमर्षति

१ २ ३ १ २ ३ १ २ ३ २
सोमःकलशेशतयामनापथा ॥ ४ ॥ ९१ *

२ २ ५ ४
(लौशम् ॥) प्रोयार्२३४सीत्। इन्दुरिन्द्रा२३। स्या

२ ३ ५ ३ २र ३ ५ १ ४ २ २
३निष्कृतम्। सखासख्युः। नप्रमिना२३। तो३सङ्गि

५ ३ २ ३ ५ १ ४ २ ३ ५ ३र २
रम्। मर्यइव। युवतिभा२३इः। सा३मर्षति। सोमः

३ ५ १र २ ४
कला। शेशतया२३। मना३पापुथा६५६ ॥ १४ ॥

३र ४र र ३ ४ ६ ४ ५ ३ २
(उत्तरलौशम् ॥) प्रोयासीदिन्दुरिन्द्रस्यनिः। कृता

२ १ १ १ १ ३ २ ५ ४ ५ र
म्। कृता२३४५म्। सखा३१२३४। सख्युर्नप्रमिना

४ ५ ४ ५ ३ २ ५ ४ ५
तिसम्। गिराङ्गिराम्। मर्या३१२३४ः। इवयुवतिभिः

४ ५ ४ ५ ४ ५ ३र २ ५र ४ ५र
सम। षताइषताइ। सोमा३१२३४ः। कलशेशतया।

३ २ ४
मना३पापुथा६५६ ॥ १५ ॥

---

१ उ० ४,२,७,२ = ऋ० ७,३,१५,१ = ऋग्वे ४,१,७—६,२,१०—७,२,११—१०,१,५ —१३,२,१५—१६,२,१८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र　१र　　२　१
(प्रवद्भार्गवम् ॥) प्रोष्वयासाइत्। इन्दुरिन्द्रा। स्या

१　　२ र　१　　२ १　　१
२निष्कृताम्। सखासख्युः। नप्रमिना। ता२इसङ्गि

२　१　　२　१　　१　　२र
राम्। मर्यइवा। युवतिभाइः। सा२मर्षताइ। सो

१　　२र१　　१र　२　　१११११
मः कला। शेश्नतया। मा२नापथा२१३। बा२३४५॥

॥ १६ ॥

२र　१र　　२　१　　२र
(तन्त्रम् ॥) प्रोष्वयासाइत्। इन्दुरिन्द्रा। स्या

१　　२र२ १ ५　　३ २ २ ५र　　१ २ २
निष्कृता२३म्। सखासख्युः। नप्रामिना। तिसङ्गा

५　　२ १　　२ १　　२र१　२
२३४इराम्। मर्यइवा। युवतिभाइः। सामर्षतायेइ।

र २ ३ ५　　३र२ ३ ५र　　१ २　४
सोमःकला। शेश्नातया। मनाइपा५थाइ५६॥ १७॥

१　　र　र　७
(यामम् ॥) आ२इ। इया। प्रोष्वयासाइदिन्दु

४　२ ३ ५　　१ र　७
रिन्द्रा२३। स्याइनिष्कृतम्। सखासख्युर्नप्रमिना-

४ २ ३ ५　　१　　७　　४ २
२३। तीइसङ्गिरम्। मर्यइवायुवतिभा२३इः। साइम



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र्षति। आ२ई। इया। सोमः कलाशे१शतयार२३। मनाइपापूथाई५ऊ६॥ १८॥ ८१

ऋषिगणऋषिः*। "इन्दुः" सोमः "इन्द्रस्य" "निष्कृतं" संस्कृतं स्थान मुदरं "प्रो अयासीत्" प्रकर्षेणैव गच्छति। गत्वा च "सखा" सखिभूतः सोमः "सख्युः" इन्द्रस्य "सङ्गिरं" सम्यग्गिरणाधारभूत मुदरं† "न प्रमिनाति" न हिनस्ति। किञ्च। सः "मर्य इव"‡ "युवतिभिः" मर्त्यो यथा तरुणीभिः सह सङ्गतो भवति तद्वत् अय मपि सोमो युवतिभिर्मिश्रणशीलाभिर्वसतीवरीभिरद्भिः सह "समर्षति" सङ्गच्छते अभिषवकाले। स च सोमः "शतयामना" याम्ना अनेकया मनसाधनच्छिद्रोपेतेन "पथा" मार्गेण दशापवित्रसम्बन्धिना "कलशे" द्रोणकलशे गच्छतीति शेषः। यद्वैकमेव वाक्यम्। यथा मर्यो युवतिभिः सह सङ्गच्छते एवं कलशे शतयाम्ना पथा सङ्गच्छतेऽद्भिः॥

"शतयामना"-"शतयाम्ना"—इति पाठौ॥ ४ ॥ ८१

---

*"सिकतानिवारी"—इति ऋषि-नै०।

† 'सङ्गिरं सुगम्'—इति वि०।

‡ 'निष्कृतं समवायम्'—इति वि०।

¶ 'मर्य्याः'—इति मनुष्यनामसु एकादशं नैघण्टुकम् २,३। "छन्दसि निष्टर्क्य (पा० ३,१,१२३)"—इत्यादिना सिध्यति मर्यइति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

२ २ ३ १ २ ३ २ ३ २ ३
धर्त्तादिवःपवतेकृत्व्योरसो
१ २ ३ १ २ ३ २ ३ १ २
दक्षोदेवानामनुमाद्योनृभिः ।
१ २ ३ २७ ३ १२ ३२ ३
हरिःसृजानोअत्योनसत्वभि
२ ३ १ २ ३ १
र्वृथापाजाᳲसिकृणुषे*नदीष्वा ॥ ५ ॥ ९२†

२ १ २ ४र
( वात्सप्रिरसो द्वे ॥ ) धर्त्तादाइवा३ । ओवा५ए ।
२ र १ २ ४र २ १ २
पवतेकृत्वी३योरासा३ । ओवा५ए । दक्षोदाइवा३ ।
४र २र र १ २ ४र २
ओवा५ए । नामनुमादी३योनभा३ । ओवा५ए । ह
१ २ ४र २र र १ २
राइःसार्जा३ । ओवा५ए । नोअतियोना३सात्वाभा३ ।
४र २ १ २ ४र २
ओवा५ए । वृथापाजा३ । ओवा५ए । सिकृणुषाइन
१ २ ४र ४
दाइषूवा३ । ओवा३ए । ह्नो५इ । डा ॥ १९ ॥

---

* "कृणुते"—इति ऋग्वेदीय-पाठः ।

† उ० ५,१,१२,१ = ऋ० ७,९,१,१ = ग्रामगेये १,२,४—१,२,२५—१,२,२६—१,२,२७—१,२,२८ = ऊहे ४,२,१४—९,१,१६—१५,१,१५—१७,१,२०—२३,२,१६—२९,२,१९ = ऊह्ये ३,१,१०—४,१,४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



धर्त्ता ओहोहोहाइ। दिवः। पवतेका। औहोऽ३
हा३। हा। त्वियोरसो। दक्षोदेवा। औहोऽ३हा३।
हा। नामनुमा। दियोन्भाइः। हराइःसार्जा। औ
होऽ३हा३। हा। नोअतियो। नसत्वभाइः। वृथापा
जा। औहोऽ३हा३। हा। सिक्तणूषा। औहोऽ३हा३।
हाइ। नदीषुवा। औहोऽ३हा३। हा३४। औहोवा।
ए३। नदीषुवा१ ॥ २० ॥ ९२

कविऋषिः*। "धर्त्ता" सर्वस्य धारकः सोमः "दिवः" अन्तरिक्षात् अन्तरिक्षस्थितादशापवित्रात् "पवते" पूयते। कीदृशः सोमः? "क्रत्वः" कर्त्तव्यः शोध्य इत्यर्थः। "रसः" रसात्मकः। "देवानां" "दक्षः†" बलप्रदः। यद्वा। दक्षः प्रवर्द्धनीयो देवाना

* "भार्गवः"—इति श्रुति-नै०।

† 'दक्षः शोध्यः'—इति वि०। "दक्षः"—इति बलनामसु पठितम् नैघण्टु क०२,९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २ २ १ २ ३ २उ
वृषामतीनाम्पवतेविचक्षणः

३ १ २ ३ १र २र ३ २
सोमो अह्ना*म्प्रतरीतोषसा†न्दिवः।

३ १र २र ३ १ २ २
प्राणासिन्धूनांकलशाएँअचिक्रद

१ २ ३ १ २ ३ १ २ ३ १ २
दिन्द्रस्यहार्द्याविशन्मनीषिभिः॥ ६॥ ९३‡

मर्षाय। तथा "नृभिः" नेतृभिर्ऋत्विग्भिः "अनुमाद्यः" अनुमादनीयः स्तुत्यो वा। "हरिः" हरितवर्णः। "सत्वभिः" प्राणिभिः अस्मदादिभिः "सृजानः" सृज्यमानः "अत्यो न"¶ अश्व इव स यथाश्रितोऽनसेन गच्छति तद्वत्। "वृथा" अप्रयत्नेन "पाजांसि" बलानि§ स्वीयान् वेगान् "कृणुते" कुरुते "नदीषु"‖ वसतीवरीषु ताभिरित्यर्थः। असिक्त इत्यर्थः। अथ मभिषव-समयाभिप्रायः+ ॥ ५॥ ९२

* "अह्नः"—इति } ऋग्वेदीय-पाठौ।
† "उषसो"—इति }

‡ उ० २,१,१७,१ = ऋ० ७,३,१५,४ = जत्ते १,१,१०—८,१,५—१६,१,१७ = जह्ने ४,१,२।

¶ "अत्यः"—इति अश्व-नामसु प्रथमं नैघण्टुकम् १,१४।

§ 'पाजांसि अन्नानि'—इति वि०। "पाजः"—इत्यन्ननामसु पाठभेदेन तृतीयं नैघण्टुकम् (२,१)—बलनामसु च द्वितीयम् (२,९)।

‖ 'नदीषु रश्मिषु'—इति वि०।

+ 'योगोऽस्माद्दस्लेऽहमि'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १ २र १
(ऐडयामम्॥) वृषामातीर२३। नापवाता२३इ।
२ २ २र र १ २ १
ए३। विचक्षणए३। सोभोश्राक्षा२३म्। प्रतराईता२
२ २ र २र र १ २र
३। ए३। उषसान्दिवए३। प्राणासाइन्धू२३। नाक्क
१ २ २ २ १
लाश्रा२३। ए३। अचिक्रददे३। इन्द्रस्याहा२३।
२ र १ २ २ र १
दियावाइश्रा२३न्। ए३। मनिषिभिरे३४३! श्रो२३४५
इ। डा॥२१॥

१२र र १र २
(यामम्॥) वृषामतीनाम्पव। ताइवा१इचा२३४।
५ ३ १ १ १ १ १र १र १ २र १ २र १ २
।च। णा२३४५:। सोमोश्रक्षाम्यतरी। तोषा१सा२३४
५ १ १ १ १ १ २र १र २र र १
म्। दि। वा२३४५:। प्राणासिन्धूनाकल। श्रा१
२ ५ ३ १ १ १ १ १ २ १र
श्रा१चा२३४इ। क्र। दा२३४५त्। आइन्द्रस्यहार्दि
र ३ ५ १ १ १
यावि। श्रान्मा१ना२३४इ। षिभाऽ२उ। वा३४५॥ २२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　１　१र　र२१　२　१र
वृषा२मता२इ। नाम्पवतेविचचा२३णाः। सोमो
१　१ र र २१र　२　१र　१
२अक्का२म्। प्रतरीतोषसान्दा२३इवाः। प्राणा२सि
१र　र　२१　२　१　१
न्धू२। नाक्कलशा९अचिक्रा२३दात्। इन्द्रा२स्यहा२।
१र　१ १र　२　१
दियाविशन्मनीषा२३इभा३४३इः। ओ२३४५इ। डा॥

॥२३॥९३

ऋिगण ऋषिः*। अयं "सोमः" "पवते" अभिषूयते†। कीदृशः सोमः? "मतीनां" मतयः स्तोतारस्तेषां‡ "वृषा" वर्षकः कामानाम्। "विचचणः" विद्रष्टा ¶ "अक्काम्" उषसां "दिवः" द्युलोकस्यादित्यस्य वा "प्रतरीता" प्रवर्द्धयिता§। किञ्च। "सिन्धूनां" स्यन्दमानानामुदकानां ॥ "प्राणा" [प्रकर्षेण अनिति चेष्टते इति प्राणा] कर्त्ता सोमः "कलशान्" "अचिक्रदत्" धारया अध्वनयत् प्रवेष्टुम्। यद्वा। "सिन्धूनां" [तृतीयार्थे षष्ठी]

---

* "कविः भार्गवः"—इति ऋषि-नै०।

† यज्ञपात्रेषु चरते इत्यर्थः।

‡ "मतीनां प्रज्ञानाम्"—इति वि०। "मतयः"—इति मेधावि-नामसु च द्वात्रिंशतितमं नैघण्टुकम् ३,१५।

¶ "विचक्षणः विविधं प्रकाशयिता सोमः"—इति वि०।

§ 'प्रतरीता प्रकर्षेण तारयिता'—इति वि०।

"सिन्धवः"—इति नदीनामसु एकविंशतितमं नैघण्टुकम् १,१३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ ३१२१२
त्रिरस्मैसप्तधेनवोदुदुह्रिरे

३ २ ३ १ २ ३ १ २
सत्यामाशिरम्परमेव्योमनि।

३ २ ३१र २र ३ २ ३
चत्वार्यन्याभुवनानिनिर्णिजे

१ २ ३ २३१र २र
चारूणिचक्रेयदृतैरवर्द्धत ॥ ७ ॥ ९४ *

१ ५र ४ ५र ४
( मरुताम्धेनुसाम ॥ ) त्रा२३४इ:। अस्मैसप्तधेन

५र र ४ ५ २ १र र १ र
वोदुहौ। होह्राइराइ। सत्यामाशिरम्परमाइ। वियो

सिन्धुभिरद्भिः "प्राणा" [ प्रा पूरणे ( अ० प० ] पूर्णः "सोमः" कलशान् "अभि" लक्ष्य क्रन्दते। किं कुर्वन् ? इन्द्रस्य "हार्दि" हृदयम् "आविन्" प्रविशन् "मनीषिभिः" मनसईशित्रीभिः स्तुतिभिः सहेति शेषः [यद्वा। व्यवहितमपि मनीषिभिरित्येतत् पवतइत्यनेन सम्बध्यते †॥

"प्राणा"—इति, "क्राणा"‡—इति, "अचिक्रदद्"—"अवीविशत्"-इति पाठाः॥ ६ ॥ ९३

---

* उ० ६,२,१०,१ = ऋ० ७,२,२३,१ = ऋग्वेदे ८,१,१२।

† "विनियोगोऽस्य तृतीयेऽहनि'—इति वि०।

‡ क्राणाः—इत्यस्य कुर्वाणाइत्यर्थः स्वीकृतो यास्केन न० ४, १९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१      १र र      २ १      २
मानी२ । चत्वार्यन्याभुवना । निनिर्णाइजा२३इ । चा
२    ५    २र१ २र   १ २ ४
रूणा२३४इचा । क्रे यदृतैः । आवार्द्धापूता६५६ ॥२४॥९४

रेणर्ऋषिः* । "अस्मै" पवमानाय "परमे" उत्कृष्टे "व्योमनि" [ विविधं ओम अवनं गमनं देवाना मत्रेति]व्योमा यज्ञः तस्मिन् स्थिताय । यद्वा । परमे व्योमन्यन्तरिक्षे वर्त्तमानाय "त्रिः सप्त" एकविंशति-सङ्ख्याकाः "धेनवः" प्रीणयित्र्यो गावः "सत्याम्" यथार्थभूतं "आशिरम्" आश्रयण-साधनं क्षीरादि "दुदुह्रिरे" दुहन्ति [ यद्वा । त्रिःसप्त=द्वादश मासाः—पञ्चर्त्तवः—त्रयइमे लोकाः—असावादित्य एकविंशइति। एतैः सर्वैः सह गोषु पय उत्पाद्यते तद्गावो दुहन्तीति ] । किञ्च । अयं सोमः "अन्या" अन्यानि चत्वारि "भुवना" उदकानि वसतीवरीस्तिस्रस्त्वैकधना इति तानि चतुःसङ्ख्यानि† "चारूणि" कल्याणानि "निर्णिजे" निर्णेजनाय परिशोधनाय परिपोषणाय वा "चक्रे" तदा करोति। "यद्" यदा अयम् "ऋतैः" यज्ञैः "अवर्द्धत" वर्द्धितवान् तदा करोति ‡।

"दुदुह्रिरे"–"दुदुह्रे"—इति, "परमे"--"पूर्व्ये"—इति च पाठः ॥ ७॥ ९४

* "वैश्वामित्रः"—इति ऋषि-नि० ।

† वसतीवरीसञ्ज्ञाना मपा माधार एको घटः, एकधन-नामकाश्च त्रयः । तत्र वसतीवरी-घटोदकेनाभिषुतसोमरसस्य वर्द्धनं भवति, एकधनघटानान्तु सोमाभिषवे उपयोगः।

‡ विनियोगोऽस्याभिप्लवे । अस्मै सोमाय। सप्त धेनवः सप्तच्छन्दांसि। त्रिः=प्रातःसवन-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

१ २ ३ १ २ ३ १ २ ३ १ २र
इन्द्रायसोमसुषुतःपरिस्रव।
२र ३ १ २ ३ २
पामीवाभवतुरक्षसासह।
३ १ २ ३ २ ३
मातेरसस्यमत्सतद्वयाविनो
१ २ ३ १ ३ १ २
द्रविणस्वन्तइहसन्त्विन्दवः॥ ८॥ ९५ *

---

* उ० ७,३,१०,१।

माध्यन्दिन-तृतीयसवनेषु दुदुह्रिरे। अथवा त्रिसृभिः सवनैः सप्त धेनवः सप्ताहोरात्रा वषट्कारिणः होता मैत्रावरुणः ब्राह्मणाच्छंसी पोता नेष्टा अच्छावाक आग्नीध्रः। एतेषां वाचः दुह्यन्ते। अथवा धेनवः दुह्यन्ते सत्या माशिरम्। आश्रयणीयं मिश्रणं वा परमे प्रकृष्टे व्योमनि स्थाने यज्ञे वा। चत्वारि अत्यग्निष्टोम उक्थः षोड़शी अतिरात्रश्चतुर्थः। अथवा पृथिवी अन्तरिक्षं द्यौर्दिश इति। अथवा चत्वारो वेदाः। अथवा चत्वारो महर्त्विजः। अथवा चत्वारः समुद्राः। भुवनानि निर्णिजे चतुर्दश भुवनानि सप्त भूरादयो लोकाः सप्त पातालानि तान्यपि चारूणि चक्रे कृतवान्। केन प्रकारेण नयतः ऋतैः रत्नैः यज्ञैः सत्यैर्वा अवर्द्धत। अथवा तत् तस्मै सप्त धेनवः सप्त रश्मयः। दुदुह्रिरे। अथवा सप्ताश्वाः। अथवा सप्त पावकजिह्वाः। सप्त मातरो वा सप्त भूरादयो लोकाः। सप्त पातालानि सप्त सोमसंस्थाः सप्त समुद्राः सप्त द्वीपानि सप्त स्वराः। एता दुदुह्रिरे सप्त। आशिरम् उदकं परमे व्योमनि। चत्वारि अन्याः भुवनानि पृथिव्यादीनि चारूणि चक्रे। यत्, ऋतैः यज्ञैः अवर्द्धतेत्यथवा त्रिः अस्मै सप्त धेनवः सप्त प्राणाः शीर्षण्या इति त्रिः उत्पत्ति-स्थिति-प्रलयेषु स सत्याम् अवितथाम् आशिरं ज्ञानं चत्वारि भुवनानि जाग्रत्-स्वप्न-सुषुप्ति-तुरीयासु अद्वैतावस्थे नित्याम् नैर्जनैः अवर्द्धत विज्ञानाय"—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १　　२ र　　४ २ ७
( अपामीवम् ॥ ) इन्द्रा । यसोमसुषुता३ःपा३रिस्र

५　२ १　२र र　४ ३र २ ३　२र १
व । अपा । मीवाभवतुरा३चा३सासह । माताइ ।

२　४ २र ३ ५　२ १　२
रसस्यमत्सता३दा३यावि नः । द्रवाइ । णस्वन्तइह्स ।

३ २　४
तुवा३इन्दा५वा६५६ः ॥ २५ ॥

२ १ र ४ ५ ४५र　४
( वायोरभिद्‌ः ॥ ) इन्द्रायसोमसुषुतःपर्यौं ॥ चोइस्रा

५　१र र र　२ २ २　१र र
वा । अपामोवाभवतुरचसा१सा२हा । मातेरसस्यमत्म

२ २ २　३　५　२　५　१ २ ३ २
तदया१वी३नो । द्रा२३४वा । णा२३४स्वा । ताइहसा

१　२ ४
३ । हा२३ । तुवा३इन्दा५वा६५६ः ॥ २६ ॥ ६५

वेनोभार्गवऋषिः । हे "सोम!" त्वं "सु षुतः" सन् "इन्द्राय" तदर्थं "परिस्रव" परितो गच्छ रसं मुञ्च । "अमीवा" रोगः "रचसा सह" "मा ते रसस्य मत्सत द्वयाविनो द्रविणस्वन्त इह" "अप भवतु" अपगतो वियुक्तो भवतु "ते" तव "रसस्य" स्वांशं रसं पीत्वा "मा मत्सत" मा मद्यन्तु । कः ? "द्वयाविनः" द्वयं सत्यानृतं तेन युक्ताः पापिन इत्यर्थः । किञ्च "इन्दवः" ते रसाः



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१ २ ३ १ २ ३ २उ ३ २३
असाविसोमो अरुषोवृषाहरी

१ २३ ३२ ३ १र २र
राजेवदस्मो अभिगा अचिक्रदत्।

३ २उ ३१२ ३१२ ३१र
पुनानोवारमत्येष्यव्ययꣳश्येनो

२र ३ १ २ ३ १ २
नयोनिघृतवन्तमासदत्॥ ९॥ ९६ *

२र १ २र १
(यामानि त्रीणि॥) असाविसोँ। मोअरुषोँ२३४।

५र ४ २र र १ २र १ ५ ४
वृषाहराइः। राजेवदा। स्मोअभिगा२३४ः। अचिक्र

२ र १र २र १ ५ ४
दात्। पुनानोवा। रामतिया२३४इ। षिअव्ययाम्।

२र र १ २ १ ४ ४
श्येनोनया। निघृतवा२३। तमा५सदात्। हा५इ।

डा॥ २७॥

"दूह" अस्मिन्यज्ञे "द्रविणस्वन्तः" अस्माकं धनवन्त "सन्तु" भवन्तु †॥ ८॥ ९५

---

* उ० ५,२,१३,१ = ऋ० ७,३,७,१ = ऊहे ५,२,८—८,१,२—१७,२,४—२३,२, १७—२३,२,२० = ऊह्ये १,२,८।

† 'रसवन्तो भवन्तु देवानां न तु राक्षसादीनाम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



आसावीर२३४सो । मो अरू२३४षाः । वार्षाहरायेे
३ः । राजेवा२३४दा । स्मो अभीर२३४गाः । आचिक्रदा
२३त् । पूनानोर२३४वा । रामातीर२३४ये । षीअव्यया
२३म् । श्येनोनार२३४यो । निह्वार्त्ता२३४वा । तमा३ ।
सा२दा२३४औ होवा । दे३ । दिवी२३४५ ॥ २८ ॥

असाविसोमोअरुषोवृषाह । रा इः । राजेवदस्मो
अभिगाअचिक्र । दात् । पुनानोवारमत्येष्यव्य । याम् ।
श्येनोनयोनिह्वृत । वा । तमा३ । सा२दा३३४औ
होवा । ए३ । दिवी२३४५ ॥ २९ ॥ ९६

भरद्वाजो वसु ऋषिः । "सोमः" "असावि" अभिषुतोऽभूत् ।
कीदृशः सोमः? "अरुषः" अरोचमानः* "वृषा" वर्षकः "हरिः"

* 'अरुषः अहिंसितः'—इति वि० । "अरुषम्"—इति रूपनामसु पञ्चदशं नैघण्टुकम् ३,७।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

२ २उ ३ १२ ३२ ३१
प्रदेवमच्छामधुमन्तइन्दवो

२ २ २३ २उ ३१२
सिष्यदन्तगावआनधेनवः।

३ १२ २१२ ३१२
बर्हिषदोवचनवन्तऊधभिः

२१२ ३१२ ३१२
परिस्रुतमुस्रियानिर्णिजन्धिरे॥ १०॥ ९७*

हरितवर्णः†। स च "राजेव" "दस्मः" दर्शनीयः सन् "गाः" उदकानि‡ "अभि" लक्ष्य "अचिक्रदत्" शब्दङ्करोति स्व-रस-निर्गम-समये। पश्चात् "पुनानः" पूयमानः "अव्यम्" अविभवं "वारं" वालं पवित्रम् "अत्येषि"¶ हे सोम! अतिक्रम्य गच्छसि। ततः "श्येनो न" श्येन इव "योनिं" स्वीयं स्थानं "घृतवन्तम्" उदकवन्तम्§ "आसदत्" वसतीवरीष्वासीदतीत्यर्थः॥॥

"अत्येषि"-"पर्येति"—इति, "आसदत्"-"आसदम्"—इति च पाठः॥ ९॥ ९६

---

* ऋ० ७,२,१९,१।

† 'हरिः हरणशीलः'—इति वि०।

‡ इह मानं स्मयम्।

¶ 'अत्येषि अत्येति व्यत्ययेन'—इति वि०।

§ "घृतम्"—इति उदकनामसु दशमं नैघण्टुकम् १।१२।

॥ 'विनियोगोऽस्य नवमेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ २ १ २र १ २
(महतान्धेनु॥) प्रादे। वमच्छामधुम। तआ२-

१ २ ३ ५ २ १र २र
इन्दवाः। आसिष्या२३४दा। तगावआ। नधा२इन

१ २ ३ ५ २ १र ऽ र १
वाः। बर्हिंषा२३४दाः। वचनावा२। तऊ२धभाइः।

२ ३ ५ २ १ र २
पारिस्रू२३४ताम्। उस्रियानिर्णिजन्धाइरायेः। धाइ

२ ५र र २ १ १ १ १ १
रा३४औहोवा। धाइरा२३५इ॥ ३०॥ ९७

वत्स ऋषिः*। "मधुमन्तः" मदकर-रस युक्ताः "इन्दवः" सोमाः "देवं" द्योतमानं सोमात्मकम् इन्द्रम् "अच्छ" प्रति "प्रासिष्यदन्त" परिस्यन्दन्ते ग्रहादिषु† प्रचरन्ति। [स्यन्दतेर्ण्यन्तस्य लुङि चङि रूपम्] तत्र दृष्टान्तः। "गाव आ न धेनवः" पयस्विन्यः प्रीणयित्र्यः गावो यथा वत्सं प्रति पयांसि प्रस्रवन्ति

---

* "वत्सप्रीः भालन्दनः"—इति ऋषि-नि०।

† यज्ञीयदेवानुद्दिश्यांशभ्योऽपृहीतसोमा तदाधारत्वात्तदीयचुद्रघटादयोऽपि ग्रहा उच्यन्ते। ते च प्रातःसवने, पञ्चविंशति-सङ्ख्याका भवन्ति। तथाहि—१उपांशुः—२अन्तर्यामः—३ऐन्द्रवायवः—४मैत्रावरुणः—५आश्विनः—६शुक्रः—७मन्थी—८आग्रयणः—९उक्थः—१०ध्रुवः—११-२३ऋतुग्रहाश्च त्रयोदश—२४ऐन्द्राग्नः—२५वैश्वदेवश्चेति। माध्यन्दिनसवने चत्वारि—तत्र, मारुत्वतीयाख्यौ माहेन्द्रश्च चतुर्थः। तृतीयसवने तु पञ्च, तद्यथा—१आदित्यः—२सावित्रः—३महावैश्वदेवः—४पात्नीवतः—५हारियोजनश्चेति।—इत्येवं सङ्कलनया ग्रहाश्चतुस्त्रिंशदिति।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकादशी॥

१ २ ३क२र ३ १ २ ३
अञ्जतेव्यञ्जतेसमञ्जते

१ २ ३ २ ३क २र
क्रतुꣳरिहन्तिमध्वाभ्यञ्जते।

१ २ ३ २ ३ १ २ ३ १ २
सिन्धोरुच्छ्वासेपतयन्तमुक्षणꣳ

३ २ ३ २ ३ १ २
हिरण्यपावाःपशुमप्सुगृभ्णते॥ ११॥ ९८ *

२ १ २ १ २
(गानानि त्रीणि॥) अञ्जताइ। वियञ्जताइ। सम

१ १ २र १ २ १
ञ्जाता२इ। क्रतुꣳरिहा। तीमधुवा। भियञ्जाता

तद्वत्। किञ्च। "बर्हिषदः" बर्हिषि सीदत। "वचनवन्तः" हम्भा-रवादि-शब्दवन्तः [उस्रियेति गोनाम †] तादृश्यो गावः ऊधभिः पयआधारकैः स्वैः स्वैरूधोभिः तेभ्यः "परिस्रुत" परितः स्रवणशीलं "निर्णिजं" शुद्धं पयोभूतं सोमरसं "धिरे" दधिरे इन्द्रार्थं धारयन्ति॥ १०॥ ९७

---

* उ० ७,२,११,१ = ऋ० ७,३,२०,३ = ऊहे १२,१,१०।

† "उस्रिया"—इति गोनामसु तृतीयं नैघण्टुकम् २,११।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २र १ २ १
२इ । सिन्धोरुच्छ्वा । सेपतया । तमुक्षाणा२म् । हिर

१ २र १ २र १ २ १ १ १ १
ण्यपा । वाःपभुमा । एसुगृभ्णता२१उवा२३४५ ॥ ३१ ॥

३ २ १ २ १ २ ४ २ ३ ५
अञ्जा३हो । ते३होइ । वियञ्जते३सा३मञ्जताइ ।

३२ १ १ २ १ २ ४ २ ३ ५
क्रतू३ए्होइ । रिहा३हो । तिमधुवा३भी३अञ्जताइ

३ २ १ ३ २ १ २र ४ ३ २ ५
सिन्धोर्३होइ । उच्छ्वा३हो । सेपतया३न्ता३मुक्षणम् ।

३ २ १ १ २ १ २र ३ २ ४
हिरा३हो । ण्यपा३हो । वाःपभुमँ । एसुगा३भ्ण्णा५

ता६५६इ ॥ ३२ ॥

४ ५ १ ३ ४ ५ र ३ ४ ५ र १ ३ २
हावाञ्जा । ता२३४इ । वियञ्जतेसमञ्जते । एहिया ।

१ ३ २ ५ १ ३ ४ र १
एहिया३४ । हाउक्रातूम् । रा२३४इ । हन्तिमधुवाभि

४ ५र १ ३ २ १ २ २ ५ १
यञ्जते । एहिया । एहिया३४ । हाउसाइन्धोः । ऊ२

३र र ४ ३ ४ ५ १ ३ २ १ ३ २
३४त् । स्वासेपतयन्तमुक्षणम् । एहिया । एहिया३४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी।

३ १ २ ३ १ २
पवित्रन्ते विततम्ब्रह्मणस्पते

३ १र २र ३ १ २ ३ १ २
प्रभुर्गात्राणिपर्य्येषिविश्वतः।

५ १ र ३र ४ ३ ४ ३ ४ ५ र १ ३
हाउहाइरा। एया२३४। पावाःपधुमप्सुगृभ्णते। एहि

२ १ ३ २ ५ ४
या। एहिया३४। हाउ। वा५इ। डा॥ २३॥ ९८

अत्रिऋषिः*। सोमम् ऋत्विजः "अञ्जते" गोभिः तथा "व्यञ्जते" विविध मञ्जति "समञ्जते" सम्यगञ्जति। स्तुत्यर्थत्वादपुनरुक्तिः † तथा "क्रतु" बलकर्त्तारं "रिहन्ति" लिहन्ति आस्वादयन्ति देवाः तथा पुनः "मध्वा" मधुना गव्येनाभ्यञ्जते। तमेव सोमं "सिन्धोः" उदकस्य रसस्याधारभूते "उच्छ्वासे" उच्छ्रिते देशे "पतयन्तं" गच्छन्तं [पतॢ गतावित्यस्मात् स्वार्थिके णिचि वृद्ध्यभावश्छान्दसः] "उत्तणं" सेक्तारम् "हिरण्यपावाः" हिरण्येन पुनन्तः "पशु" द्रष्टारं ‡ [पशुः पश्यतेरिति निरुक्तम् ] "अप्सु" वसतीवरीषु "गृभ्णते" गृह्णन्ति ¶॥

"मध्वा"--"मधुना"—इति, "अप्सु"--"आप्सु"—इति च पाठः॥ ११॥ ९८

---

* "भौमः"—इति ऋषि-नै०।

‡ पुनरुक्तिदोषो नेति भावः।

† 'पशुं सोमम्'—इति वि०।

¶ 'विनियोग उपद्रवे प्रवर्ग्ये च'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ ३ २उ ३ १ २
अतप्ततनूर्न्नु तदामोअश्नुते

३ २ ३ १र २ ३ १र २र
शृटतासइद्वहन्तःसन्तदाशत ॥ १२ ॥ ९९ *

॥ द्वितीय-दशति ॥

२ १ २र १ २ १ २ १
( अर्कपुष्पम् ॥ ) पवित्रन्ते विततम्ब्रह्मणस्पते३। ऊवे

१ २ १ २ १ र २र १ ०र
२३। २। होवा३हा३। हाइ। प्रभुर्गात्राणिपरियेषि

१ १ १ २ २ २ १
विश्वता२३ः। ऊवे२३। २। होवा३हा३। हाइ। अत

२ र १ ५र १र ३ १ १ २ २ २
प्ततनूर्नतदा२मोअश्नुते३। ऊवे२३। २। होवा३हा३हा

१र २ १ २ १ ५र १ २
इ। शृटतासइद्वहन्तःसन्तदा२शत। ऊवे२३। २। हो

२ २ २ ५र र २ १र र र ५र १र
वा३हा३। हा३४। औहोवा। अर्कोदेवाना२म्परमेवि

५र २ १ १ १ १
यो२मा२३४५न् ॥ ३४ ॥

२ १ २र १ २ १ २
( अर्कपुष्पोत्तरम् ॥ ) पवित्रन्तेविततम्ब्रह्मणस्पते३।

---

० उ० २,२,१६,१ = ऋ० ७,३,८,१ = आरण्ये १,१,११—१,१,१२—ऊहे ७,२,१—७,२,२—१५,१,१ = ऊह्ये १,१,८—४,१,३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २र १ र २र १ २र १
ऊवाइ। औहोवा२। प्रभुर्गात्राणिपर्येषिविश्वता२३:।
१ २र १ १ २ र१ ऽर १र २ १
ऊवाइ। औहोवा२। अतप्ततनूर्नतदा२मोअश्नुते३। ऊ
२र १ १र२१ २ १ ऽर
वाइ। औहोवा२। शृतासइद्वहन्त:सन्तदा२शत।
१ २र १ ३ ५र र २ १ २
ऊवाइ। औ। होऽ२। वा२३४। औहोवा। अर्कस्य
र १र २ १र ऽर ३ १ १ १ १
देवा:परमेवियो२मा२३४५न्॥ ३५॥ ९९

॥ इति ग्रामे गेये षोड़श: प्रपाठक:॥

पवित्रऋषि:*। हे "ब्रह्मणस्पते" मन्त्रस्य स्वामिन्! सोम! "ते" "पवित्रं" शोभनं मङ्गं "विततं" सर्वत्र विस्तृतम्। स "प्रभु:" प्रभविता त्वं "गात्राणि" पातुरङ्गानि "पर्येषि" परिगच्छसि। "विश्वत:" सर्वत: तव तत्पवित्रम् "अतप्ततनू:" पयोव्रतादिना असन्तप्तगात्र: † "आम:" अपरिपक्व: "नाश्नुते" न व्याप्नोति। "शृतास: ‡ इत्" शृताएव परिपक्वाएव "वहन्त:" धारां निर्वहन्त: तत् पवित्रं "समासत" व्याप्नुवन्ति ¶॥

---

* "आङ्गिरस:"—इति ऋषि-नै०।

† 'अतप्तशरीर: सूक्ष्मैरपि छिद्रै: दशापवित्रस्य'—इत्यादि वि०।

‡ 'शृतास: निष्पन्न-सोमा:'—इति वि०।

¶ व्याप्नुवन्ति द्रोणकलशम्'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सन्तदाशत"-"ततसमासत"—इति पाठौ* ॥ ६ ॥ ९९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य नवमः खण्डः ॥

॥ इति जागतम् ॥

—:○:—

इन्द्रमच्छेतिखण्डेऽस्मिन् ऋचो द्वादश संस्थिताः ।
सकला उष्णिहस्तत्र वक्ष्यन्ते ऋषयः पृथक् ॥

तत्र दशमे खण्डे—

सैषा प्रथमा ।

२ ३१ २ ३२ ३१र २र　　३ १ २
इन्द्रमच्छसुताइमेवृषणंयन्तुहरयः ।
३ २　३ २ ३ १ २　२ १ २
श्रुष्टे†जातासइन्दवःस्वर्विदः ॥ १ ॥ १०० ‡

५　　　२ १ २　　२र　　५
(पदे द्वे ॥) इन्द्रमच्छा । सुताइमा । औहो२३४वा ।

---

* तन्त्रमुद्राधारिणां वैष्णवसम्प्रदाय-विशेषाणां नयेऽयमेव मन्त्रः शरीरे तप्त-चक्रा-ङ्कनस्य ; तथाच "अतप्ततनूः" तप्तचक्रादिभिः न तप्ता तनूः यस्य स पुरुषः "आमः" अपरिपक्वः असंस्कृतः अतएव "तत्" प्रसिद्धं कैवल्यं "न अश्नुते" इत्यर्थः । वस्तुतोऽस्य विनियोगो ज्योतिष्टोम-तृतीयेऽहनि ।

† "श्रुष्टी"—ऋ० ।

‡ उ० १,१,१७,१ = ऋ० ७,५,९,१ = ऊहे १,१,१०—२,१,७—६,१,१७—६,२,८—९,१,२०—१०,१,१६—१०,२,१—१२,१,१०—१३,१,१—१२,१,१०—१४,१,११—१४,१,१७ ।

२६ ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ ७ २ ३र ५ २ १ १र १
वृषण्य। तूहरया। औहो२३४वा। ष्टुष्टाइजाता।

२ ३ २ १ २ १ २ १
सइन्दवाः। सुववो२३इदा३४३ः। ओ२३४५इ। डा ॥१॥

५ २ १ २ १ २ २ १
इन्द्रमच्छा। सुताइमा३इ। ताइ३माइ। वृ

२ १ ७ १ २ २ र र ५र १
षण्य। तूहरया२ः। हारा३याः। ऋष्टे जाता३सा

७ १ २ २ १ २ ५र र
इन्दवा२ः। आइन्दा३वा३ः। सुवरा३४। औहोवा।

२र ११११
विदोवी३दा२३४५ः ॥ २ ॥

४ ५ ४ २ १ २
(अनुपदे द्वे ॥) इन्द्रम्। इन्द्राम्। अच्छा३हता

१ १ २ १ ७ १
१इमे२। आइमे२। वृषण्य। तूहरया२ः। राया

र र ५र ७ १ १ २
२ः। ऋष्टेजाता३साइन्दवा१ः। दावा२३ः। सुवरा

५र र २ १ १११
३४। औहोवा। विदो३विदा२३४५ः ॥ ३ ॥

३ ४ ३ ४ ३र ४ ३र ४ ५ २ २ १ ३
इन्द्रमच्छसुताइमेवृषण्यन्तुहा। हो३४३। रयश्रा।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

१२　　३१ २ ३१ २　　२१ २
प्रधन्वासोमजागृविरिन्द्रायेन्दोपरिस्रव ।

१२३　२ ३१ १　३१ २
द्युमन्तꣳशुष्ममाभरस्वर्विदम् ॥ २ ॥ १०१*

१ २　　१ २　　३ ४ ५　　२
आष्टाउवा । जाताउवा३४ । सइन्दवःसुवा । हो ।

१ २
विदश्रो२३४५इ । डा ॥ ४ ॥

२ १ २　४ ५　१ १　५
( पौष्कलम् ॥ इन्द्रमा३च्छसु । ताँई२३४माइ ।

२ १ २ १　२ ३　५　२ १ २　७
वृषाणया । तूहाँरा२३४याः । अुष्टाइजाता । सइंर

३　　२　१ ३ १ १ १ १
न्दा२३४५वाई५६ । सुवर्विदा२३४५ः ॥ ५ ॥ १००

अग्निश्चाक्षुषऋषिः । "आष्टे" आष्टी क्षिप्रं "जातासः" जाताः "इन्दवः" पात्रेषु चरन्तः "स्वर्विदः" सर्वज्ञाः † "हरयः" हरितवर्णाः "सुताः" अभिषुताः "इमे" सोमाः "वृषणं" कामानां सेक्तार मिन्द्रम् "अच्छ यन्तु" अभि गच्छन्तु ॥ १ ॥ १००

---

* ऋ० ७,५,९,४ = जधे ११,२,१ ।

† 'स्वर्विदः स्वर्गं लोकं विदन्ति'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १र र १
( ऐषिराणि पञ्च ॥ ) प्रधन्वासौहोइ। औ३होर२३४
५ २ १र र २ र १र र १ ५
वा। मजागृविः। इन्द्रायेन्दौहोइ। औ३होर२३४वा।
१ २ १ र २ ५ २ १र
परिस्रव। द्युमन्तᳬशौहोइ। औ३होर२३४वा। अमा
२ १र २ २
भर। सुवर्विदौहोइ। औ३होर२३४५वा६५६। ऊ२३
५
४पा॥ ६॥

२ १र र २ १ २ र १ र १र
प्रधन्वासौहो। वा३हो। मजागृवी२ः। इन्द्राये
र २ १ २ १ १ र
न्दौहो। वा३होइ। परिस्रावा२। द्युमन्तᳬशौहो।
२ १ २ र १ १र २ १
वा३हो। अमाभारा२। सुवर्विदौहो। वा३हो२।
२ ५र र २ ५
वा२३४औहोवा। ऊ२३४पा॥ ७॥

२र १र र १र २ र १
औहौहोइ। प्रधन्वासो२। औहौहो। मजागृ
र १र २ र १ र १र
वी२ः। औहौहोइ। इन्द्रायाइन्दा२। औहौहोइ।
२ १ र १र २ १ र १र
परिस्रावा२। औहौहोइ। द्युमन्ताᳬशू२। औहौहो।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १　　र १र　　२　２　३
ऽममाभारा २। औदौहोइ। सुवः। वा२इ। दा२३४।
५र र　　५
औहोवा। ऊ२३४पा ॥ ८ ॥

१　　१　　१　　१　　२ १
ऊवा २इ। ऊवा २इ। हुवा२३होयि। प्रधन्वासो
र १　　र १　　१
२। मजागृवी २ः। इन्द्रायाइन्दा २। परिस्रावा २।
१　　र १　　१
द्युमन्ताऽ५ शु २। ऽममाभारा २। सुववाइदा २म्।
१　　१　　१　　१　　२　　५र र
हुवा २इ। हुवा २इ। हुवा२३होर। वा२३४औहोवा।
२　५
ऊ२३४पा ॥ ९ ॥

११　　४र　५र　　१　　२　　५　१
प्रधन्वा२३सोमजागृवीः। इन्द्रा२या२३४इन्दो। ओइ।
२　१　२　२　　१　　२　　२　　१　　०
पा३रा३स्रा३वा। द्युमा२न्ता२३४ऽ५ शुः। ओ। ऽममा
२　१　　१११
भा२३४५रा६५६। सुववि२दा२३४५म् ॥ १० ॥ १०१

चक्षुर्मानवऋषिः। हे "सोम!" "जागृविः" जागरण-
शीलस्त्वं "प्रधन्व" प्रचर। हे "इन्दो" सोम! "इन्द्राय" "परि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

१ २ ३१ २ २ २ ३१ २ २
सखाय आ निषीदत पुनानाय प्रगायत।

३ २ ३ १र २र ३ २
शिशुं न यज्ञैः परिभूषत श्रिये ॥ २ ॥ १०२*

२ ३र १ १र
(श्रौक्तानि पञ्च॥) सखा३या आ२। निषीदता।

र २ १र २ र १
पुनाना२३या। प्रगायता। शिशुन्ना२३या। ज्ञैःपरा

१ २ १
इभू२। षताश्रा२३या३४३इ। श्रो२३४५इ। डा॥ ११॥

४ ५ ४ ५ २ ३ ५ १ ३ ५
साखायाश्रा। निषीदा२३४ता। पुना२ना२३४या।

१ ३ ५र र ३ ५ २ १ २ १ २र ३
प्रा२गा२३४श्रौहोवा। या२३४ता। शिशून्नया। ज्ञैःप

२ १ १ ३ ५र र २
रिभू२३। षा२ता२३४श्रौहोवा। श्रिये१॥ १२॥

स्रव" परितः पात्रेषु चर। किञ्च "द्युमन्तं" दीप्ति-युक्तम्†। "स्वर्विदं" सर्वस्य लम्भकं "शुष्म" शत्रूणां शोषकं बलम्‡ "आभर" आहर॥ २॥ १०१

---

* उ० ४,२,९,१ = ऋ०७,५,७,१ = ऊहे २,२ २—४,१,२—७,१,१८—७,१,१९—९,१,१८—१४,२,२५।

† "द्युमत्"—इति दीप्ति-कर्मसु अन्तिमं नैघण्टुकम् १,१६।

‡ "शुष्मम्"—इति बलनामसु एकादशं नैघण्टुकम् २,९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५र ४र ५र ५ २ र १र र
सखायआनि। षीदाईता। पुनानायप्रगायाता।

र १र २ १ २
शिशुन्नयज्ञैःपरा२इ। भूषा२३ता३। आ२३या३४३इ।

१
ओ२३४५इ। डा॥ १३॥

५र र ४ ५र ४र ५र ५ २ र १र
ओहाइ। सखायआनि। षीदाईता। पुनानौहाइ।

२र १र ५ ४ ५ ४ २र १ र २र १ र २
पुनानौहोयेि३। यापायापा। गायतौहोइ। गायतौहोये२।

४ ४ ५ २ १ र २ १ र २ ४ ५
शाइशूꣳशाइशूम्। नयज्ञौहोइ। नयज्ञौहोये३। पारी।

३ २ ५र र २ २र ३ २
पारा३४औहोवा। ए३। भूषतंश्रिये१॥ १४॥

५ र ३ २ २ ५ २ १ ५
सखा। यआओ२३४वा। निषाइ। द्रूताओ२३४वा।

२ र १र ५र १ २ ३ ५ १ र
पुनानायप्रगा२यत। शाइशाओ२२४वा। नयज्ञैःपरि

२ १ २ ३ ५ २
भूर। षाताओ२३४वा। श्रिये१॥ १५॥ १०८

पर्वतनारदावृषी*। हे "सखायः" सखिभूताः! "स्तोतारः"

---

* पर्वतो देदः काश्यपिः, नारदस्तु शैखण्डी चाप्सरसः इति ऋषि-निर्णय-भाष्यः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

१ २ ३ १ २ ३ २३ १ २
तंवःसखायोमदायपुनानमभिगायत ।

३ २ ३१ २ ३ १ २
शिशुन्नहव्यैःस्वदयन्तगूर्त्तिभिः ॥ ४ ॥ १०३ *

२ ५ २
( कार्णश्रवसानि त्रीणि ॥ ) ता२३४०वः । सा२३४

५ २र १ २ १ र २ १र २
खा । योमदा२३या । पनानम । भिगाया२३ता ।

१ २ १ २ २र २ १ २ ३र २ १
शाइशुन्नह । व्यःस्वदया२३ । तङ्गूर्त्तिभा३४३इ । ओ२

३४५इ । उा ॥ १६ ॥

ऋत्विजः "आ नि षीदत" स्तोतु मुपविशत । अथ "पुनानाय" पूयमानाय सोमाय "प्रगायत" प्रकर्षेण गायत तमभिष्टुत ततः अभिषुतं सोमं "यज्ञैः" यजनीयैः हविर्भिः मिश्रितैः "श्रिये" शोभार्थं "परिभूषत" परितोऽलङ्कुरुत। तत्र दृष्टान्तः—"शिशुं न" यथा शिशुं बालं पुत्रं पितरः † आभरणैरलङ्कुर्वन्ति तद्वत् ॥ ३ ॥ १०२

---

* उ० ४,१,१९,१ = ऋ० ५,८,१ = ऊहे ३,२,१२—५,१,१०— ८,१,११—९,२, २०—१८,१,१ ।

† 'मातरः'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२　३ ४ ५　　　२ ९ १　　२ २　५　९ २
ओइतंवःसखा। योम। दायाओर२३४वा। पुना
१　　５　　२　२　५　　३ २ ३　　५
नमभिगा३। औ। ओ२३४वा। यतौओ२३४वा।
१ २ १ २　१ ९ २　２　३　५　३ २
शिशुन्नह। व्यैःस्वदया३। औ। ओ२३४वा। तगौ
३　५　९　५
ओ२३४वा। तौर३४भौः॥ १७॥

५　९ ९　　५　२ ९ १　५९　　　१
तंवःसखायोमदा६या। पुनानमभिगा२यत। शा
७　२　　४९ ५　　२ २　१　४　२
इशुन्नहा३। व्यैःस्व। दया३। ता२३गू३। ता३४५इ
५
भो६हाइ॥ १८॥ १०३

पर्वतनारदाव्टषी। हे "सखायः!" ऋत्विजः "वः" यूयं "मदाय" देवानां मदार्थं "पुनानं" पूयमानं "तं" सोमम् "अभिगायत" अभिष्टुत। तमिमं सोमं "शिशुं न" शिशुमिवालङ्कारैः चीरादिभिश्चालङ्कुर्वन्ति तद्वत्। "हव्यैः" हविर्भिर्मिश्रयणैः "गूर्त्तिभिः" स्तुतिभिश्च * "स्वन्दयन्त" स्वादूकुरुत।
"हव्यैः"-"यज्ञैः"—इति पाठौ॥ ४॥ १०३

* गूर्त्तिभिरिति अर्चति-कर्मणो (नै०३,१४) गूर्धयते रूपमिदम् भाष्यकारस्य। 'गूर्त्तिभिः उद्यमाने रत्नैर्धनैर्वा'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

३ १र २र ३ १ २ ३ २ ३ २ ३ १ २
प्राणाशिशुर्म्महीनां हिन्वन्, तस्यदीधितिम्।

३ १ २ ३ १ २ ३ १ २ ३ २
विश्वापरिप्रियाभुवदधद्विता ॥ ५॥ १०४*

४ ५ ३ ५ २ २
(वाचः सामनी द्वे ॥) प्राणा। शा२३४इशू:। मह्वा

५ १ ३ ५ २ १ २ २
२३४इनाम्। हिन्वा२ना२३४त्तां। स्या२दा२धी२तीम्।

१ २र १ २३र २ १ २ ३ २ १
वाइश्वापरि। प्रियाभुवा२३त्। अधद्विता३४२। औ२३

४५इ। डा॥ १९॥

४ ५ ४ ५ १ १ १ २
प्राणाप्राणा। शाइशु२:शाइशू२:। मह्वा२१उवाये३।

१ १ १ १ २ १ २ २
ना२३४५म्। हिन्वन्नात्तस्यदा२१उवाये३। धी२३४

५ १ र २ ५ २
मीम्। विश्वापारिप्रिया२१उवा२३। भू२३४वात्। अधी

१ २ १ ३ ५र र
२। द्वौ२। ऊवाये३। द्वा२इता२३४औहोवा।

२ ५
ऊ३२३४पा॥ २०॥

* उ० ३,२,१८,१ = ऋ० ७,५,४,१=ऊहे ३,१,१२—४,१,२— ७,१,१०—७,२,२१ —९,१,१४—९,२,१—१२,१,५—१५,२,८—१६,१,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५र ४ २ १ र

( इन्द्रसाम्नी द्वे ॥ ) प्राणाम्रिशूः। महा२इनाम्।

र ५ १ र २ १ २

औहोइवा। हिन्वन्नतस्यदीधितिम्। वाइस्वाउवा।

१ २ १ ३ २ २ २

पाराउवा। प्रिया२भुवत्। अधाउवा३। ए३। हिता१

॥ २१ ॥

५र र २ ४ ५ १ २ १

प्राणा। होइइ। इयाहाइ। शाइशुर्महाइ। ना

२र३ २र २ ५ २ १ र

२३म्। आउहाउ। होइवा। हिन्वन्नृतस्यदीधिता-

२र ३ २र१ ५ २ १ र २र २र३ २

इम्। आउहाउ। होइवा। विश्वापा। र्याउहाउ।

५ २ १ १ ३ ५र र १ २ ३

होइवा। प्रिया२३। भूर्वा२३४औहोवा। अर्धहि

२

ता१ ॥ २२ ॥

५र र ३ २ २ ५

( मरुतां प्रेङ्खम्॥ ) प्राणा। हहोइ। शा२३४इशूः।

३ २ २ १र १ २ १ २ ५

हहोइइ। महीना२३ । होवा३होये३४। हिन्वन्।

३ २ ३ ५ ३ २ १ १र

हहोइ। आ२३४र्ता। हहो३। स्यदीधिता२३इम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ ५ र ३ २ २ ५ २ २
होवा३होये३४। विश्वा। हहोइ। पा२३४री। हहो

२ १ २ १ ४
३इ। प्रियाभूवा२३त्। होवा३होये३। आ२३धा३।

२ ५
ह्वा३४५इतोईह्वाइ ॥ २३ ॥ १०४

त्रितऋषिः*। "प्राणा" यज्ञं कुर्वाणा इत्यर्थः †। "महीनां" महतीनां मंहनीयानां वा अपां ‡ "शिशुः" स्थानीयः सोमः ¶ "ऋतस्य" यज्ञस्य "दीधितिं" दीप्तिमन्तं प्रकाशकं वा स्वीयं रसम् "हिन्वन्" प्रेरयन् §। "विश्वा" सर्वाणि "प्रिया" प्रियाणि हवींषि "परि भुवत्" परिभवति व्याप्नोति। अपि च "द्विता" द्विधा भवति ‖। दिवि पृथिव्यां च वर्त्तत इत्यर्थः। +

"प्राणा"-"क्राणा"—इति पाठः ॥ ५ ॥ १०४

---

* "त्रितः"—इति ऋषि-नै०।

† भाष्यकारस्तु क्राणाइति ऋग्वेदीयपाठमनुसृत्यैवं व्याख्यातवान्; तथाच यास्कः—"गोभिः क्राणा अनूषत—गोभिः कुर्वाणा अस्तोषत"—इति ४,१९। सामवेदीयपाठस्तु प्राणाइति अतएव 'प्राणभूताः'—इति विवरण-व्याख्यानम्।

‡ 'गवाम्'—इति वि०।

¶ 'शिशुः शंसनीयः—इति वि०।

§ 'व्याप्नुवन्'—इति वि०।

‖ 'द्वैसवर्णा सोमदेवता एव'—इति वि०।

+ 'विनियोगोऽस्य षष्ठेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २　३ १ २　३ १ ९　१ २　३ १ २
पवस्वदेववीतयइन्दोधाराभिरोजसा।

२ ३ १ २
आकलशम्मधुमांत्सोमनःसदः॥ ६ ॥ १०५ *

१　३ २ ३　५
(प्राजापत्ये द्वे ॥) पवस्वदा२इ। ववीता२३४याइ।

१　२ २　३ २ ३　५　१२
आइन्दोधारा२। भिरोजा२३४सा। आकालशाम्।

२ ३　५　१ २२१　४　४
माधूमा२३४०त्सो। मनएमाना२३ः। सदापुए। होपु
इ। डा॥ २४॥

५　२ १२　२　२　२
पवस्वदा। ववीतयाइ। इन्दोधा२रा२३४। भिरो

५ ५　१ २ २　१　१ २ २
जसा६ए। आका३ह्ला। लाशा२म्। माध३हाइ।

१　२ १　५　४　५
मांत्सो२३। मनो२३४वा। सापुदोपुहाइ॥ २५॥ १०५

मदुच्छन्दाः ऋषिः †। हे "इन्दो" सोम ! "देववीतये" देवानां भक्ष-

* उ० ५,२,१७,१ = ऋ० ७,५,१०,५ = ऊहे ५,२,१७—११,२,१९—९,३,४—२४,१,१३।

† "आप्लवः"—इति ऋषि-नि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

१ २ ३ २३ ३ २र ३ २३ १ २

सोमः पुनानऊर्म्मिणाव्यं वारं विधावति ।

१ २ ३ १र २र ४ ३ १ २

अग्रे वाचः पवमानः कनिक्रदत् ॥ ७ ॥ १०६ *

५र २ र १ २

( सुज्ञाने द्वे ॥ ) सोमःपुना । नऊर्मिणा । अव्यं

१ र १ २ र १ १

वारा२म । विधावताइ । अग्रेवाचा२ः । पव । मा२

३ ५र र १ २ र १ २ १ १ १ १

२ना२३४औहोवा । कनिक्रदद्देऽपा२३४५ ॥ २६ ॥

५र २ र १ २ १ २ २

सोमःपुना । नऊर्मिणोवा३ । औ२ । वा२३४ । औ

र १ र २र ३ १ १ २ १

होवा । अव्यंवारंविधावति । अग्रे३ । हावा३ । हो

णाय "ओजसा" बलेन "धाराभिः" आत्मीयाभिः "पवस्व" क्षर। हे "सोम" "मधुमान्" मदकररसवांस्त्वं "नः" अस्मदीयं "कलशं" द्रोणाख्यम् "आसद" आसीद। [सदेर्लङि रूपम् † ॥ ६ ॥ १०५

---

* उ० ३,१,१८,१=ऋ० ७,५,१०,५=ऊहे २,२,१०—७,२,६—६,३,४—१५,२,११;

† 'विनियोगोऽस्य नवमेऽहनि'—इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३　५र र　२र१　२र　३ २
२। वा२३४। औहोवा। वाचःपवमानः। कना३।

१ २　१　३　५र र　३　५
होवा३। हो२। वा२३४। औहोवा। का२३४दात्॥२७॥

४र५　र ४　१　र
(द्यौते द्वे॥) सोमःपुनानऊ। मिणा। अव्यवार-

२ १र　२　१ र र　२१र　२ ४ ५
विधावा२३ती। अग्रे वाचाः। पवमानाः। का३निक्र।

३ १ १ १ १
दा२३४५त्॥२८॥

२र　र र　३　५र　२　र　र　३
सोमःपुनानऊर्मिणा२३४ऐही। अव्यंवारंविधावता

५र　२ र र　र ३　५र　४ ५　२
२३४ऐही। अग्रेवाचःपवमाना२३४ऐही। कानी। क्र

५　५　४
ददे३४। हियाइहा। होयूइ। डा॥२९॥

३र४ ५ र　२ १　३　५
(आतीषादीये द्वे॥) सोमःपुना। नऊ३र्मा२३४णा।

१　२र　१ २　१ ऽ　३ ५
अव्यंवारम्। विधावति। अग्रा३इ। वा२३४चाः।

१ ऽ　३　५　३ २　४
पवा३२। मा२३४नाः। कना३इक्रा५दा६५ईत्॥३०॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

१२३१ २र२३१ २ ३१२
प्रपुनानायवेधसेसोमायवचउच्यते।

३१र २र २१२३१२
भृतिन्नभरामतिभिर्जुजोषते ॥ ८ ॥ १०७ *

३र४५र २ ३ ४र ५ ५ १ र २
सोमःपुना। हो। नऊर्मिणा६ए। अव्यंवारविधा

र २ ३ ३ ११११ २१ २
१वा३ती। अग्रेवा२३४५। चा२३४५ः। पवमा२३ना३ः।

१ ३ ५र र २ ३११११
का२ना२३४औहोवा। क्रदद२३४५ ॥ ३१ ॥ १०६

अग्निर्ऋषिः †। "पुनानः" पूयमानः "सोमः" "ऊर्मिणा" स्वीयया धारया "अव्यम्" अविभवं "वारं" वालं पवित्रं "विधावति" विविधं गच्छति। कीदृशः? "पवमानः" पूतः "वाचः" स्तोत्रस्य "अग्रे" "कनिक्रदत्" पुनः पुनः शब्दं कुर्वन् विधावति ‡॥

"अव्यम्"—"अव्यः"—इति साम्न ऋचः पाठः ॥ ७ ॥ १०६

---

* ऋ० ७, ५, ६, १।

† "वाचुषः"—इति ऋषि-नै०।

‡ दाधर्त्ति दर्धतीत्यादिना ( पा० ७, ४, ६४ ) सिद्धम्।

¶ 'विनियोगेऽस्य चतुर्थ्यऽह्नि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १　　४र ५र
(सामसामानि चत्वारि ॥) प्रपुनार२३नायवेधसाइ।
१　　२ र　　७　　१
होइ। होइ। सोमायवचाउच्यातार२इ। भृतिन्नभरा
७　　१र　　२　　१
मतिभार२इः। जुजोषार२३ता३४३इ॥ ओ२३४५इ। डा
॥ ३२॥

४ र र　　र ४　　२र १ २ २
प्रपुनानौहोप्यवेधसाइ। सोमाऔ३हो३४। यव
५　　४　　२ १ २ २　　५ र ४　　२
चउच्यताइ। भृताऔ३हो३४। नभरामतिभाइः। जु
५
जा३१उवा२३। षार३४ते॥ ३३॥ १०७

द्विती नाम ऋषिः* स्वात्मानं प्रत्याह। "पुनानाय" पवित्रेण पूयमानाय† "वेधसे" कर्मणो विधात्रे सोमाय‡ "वचः" स्तोत्र-लक्षणं "प्रोच्यते" त्वया प्रोच्यताम्। किञ्च। "मतिभिः" स्तुतिभिः "जुजोषते" प्रीयमाणाय स्तुतिं "प्रभर" प्रकर्षेण धारय। तत्र दृष्टान्तः। "भृतिन्न" यथा भृतकाय भृतिं सम्पादयति तद्वत्।

"वच उच्यते"-"वच उद्यते"—इति साम्न ऋचः पाठः।

॥ ८॥ १०७

---

* "आप्त्यः"--इति ऋषि-नै०।

† 'सोमपानाय'—इति वि०।

‡ 'मेधाविने सोमाय'—इति वि०। "वेधाः"—इति मेधाविनामसु षष्ठं नैघण्टुकम् ३,१५।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

२ २ ३ १ २ ३ १ २
गोमन्नइन्दोअश्ववत्सुतःसुदक्षधनिव।

१ २ ३ २ ३ २ ३ १ २
शुचिञ्च*वर्णमधिगोषुधारय॥८॥१०८†

२ ५ २ ३ ४र ५ ५ १
गो४मन्नः। हो३इ। इन्दोअश्ववाइ६हे। सुतःसुदक्ष

२ २ २ १ ३ २ ३ ५र र
धा१नीइ्वा। शुचिञ्चवा२३४५। र्णमधिगो२३४औहो

३ ५ २ १ २ ४ ५ ४
वा। षू२३४धा। रया। औ३होवा। हो५इ। डा॥

॥३४॥१०८

पर्वतनारदावृषी। हे "सुदक्ष" सुबल! हे "इन्दो" सोम। "सुतः" अभिषुतस्त्वं "नःअस्माकम्"‡ "गोमत्" यज्ञ-साधन-गौ-युक्तं धनं "धनिव" धन्व [ वर्णविकारः ¶ ] गमय [ धन्व-तिर्गत्यर्थः § ] ततो हं "शुचिं" पूतन्दीप्यमानं "वर्णं" रसञ्च "गोषु" क्षीरादिषु "अधिधारय" अधिकं प्रापयामि॥

---

* "ते"—इति ऋ०।

† उ० ७,३,२०,१=ऋ० ७,५,८,४=ज्ञहे १२,१,१४—१७,१,२—१८,२,६।

‡ 'नः अस्मभ्यम्'—इति वि०।

¶ "व्यत्ययोबहुलम् (३,४,९८)"—इति पाणिनी-सूत्रस्य-सुप्तिङित्यादिवचने-नेत्यर्थः।

§ नि० नै० २,१४,६४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

२ १ २　　३ १ २ ३ १ र　२र
अस्मभ्यन्त्वावसुविदमभिवाणीरनूषत ।
१　२ ३ १ २ ३　१ २
गोभिष्टे वर्णमभिवासयामसि ॥ १० ॥ १०९ *

४　५　　३　५　　२　३　५
घावास्मा । भ्या२३४न्त्वा । वाद्ववी२३४दाम् ।
१　२　५　　३ १ २　५　२　५
आभा२इवा२३४णीः । अना ओ२३४वा । षा२३४ता ।
१र २ र१　२ ३ २ १　　२ र　३
गोभिष्टे व । णमभिवा२३ । सयामसि हो२३४५इ । डा ॥
॥ ३५ ॥ १०९

"धनिव"-"धन्व"—इति, "धारय" "दीधरम्"—इति च छन्दोग-बह्वृचानां पाठभेदः ॥ ९ ॥ १०८

पर्वतनारदावृषी । सोम ! "वसुविदं" धनस्य दातारं "त्वा" त्वाम् "अस्मभ्य" धनादिदानार्थं "वाणीः" अस्मदीयावाचः "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने ( अदा०प० ] । वयं "ते" तव "वर्णम्" आवरकं रसं "गाभिः" गो-विकारैः क्षीरादिभिः "अभिवासयामसि" अभिवासयामः अभित आच्छादयामः ॥ १० ॥

---

* ऋ० ७,५,७,४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथैकादशी।

१ २ ३ २उ ३ २ ३ १ २ ३ १ २
पवतेहर्यतोहरिरतिह्वरांसिरंह्या।
३क २र २ १ २ ३ १ २ १ २
अभ्यर्षस्तोतृभ्योवीरवद्यशः॥ ११ ॥ ११०

५ २र २ १र २
(यशांसि त्रीणि॥) पवतेहा। र्यतोहरिः। औ
२ ३ ५ १ २ १ ऽर १ २र
३हो३१इ। औ२हो२३४वा। आतिह्वरा२ंसिरंह्विया।
१र २ ३ ५ २ १० र १ २र १
औहो३१इ। औ२हो२३४वा। अभ्यर्षस्तोतृभ्योवा।
२ २ ३ ५ १ २ ५र र
औ३हो३१इ। औ२हो२३४वा। रा२वा२३४औहोवा।
१र १ ३ १ १ १ १
यशोयशा२३४५ः॥ ३६॥

३ २ ४ ५र २ १र २र १ ५
पवा३। पवतेहा। र्यतोहरिः। औहोइ। औ३
२ २र २ १ २ १ ऽर १ २ र र १
होइ। औहोइ। आतिह्वरा२ंसिरंह्विया। औहो
ऽ २ २र २ १ २ र १ २र १ २र
इ। औ३होइ। औहोइ। अभ्यर्षस्तोतृभ्योवा। औ

* ऊ० १,१,२२,२=ऋ० ७,५,११,३=ऊह्य १,२,१६—६,२,१५—६,२,१६—९,२,२=ऊह्य ९,१,१६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　　ऽ　२　　३र २　　१　२　　५र र
होइ। औ३होइ। औहो३। रा२वा२३४औहोवा।
२ र १ २ १ १ १ १
यशोयशा२३४५ः ॥ ३७ ॥

३ ४ ५र　　३ २　　१　　५र　४
पवतेहर्यतः। हरीः। आ२३४। तिह्वराᳪसिर।
५　　२ १　　र ५　　३र २　　१　२
हिया। अभ्यर्षा२३४। स्तोट। भ्योवा३इ। रा२वा
५र र　　२　५
२३४औहोवा। या२३४शाः ॥ ३८ ॥ ११०

अग्निश्चाक्षुष ऋषिः। "हर्यतः" स्पृहणीयः* "हरिः" हरितवर्णः सोमः "रंह्यां" [तृतीयाया आकारः†] साधु वेगेन "ह्वरांसि" कुटिलानि अनृजूनि पवित्राणि "अति पवते" अतीत्य गच्छति। अथ प्रत्यक्षस्तुतिः—हे सोम! त्वं "स्तोतृभ्यः" "वीरवत्" पुत्रयुक्तं "यशः" "अभ्यर्ष" अभिगमय प्रयच्छेत्यर्थः ‡।

"अभ्यर्ष"-"अभ्यर्षन्"—इति साम्न ऋचः पाठौ ॥ ११ ॥ ११०

---

* 'हरिभिर्यन्ता'—इति वि०।

† "सुपांसुलुक् (७,१,३९)"—इत्यादिनेति भावः।

‡ 'विनियोगोऽस्य प्रथमेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी।

२ १ २ ३ २ ३ १ २ २ १ २
परिक्रोशम्मधुश्चूतꣳसोमःपुनानोअर्षति।

३ २उ ३ १ २ ३ १ २
अभिवाणीऋषीणाꣳसप्ता*नूषत ॥ १२ ॥ १११ †

॥ तृतीय-दशति ॥

२ १ २ ४ ५ १र
(भारद्वाजम्॥) परिक्रो३शम्मधुश्चुताम्। सोमः

२ र१र २ १ २ २ ३ २र १ २र
पुनानोअर्षति। होयि३। अभिवा२३४५। णीर्ऋषी

र १ २ ३ ५ ३ ५
णाꣳस। प्तानाओ२३४वा। षा२३४ता ॥ ३९ ॥१११

॥ इति अर्द्धःप्रपाठकः ॥

द्वितऋषिः‡। सः "पुनानः" पूयमानः सोमः "मधुश्चुतं" मधुर-रसस्य च्यावयितारं द्रोणकलशं प्रति आत्मीयं रसं "पर्य-र्षति" परि गमयति। तमिमं सोमम् "ऋषीणां" "सप्त वाणीः" सप्तच्छन्दांसि¶ "अभ्यनूषत" अभिष्टुवन्ति [ नू स्तवने कुटादिः (प०)।

* "सप्त"—इति ऋ०।

† ऋ० ७,५,६,२।

‡ "आप्त्यः"—इति ऋषि-नै०।

¶ गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगती चेति सप्त-च्छन्दांसि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सोमः पुनानो अर्षति"-"अव्यये वारे अर्षति"—इति साम्न ऋचः पाठौ ॥ १२ ॥ १११

इति श्रीमत्सायणाचार्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने पञ्चमस्याध्यायस्य दशमः खण्डः ॥

॥ इत्यौष्णिहम् ॥

—:○:—

स्यु: पवस्वेति खण्डेऽस्मिन्नृचोऽष्टौ ककुभोऽत्र तु ।
"ससुन्वे"-इति गायत्री यवमध्येति* केचन ।
अक्षरव्यूहनादेषा ककुबेवेति केचन ।
"एष धारयासृतः" प्रगाथः काकुभोऽन्तिमः ।
ऋषीणां विप्रकीर्णत्वात् तत्र तत्राभिदध्महे ॥

तत्र एकादशे खण्डे—

सैषा प्रथमा ।

१ २ ३ १ २　३१ २　२ १ २ ३ १ २
पवस्वमधुमत्तमइन्द्रायसोमक्रतुवित्तमोमदः ।
१ २ ३ १ २ ३ १ २
महिद्युक्षतमोमदः ॥ १ ॥ ११२

* "विपरीता यवमध्या (पि० ३, ५८)" यदाद्यन्तौ पादौ लघ्वक्षरौ भवतः मध्यमस्य बह्वक्षरः तदा यवमध्येति कथ्यते।

१ उ० १,१,१६,७=ऋ० ७,५,१७,१ = ऊहे १,१,६—७,१,८—९,२,७— १०,१,५— १०,२,५—१३,१,४—१३,२,१८—१४,१,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १ २

ओम् ॥ (वासिष्ठम् ॥) पावा। स्वमाधुमा। तामा

३ ५ ३ ५ २र १ २र१ २

ओ२३४वा। ई२३४न्द्रा। यसोमक्रतुवित्तमोमदा३ः।

१ १ ३ ५ १ १ २र १ २ १२११

ओइ। माहाओ२३४वा। द्युत्तमोमदा२३४५ः॥ १॥

१ ५ ४ ५ ५ १

(सफम् ॥) पा३४। वस्वम। धुमत्ता६माः। आ

१ १ २ ४ २ २

इन्द्रा२। यसोमा२। क्रतुवाइत्ता३मो३। मा२दाः।

१ २ ४ २ ५

महिद्युत्ताता३मो३। मा३४५दो६हाइ॥ २॥

४५ ४५र ४ १ र र २

पवस्वमधुमा। इहा। तमः। इन्द्रायसोमक्रतुवित्त

१र २ १ २ १ २ १ २ १र

मोमार२३दाः। इहा। महाइद्यु२३त्ता। इहा। तमो

२ १

मा२३दा३४३ः। ओ२३४५इ। डा॥ ३॥

४५ ४र ४ १

(वासिष्ठम् ॥) पवस्वमा। ए५। धुमा। तमाः।

२र १ २ २ १ २

इन्द्रायसो३। हा। औ३हो। माक्रातवो२३दा३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ २ ३ २ ३१उ ३१२ ३ १२ ३२
अभिद्युम्नम्बृहद्यशइषस्पतेदिदीहिदेवदेवयुम्।
१र २र ३१ १
विकोशम्मध्यमंयुव॥ २॥ ११३ *

१ २ २ ३२ ३१ १ २ १ ३
हा। औ३हो३४। तमो३४मदाः। मद्दाये३। ह्यूरहा २
५र र २र १ २ १ १ १ १
३४औहोवा। तमोमदा२३४५ः॥ ४॥

२ १ २ ४ ५ २ ३ ५ २ १र
(सफम्॥) पवस्वा३मधु। मत्ता२३४माः। इन्द्रा
२ १ १ २ ४ २ ५ २ १
यसोमा२। क्रतुवाइत्ता३मो३। मा३२३४दाः। मह्य
२ ४ २ ५
इ। द्युचाता३मो३। मा३४५दौ६हाइ॥ ५॥ ११२

गौरिवीतिः ऋषिः†। हे "सोम"! "मधुमत्तमः" अतिशयेन माधुर्योपेतस्त्वम् "इन्द्राय" इन्द्रार्थं "मदः" मदकरः सन् "पवस्व" चर। कीदृशः? "क्रतुवित्तमः" अत्यन्तं प्रज्ञायाः कर्मणो वालम्भकः "महि" "महान्" मंहनीयो वा "द्युचतमः" अत्यन्तदीप्तः "मदः" हृष्टः॥ १॥ ११२

* ऊ० ३,२,१७,१=ऋ० ७,५,१८,४ = ऊहे ३,१,२— ५,१,१ —९,१,१३—१४,२,१४

† "भाक्ताः"—इति ऋषि-नै०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



(ऐषिराणि चत्वारि ॥) अभाइ । द्युम्नाइम्बृ३हत्
द्यशः । इषाः । पतेदिदीहिदे३वा३देवयुम् । विको ।
शर्म्म । ध्यमा३०यूवा६५६ ॥ ६ ॥

अ । भ्येद्युम्नाम् । बृहाद्या१शा२ः । इषास्पता
इ । दीदीहा२३४इदे । वदाइवा२३४यूम् । विकौवा
ओ२३४वा । शर्म्मध्यमा३१उवा२३ । यू२३४वा ॥ ७ ॥

अभिद्युम्नम्बृहत् । इहा । यशः । इषस्पतेदिदीहि
देवदेवा२३यूम् । विकोहोवा३हाइ । शर्म्मा२ध्यमंयुव ।
इडा२३भा३४३ । ओ२३४५ । डा ॥ ८ ॥

अभिद्युम्नन्नृ६हद्यशाः । इषस्पताइ । दिदीहिदा
इ । वादेवयूम् । विकोशर्म्मध्यमा२३ण्हाइ । यू२३४
वा । एहियाह्हा । होप्इ । डा ॥ ९ ॥ ११३


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२ ३१२ ३ १२३१र २र३१२ ३१२
आसोतापरिषिञ्चताश्वन्नस्तोममप्तुरꣳरजस्तुरम्।
२ १२३१२
वनप्रक्षमुदप्रुतम्॥ ३॥ ११४ *

ऊर्ध्वसद्मा ऋषिः† । हे "बृहस्पते" अन्नस्य पते ! हे "देव" स्तोतव्य सोम ! "देवकामं" त्वां वय मभिष्टुम इति शेषः। किञ्च। त्वं "द्युम्नं" द्योतमानं "बृहत्" प्रभूतं "यशः" अन्नम् अस्मभ्यम् "अभिदीदिहि" आभिमुख्येन प्रकाशय प्रयच्छेत्यर्थः [आमन्त्रितस्याविद्यमानत्वेन ‡ पादादित्वान्न निघातः¶] किञ्च "मध्यमम् §" अतरिक्षस्थितं "कोशं" मेघं ‖ "वि युव" हव्यर्थं ममक विश्लेषय + ॥

"देवयुम्"-"देवयुः"—इति पाठौ ॥ २ ॥ ११३

---

* उ० ६,२,६,१=ऋ०७,५,१८,१=अचे २,२,१—७,१,१७—१२,१,१३।

† "आङ्गिरसः"—इति ऋषि-नि०।

‡ "आमन्त्रितं पूर्वमविद्यमानवत्"—इति पा० ७,१,३०।

¶ "आमन्त्रितस्य च ( पा० ८,१,१९ )"—इत्याष्टमिको निघातो न, अपितु "आमन्त्रितस्य च (पा०६,१,१९८)"—षाष्ठाद्युदात्तत्वेति भावः।

§ 'मध्यमं मध्यमे सवने'—इति वि० माध्यन्दिने इति तस्यार्थः।

‖ "कोशम्"—इति मेघनामसु विंशत्तमं नैघण्टुकम् १,१०।

+ 'विनियोगोऽस्य पञ्चमेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र र १
( कार्णश्रवसानि त्रीणि ॥ ) आसोतापा। वारेइ

२ ५र र २ ५ १ २ १ र २ १ ५र
षार२३४औहोवा। चार३४ता। अश्वन्नस्तोममप्तुरार२५र

१ २ २ १ २ १ २
जस्तुरम्। ओयि३। वना३। ओयि। प्रक्षा३४।

५र र २ १ ३ १ १ १ १
औहोवा। उदप्रुता२३४५म्॥ १०॥

५र र र १ १
आसोतापा। रिषि। चता२। ऊ२। हा२इ।

१ २ १ र २ १
ऊ२। अश्वन्नस्तोमम। प्तुरा२म्। ऊ२। हा२इ।

१
ऊ२। रज। स्तुरा२म्। ऊ२। हा२इ। ऊ२।

१ २ २
वन। प्रक्षा२म्। ऊ२। हा२इ। ऊ२। उद।

१ १ ५र र १ ५
प्रूरता२३४औहोवा। ऊ२२३४पा॥ ११॥

५र र र १
आसोतापा। रि। षाइ। चता। अश्वान्नस्तो।

२ २ ५ १ २ २ ५ ४ १
मामप्रू२३४राम्। रजास्तू२३४राम्। वनोहाइ। प्रा

२ २ १ २ ५
च्छ।मूइदा। ऊम्मायि३। प्रू२३४ताम्॥ १२॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५र र र र ५
( ऋचःसामानि त्रीणि ॥ ) आसोतापरीऽषिञ्चता ।

१ २ ३ ५ १ र २ १ ऽर १
आश्वाओ२३४वा । नस्तोममप्सुरा२ऽरजस्तुरा२३म् ।

१ २ ३ ५ २ १ २१२ ११११
होइ । वानाओ२३४वा । प्रचमुदप्रुता२३४म् ॥ १३ ॥

३र २ ३र ४र ५ १र ७ १
आसो२३४औहोवा । तापराइषिञ्चाता२ । आश्व-

२ र १ ० १ २ ३ ५ ४
नस्तो । मामप्सूरा२म् । रजास्तू२३४राम् । वनो

१ २ ५
हाइ । प्राचमुदा२१उवा२३ । प्रू२३४ताम् ॥ १४ ॥

३र ४र ५र २ ३ ४ ५ १ २ र
आसोतापा । हो । रिषिञ्चताऽए । आश्वनस्तो

१ ७ १ २ १ ७ १
मामप्सूरा२म् । राजस्तुरम् । वानप्राक्षा२३म् । ऊ

४ २ ५
२३दा३ । प्र३४५तोईहाइ ॥ १५ ॥

ऋजिश्वा ऋषिः* । हे ऋत्विजः ! "आ सीत" सोम मभिषुत [षुञ् अभिषवे ( स्वा०उ० ) लोटि छान्दसो विकरणस्य लुक् †

---

* "भारद्वाजः"—इति ऋषि-नै० ।

† "सुपांसुलुक् ( ७,१,३९ )"—इत्यादिनेति भावः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २

एतमुत्यम्मदच्युतꣳसहस्रधारंवृषभन्दिवोदुहम्।

३ १२ ३१२

विश्वावसूनिबिभ्रतम्॥ ४ ॥ ११५ *

४५ १ ७

(कौल्मलबर्हिषे द्वे॥) एताम्। ऊत्याम्। मदा

५ २ १ २ १ २ १

२च्यू२३४ताम्। सहास्रधा। रांवृषभाइम्। दिवौ

“तप्तनप्तनथनाश्च (पा०७,१,१४५)”—इति तस्य तबादेशः] किं च। “परि षिञ्चत” परितः वसतीवर्यादिभिः सिञ्चत। कीदृशम्? “अश्वं न” अश्व मिव वेगिनम्। “स्तोमं” स्तोतव्यम् “अप्तुरम्” † अन्तरिक्षस्थिताना मुदकानां प्रेरकं “रजस्तुरं” तेजसां वा प्रेरकम। “वनप्रक्षम्” उदकैः सम्पृक्तम्। यद्वा। काष्ठेषु पात्रेषु क्षारकं प्रकीर्णम् “उदप्रुतम्” उदकं गच्छन्तं प्लवमानं सोम मभिषुत अभिषिञ्चत॥

“वनप्रक्षं”-“वनक्रक्षम्”—इति साम्न ऋचः पाठौ॥ ३ ॥११४

* ऋ० ७,५,१९,१।

† ‘तरति तम्’—इति वि०।

‡ ‘विनियोगोऽस्य तृतीयेऽहनि’—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १ २
२दु२३४हाम् । विश्वा२हौ१इ । हाइ । वा२३हू३ ।

१ २ ५र २ २ ५
ना२इबा२३४औहोवा । आ२३४ताम् ॥ १६ ॥

४५ ४५ २ ५
एतामूत्याम् । मदा२१ओवा२३ । च्यू२३४ताम् ।

२१ २र १ २र्१ २ ४ ५ ४५ २
सहस्रधारंवृषभन्दिवोदुहा२३म् । वाइश्वावाहू । निबा

२ ५
२१ओवाये३ । आ२३४ताम् ॥ १७ ॥

५र ४५ ४ ४ १
(शङ्कु ॥) एतमुत्यम् । ए५ । मदा । च्युताम् ।

२ २१र २ १ १
सहस्रधारंवृषभंदिवोदू२३हाम् । वाइश्वा२वाहू२३ ।

४ ५
निबो२३४वा । आपूता६हाइ ॥ १८ ॥

५र४५४
(कौत्समसबर्हिषाणि त्रीणि ॥) एतमुत्यम् । ओ

५ ४५ ४ २ २ ५
हाइ । मदच्युतम् । ओहाइ । साहस्रा२३४धा ।

२३ ५ २र २ ५ १
२वार्षा२३४भाम् । दिवोदुहमे२३४हाइ । विश्वा२हा



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१इ। वा२३इ३। ना२इबा२३४औहोवा। आ२३४

ताम्॥ १९॥

ग्नामुत्यम्मदाच्युताम्। सहस्रधा। रांवृषभा-

रम्। दिवो२। दुहमोइ। विश्वावसूनिबा२३होइ।

भ्रातमा२१उवा२३। ऊ२३४पा॥ २०॥

एता३४म्। उत्यम्मदा। च्यूताम्। सहस्रधार२

वृ। षभम्। दिवो२३१२३। दू२३४हाम्। विश्वा

वसूनिबा३ओये३। भ्रा२३४ताम्। एहियाह्दा। होपूइ।

डा॥ २१॥ ११५

कृतयशाऋषिः*। "दिवः" देवान् कामयमाना ऋत्विजः†।

* "आङ्गिरसः"—इति ऋषि नै०।

† 'दिवो दुहम—दिव आहृत्य इमं लोक मुदकेन पूरयति'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

१ २ ३ १र २र ३ २ २ १ २ २ १ २र
सस्तुन्वेयोवसूनांयोरायामानेतायइडानाम् ।

२ ३ १ २ ३ २
सोमोयःसुक्षितीनाम् ॥ ५ ॥ ११६ *

४ ५ १र र २ १
(दीर्घम् ॥) साहू । न्वेयोंवसू२३नाम् । योरा

१ र र १ २ १ २ १
२यामा२ । नेतायइडा२३नाम् । सो२३माः । यःसु

२ १ ५ ५
क्षिता२३४इनोईहाइ ॥ २२ ॥

"एतं" "त्यमु" सोममेव "दुहम्" अदुहन् [दुहेर्लिङि रूपम्†] दुहन्ति स्म [छान्दसो नकारस्य मकारः ‡। "ग्रावाणो वत्सा ऋत्विजो दुहन्तीति" तैत्तिरीयकब्राह्मणम्] कीदृशं सोमम्? "मदच्युतं" मदस्य प्रेरकं "सहस्रधारं" बहुधारम् "वृषभं" कामानां वर्षकं "विश्वा" सर्वाणि "वसूनि" धनानि "बिभ्रतं" धारयन्तम् ॥

"दिवोदुहम्"—इति, "दिवं दुहम्"—इति पाठौ ॥ ४ ॥११५

* उ० ४,१,१८,१=ऋ० ७,५,१९,१=ऊहे ३,२,२—२७,१,१४ ।

† "दुह प्रपूरणे"—सदा० प० ।

‡ "व्यत्ययो बहुलम् (पा०३,४,९८)"—इत्यनेनेति भावः ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४ ५ १र र र
(लोमसाम)॥ ससुहाउ। न्वेयोवद्धनार२३९

२ १ १ र र १ र २
हाउ। योरा२यामा२। नेतायः। इडाना२३९हा

१र र २ र १ २र १ ४
उ। सोमोयःद्ध३हाउ। च्चितीनाम्। औ२३हो

५ ४
वा। होऽ५इ। डा॥२३॥

४ ३ १ र
सोमसामानि त्रीणि॥) सः। स्वसाद्ध। न्वेयो

२ १ १ १ १ १र ऽर १र ऽर र १र
वसा३१उवा२३। ना२३४५म्। योरा२यामा२नेताय

१ ऽर र १ ९ ५ १ २
इडा२ना३म्। सोमोवांऔ२३४वा। यःसुच्चिता३१उ

२ १ १ १ १ १
वाये३। ना२३४५म्॥२४॥

२ १ ४र ५र २र १ १ २ र
ससुन्वे२३योवद्धनाम्। योरा या१मा२३ने। ताय

१ १र ऽर १ २ र १ र
इडा२३४५ना६५६म्। सोमो२यःसुच्चितीनाम्। सो

१ १ १ १
मा२३४५ः॥२५॥

४ ५ र र ४ ५ २र १ २ २ र र
ससुन्व याः। एवाद्ध। नायोरा१या२३मा। नेता



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

२ १ २ २ १ २ ३ १ २ ३ १ २
त्वꣳह्याऽ३ङ्ग*दैव्य†म्पवमानजनिमानिद्युमत्तमः।

३ १ २ ३ १ २
अमृतत्वायघोषयन्॥ ६॥ ११७ ‡

१ २ १२ २ १ २ १
यइडार३इना३४म्। सोमाः। यःसुक्षि। ता२३४५इ।

३ १ १ १ १
ना२३४५म्॥ २६॥ ११६

ऋणवऋषिः¶। "यः" "सः" "सोमः" "सुन्वे" अभिसुषुवे ऋत्विग्भिः§। यः सोमः "वसूनां" धनानां "आनेता" यस्य "राया" [रान्ति प्रयच्छन्ति क्षीरादिकमिति] रायो गावस्तेषा आनेता विद्यते यस्य सोमः "सुक्षितीनां" शोभन-मनुष्याणाम्॥ आनेता सोऽभिषुतोऽभूदिति +॥ ५॥ ११६

---

* "ह्या२ङ्ग"—इति } ऋ०-पाठौ।
† "दैव्या"—इति च }

‡ ऋ० ९,१,१७,१ = ऋ० ७,५,१७,३ = ऊहे २,२,१६—५,१,१६—११,२,१८—१६, ६,१२।

¶ "आङ्गिरसः"—इति ऋषि-नि०।

§ "सुन्वे सुतः"—इति वि०।

‖ "क्षितयः"—इति मनुष्य-नामसु पठं नैघण्टुकम् २,३।

\+ 'विनियोगोऽस्य षडेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



( श्रैतोष्माणि चत्वारि ॥ ) त्वꣳ ह्यि३या। गदाइवियप वमानजनिमानीइद्यू मा २। तामा २ः। अमा २र्त्ता त्वा२३। यघो२३४वा। षा५योई हाइ॥ २७॥

त्वꣳ ह्यि३या। गदाइविय। पवमान। होवा३हाइ। जनिमा२३नी३४। द्यु म। ता३माः। अमा२३। ता २त्वा२३४औहोवा। यघो३षया२३४५न् ॥ २८॥

त्वꣳ ह्यङ्गदा। विय। पवमानजनिमानिद्युमत्ता२ ३माः। अमात्ता२३त्वा३। यघो२३४वा। षा५यो६ हाइ॥ २९॥

त्वꣳ हो३अङ्गदैविया। पवमा२ना। जनिमा२ना ये३४। द्यु म। ता३माः। अमात्ता३त्वा३। यघो२ ३४वा। षा५योई हाइ॥ ३०॥ ११७



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

२१　२र ३ २ ३ १ २　३ १ २
एषस्यधारयासुतोऽव्यावारेभिःपवतेमदिन्तमः ।

१ २ ३ २ ३ १ २
क्रीडन्नूर्मिरपामिव ॥ ७ ॥ ११८ *

४ ५　१ ३ २
(गायत्रपार्श्वम् ॥) एषाः । स्याधारया३१उवा

५　१ ५र　१रर २　र १ २　र
२३ । हुव३४ताः । अव्या२वारेभिःपवतेमदिन्तमः । क्री

१ २　३ २　१ ४　१　१ १ १ १
डानू१मीरः । अपाइम् । हुर३वा३ । आइवार३४५ ॥ ३१ ॥

शक्तिःऋषिः † । हे "पवमान" पूयमान सोम ! "द्युमत्तमः" अतिशयेन दीप्तिमान् "त्वं हि" त्वमेव "दैव्यं" देवसम्बन्धीनि "जनिमानि" जन्मानि देवानित्यर्थः । जानासीति शेषः । तानभि लक्ष्य "अमृतत्वाय" तेषाम् अमरणाय "अङ्ग" क्षिप्रं ‡ "घोषयन्" ऋत्विजो ग्रावाणोव शब्द मुदपादयन् उत्पादयन्ति ¶ [हि योगादनिघातः § ॥

"घोषयन्"-"घोषः"—इति पाठौ ‖ ॥ ६ ॥ ११७

---

* ऋ० ७,५,१७,५=ऊहे ४,१,११ –१८,१,१ ।

† "वासिष्ठः"—इति ऋषि-नि० ।

‡ "अङ्गेति क्षिप्रनामाञ्चितमेवाङ्कितं भवति"—इति यास्कः (निरु०नै०५,१७) ।

¶ 'घोषयन् सूयसे'—इति वि० ।

§ "यद्धितु परञ्छन्दसि"—इति पा० ८,१,५६ ।

‖ 'विनियोगोऽस्य तृतीयेऽहनि'-इति वि० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र ५ १ र २
(सन्तनि)॥ एषाहाउ। स्याधारयाऽ३१उवाऽ२३।

५ १ ५र १रर २ र १ २ ४र
हू२३४ताः। अव्याऽ२वारेभिःपवतेमदिन्तमाऽ२३ः। क्रीडन्

५ १ २ ५
हाउ। ऊर्मिरपाऽ३१उवाऽ२३। ई२३४वा॥—*

२ १र र २
(सोमसामानि त्रैव त्रीणि॥) एषस्यधा। रायाऽ१

३ र१र १ २र ३ २ १
सूताऽ२ः। अव्यावाराइ। भाइःपवते। मदिन्तमाः।

२र१ २ १ ४ २ ५
क्रीडन्नू२३र्मीऽ३ः। आर३पाऽ३म्। आ३४५इ्वोऽ६हाइ॥३३॥

२१२ ४र ५र १ १रर
एषस्याऽ३धारयासुताः। अव्याहाऽ२इ। वारेभिःपव

र ७ १र २ ३ र
तेभादिन्तमाऽ२ः। क्रीडाऽ२न्होऽ१इ। ऊ२३र्मीः। अपा

२ १ २ ४ ५ ४
मिवा। औऽ३होवा। होऽ५इ। डा॥ ३४॥

---

* एतस्यैव साम्नः परार्द्धं यउक्षियेत्यष्टमर्चो गानम्। अनयोः सप्तमाष्टमयोः ऋचोः प्रगाथो भवति। मीमांसादर्शनाधिकरणमालायां नवमाध्याय-द्वितीयपाद-षष्ठाधिकरणादौ तल्लक्षणादयोऽपि विचारिताः। अस्ति चात्रैव भाष्यकृतो भूमिकायां तदुल्लेखः समन्तात् (२५पृ०—३८पृ०) तेनानयोः त्र्यृच्कं सम्पद्यते, अत्रैतादृग् विभिन्न-सूक्त-गान-दर्शनस्यायमेव हेतुः। तादृश-त्र्यृङ्-सूक्त-गानानि चात्र ऊहे (४,१, ११—१८, २,१) स्फुटानि।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



४र　र४　२१र २र१　२ ३२१
एषस्यधा५रयासुताः। अव्यावाराइ। भिःपवता२

२ ३ २　१र र　२ १ ५ ४
३इ। मदिन्तमाः। क्रीडन्नूर्मिरपोवा३ओ२३४वा। आ-

५
५इवोईहाइ॥ २५॥११८

॥ इति ग्रामे गेये सप्तदशः प्रपाठकः॥

॥ इति गेयगानं सम्पूर्णम्॥

उरुऋषिः*। "स्यः" सः "एषः" "सुतः" अभिषुतः सोमः "अव्या वारेभिः" अवेर्वालैः तेभ्यः पवित्रे "धारया" आत्मीयया "पवते" कलश मभिलक्ष्य चरति। कीदृशः? "मदिन्तमः" मादयितृतमः। "अपामिव" उदकानाम् "ऊर्मिः" सङ्घात इव "क्रीड़न्" इतस्ततः सङ्क्रीडमानः पवते †॥

"अव्यावारेभिः"—"अव्योवारेभिः"—इति साम्न ऋचः पाठभेदः॥७॥११८

* "आङ्गिरसः"—इति ऋषि-नै०।

† 'विनियोगोऽस्य सप्तमेऽहनि'—इति वि०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

२१ २ ३ ३ ३ २ २ १ २र ३ १ २र ३ १ २
यउस्रियाअपियाअन्तरश्मनिनिर्गाअकृन्तदोजसा।

१ २ २१ ३ २ ३ २ २१ २ २ १ २ १ २
अभिव्रजन्तत्निषेगव्यमश्व्यंवर्मीवधृष्णवारुज (ओ३म् वर्मीं

२ ३ १ २
वधृष्णवारुज*) ॥ ८॥ ११९ †

॥ चतुर्थ-दशति॥

॥ इति षष्ठः प्रपाठकः समाप्तः॥ ‡

॥ समाप्तञ्च छन्दआर्चिकम्॥ ¶

१ १र १ र ३ ४ ५ १
यउस्रियार्अपियाअन्तरश्मनी२३। निर्गाहाउ। आ

२ ५ २१ २ र १
कृन्तदा३१उवा२३। जा२३४सा। अभिव्रजन्तत्निषेगव्यम

३ ४ ५ १ २
श्वियार्३म्। वर्मीं हाउ। वाधृष्णवा३१उवा२३। रू२

५
३४जा॥ ३२ §॥ ११९

---

* क० घ० पुस्तकयो रेव सभ्यासपाठो न दृश्यते। वस्तुतः खण्डादि-समाप्तावपि अन्त्याभ्यासो वैदिकशैली।

† ऋ०७,५,१८,१=ऋक्‌ ४,१,२—१८,९,१।

‡, ¶ भाष्यकृतः सायणस्य मत-विरुद्धएते परं खः सर्वमूलपुस्तकेषु।

§ इदं हि, पूर्व-प्रदर्शित-'सन्तनि'-नामकस्य 'एषाहाउ'—इत्येतस्य (१३८ पृ०) साम्नोऽन्तिमं दलम्। ततस्य न तु गेयगानादन्यदिति ध्येयम्। अतएव द्वात्रिंशदङ्कान्वितमिति शम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



ऋजिश्वाऋषिः *। "यः" सोमः "उस्रियाः" उत्सरणशीलाः† "अपियाः" अप्याः [आपइत्यन्तरिक्षनाम ( नै० १,३,८)। अस्माद् "भवे छन्दसि ( पा० ४,४,११० )"—इति यत् ] अन्तरिक्षस्थाः। अहि-प्रभृतिभिरसुरैः ‡ अपाहृत्य निहिता "गाः" आपः ¶ "अश्मनि" मेघे § "अन्तः" मध्ये स्थिताइत्यर्थः। "ओजसा" बलेन "निरवाभ्तत्" निरच्छिनत् निरगमयत् अन्तरिक्षाद्वृष्टि सकाशैदित्यर्थः। स त्वम् असुरै रपहृतं "गव्यम्" गो-सम्बन्धि "अश्व्यम्" अश्वेषु भवं "व्रजं" समूहं "अभि तत्निषे" अभितो व्याप्नोति [ तनु विस्तारे—छान्दसे लिटि ‖ "तनिपत्योश्छन्दसि (पा० ६,४,९९)"—इत्युपधालोपः ]। किञ्च। हे "धृष्णो" शत्रु-धर्षणशील + सोम! स त्वं "वर्मीव" कवचीव ÷ "आरुज" असुरान् जहि ॥

---

* "भारद्वाजः"—इति ऋषि-नै०।

† 'उस्रियाः आदित्य-रश्मयः अनड्वाहो वा'—इति वि०। "उस्रियाः"—इति गोनाम, तृतीयं नैघण्टुकम् ( २, ११ )। "उस्राः"—इति तु रश्मिनामसु नवमं नैघण्टुकम् ( १, ४ )। "उस्रियेति गोनामोत्स्राविणोऽस्या भोगा उस्रेति च"—इति यास्कः ( निरु० नै० ४, १९ )।

‡ अहिरिति असुरइति चेमौ द्वावेव मेघपर्य्यायौ नै०१,१०,२७-२९।

¶ इह स्थानं मृग्यम्।

§ "अश्मा"—इति मेघनामसु अष्टमं नैघण्टुकम् १,१०।

‖ "छन्दसि लिट्"—इति पा० ३,२,१०५।

+ 'धृष्णो धारयन्'—इति वि०।

÷ 'वर्मी रक्षिता'—इति वि०।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"अपियामन्तरश्मनि"-"अप्यामन्तरश्मनः"—इति छन्दोग-बह्वृचानां पाठभेदः ॥ ८ ॥ ११९

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने पञ्चमस्याध्यायस्यैकादशः खण्डः ॥११॥

॥ इति काकुभं समाप्तम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन्।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ५ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्य्येण विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने पञ्चमोऽध्यायः समाप्त ॥ ५ ॥

॥ सौम्यं पावमानं वा पर्व काण्डं वा समाप्तम् ॥

---

॥ इति तृतीयं पर्व ॥

---


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

ॐ नमः सामवेदाय।

# अथ षष्ठोऽध्याय आरभ्यते ॥



यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे तमहं वन्दे विद्यातीर्थ-महेश्वरम् ॥ १ ॥

आरण्यकाभिधः* षष्ठोऽध्यायो व्याक्रियतेऽधुना † ॥ २ ॥
तत्रेन्द्रेत्यादिकानान्तु पञ्चपञ्चाशतां क्रमात् ।
ऋषिं छन्दो दैवतञ्च तत्र तत्राभिदध्महे ॥ ३ ॥

तत्राद्याया ऋचो द्रष्टा भरद्वाजः प्रकीर्त्तितः ।
द्वितीयस्या वसिष्ठः स्यात्तृतीयाया ऋचः स्मृतः ॥ ४ ॥
वामदेव स्ततश्छन्दो बृहती त्रिष्टुबेव च ।
गायत्रीति क्रमादिन्द्रो भवेत्तिसृषु देवता ॥ ५ ॥

---

* "अरण्यान्मनुष्ये" (४, २, १२९ पा०)। अत्यल्पमिदमुच्यते मनुष्यइति (प०)। पथ्यध्यायन्यायविहारमनुष्यहस्तिष्विति वक्तव्यम् (का०)। आरण्यकः पन्थाः। आरण्यकोऽध्यायः। आरण्यको न्यायः। आरण्यको विहारः। आरण्यको मनुष्यः। आरण्यको हस्ती (प०)। वा गोमयेषु (का०)। वा गोमयेष्विति वक्तव्यम्। आरण्यका गोमयाः आरण्या गोमयाः (प०)।

† अथ आर्चिक-ग्रन्था इति विवरणादि-सकल-ग्रन्थ-सम्मता वैदिक-प्रथादानुगताः पुस्तकाद्यन्त-समीक्षणेनोपलभ्यन्ते च। तथाच षडध्यायात्मकश्छन्दो नाम एकः, अपरो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्र प्रथम-खण्डे—

सैषा प्रथमा।

२ ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
इन्द्रज्येष्ठन्न आभर ओजिष्ठम्पुपुरिश्रवः

१२ २२ ३ १ २ ३ १२ १२२
यद्दिधृक्षेमवज्रहस्तरोदसीउभेसुशिप्रपप्राः॥ १ ॥ १ *

२२ २२ २ २ २ २ २२
† हाउ। ३। औहोइन्द्रज्येष्ठन्न आभराइए। हाउ।

१२ १ २ २१२ २२२ २ १ २
३। औहोऽ२। औऽ२। जिष्ठम्पूपारा। औहोवाश्रावाः।

२२ १२ १ २ २ १ २
हाउ। ३। औहोऽ२। याऽस्त्। दिधृक्षेमाव। व्र

२२२ २ २ १ २ २२ १२
हस्त। औहोवारोदासी। हाउ। ३। औहोऽ२।

१ २२ १ २ २२ २ २ १ २ २२
औऽ२। भेसुशाइप्रा। औहोवापाप्राः। हाउ। ३।

१२ १५ २ २ २ १
औहोऽ२। औऽ२। उहुवाइहाउ। वा३। हस्॥२४॥१ ‡

---

नवाध्यायात्मक उत्तरः, ताभ्यामन्यत् एषोऽध्यायैकात्मकः आरण्यक इति व्यवहृतः। सायण-मते तु नैवम्। अयं हि प्रश्नोपविभागैरेव छन्दोग्रन्थं परिसमाप्य तस्यैव षष्ठोपभाग एष इति मन्यते।

* ऋ० ४,७,१७,५। † "नारदस्तवम्"—इति आ० ब्रा० ३, २, ९।

‡ आ० पा० १प० १, १, २४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



हे "इन्द्र"!* "ज्येष्ठं" प्रशस्यतमम् "ओजिष्ठम्" अतिशयेन बलकरम् "पुपुरि" पूरकं "श्रवः" अन्नं "नः" अस्मभ्यम् "आभर" आहर प्रयच्छ। हे "वज्रहस्त" वज्रबाहो!† हे "सुशिप्र" शोभन-हनुक! एवम्भूत! हे "इन्द्र"‡ "यत्" "अन्नं" "दिधृक्षेम" धारयितु मिच्छेम यच्चान्नं इमे परिदृश्यमाने "उभे" "रोदसी" द्यावापृथिव्यौ "आ पप्राः" आपूरयसि। तदन्न माहरेत्यन्वयः।

"येनेमेचित्रवज्रहस्त"—इति बह्वृचानां पाठः॥ १॥ १

---

* "इन्दतेर्वैश्वर्य्य-कर्म्मणः"—इति नैरुक्तम् (३का० १०अ० ८ख०) ईश्वरस्यायमिति तद्भाष्यम्।

† "अथाकारचिन्तनन्देवतानां। पुरुषविधाः स्युरित्येकं चेतनावद्वद्धि स्तुतयो भवन्ति तथाभिधानानि। अथापि पौरुषविधिकैरङ्गैः संस्तूयन्ते—'ऋष्वा त इन्द्र स्थविरस्य बाहू यत् संगृभ्णा मघवन् काशिरित्ते'। अथापि पौरुषविधिकैर्द्रव्यसंयोगैः—'आ द्वाभ्यां हरिभ्या मिन्द्र याहि कल्याणीर्जाया सुरणं गृहे ते'। अथापि पौरुषविधिकैः कर्मभिः-'अद्धीन्द्र पिब च प्रस्थितस्य आश्रुत्कर्ण श्रुधी हवम्'॥६॥ अपुरुषविधाः स्युरित्यपरमपि तुयद्दृश्यतेऽपुरुषविधन्तद्यथाग्निर्व्वायुरादित्यः पृथिवी चन्द्रमा इति। यथो एतच्चेतना-वद्वद्धि स्तुतयो भवन्तीत्यचेतनान्यप्येवं स्तूयन्ते यथाक्षप्रभृतीन्योषधिपर्यन्तानि यथो एतत् पौरुषविधिकैरङ्गैः संस्तूयन्त इत्यचेतनेष्वप्येतद्भवत्यभि क्रन्दन्ति हरितेभिरासभि रिति ग्रावस्तुतिर्य्यथो एतत् पौरुषविधिकैर्द्रव्यसंयोगैरित्येतदपि तादृशमेव सुखं रथं युयुजे सिन्धुरश्विन मिति नदीस्तुतिर्यथो एतत् पौरुषविधिकैः कर्मभिरित्येतदपि तादृशमेव होतुश्चित् पूर्वे हविरद्यमाशतेति ग्रावस्तुतिरेवापि वोभयविधाः स्युरपि वा पुरुषविधानामेव सतां कर्मात्मान एते स्युर्यथा यज्ञो यजमानस्यैषचाख्यानसमयः॥ ७॥"

—इति निरु० दै०।

‡ "शिप्रे हनू नासिके वा"—इति निरु० नै० ६,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

२ ३ २ ३ १ २ ३ १र २र३र ३ १ २ ३ १ २
इन्द्रोराजाजगतश्चर्षणीनामधिक्षमाविश्वरूपंयदस्य।
१ २ ३ २ ३ १ २ ३ २उ ३ १ २ ३ २
ततोददातिदाशुषेवसूनिचोदद्राधउपस्तु,तञ्चिदर्वाक्॥२॥२

१ २ २र १ ३ १ २ २ २
* हावीन्द्राः। राजा। जगतः। चर्षणीनाम्। नाम्।
२र १र २र १र २र १र
२। नाश्रोइनम्। ३। नाहोइनम्। ३। हावौहो
२ २ १ २ १ र २ २
हाउ। अधिक्षमा। विश्वरू। पंयदस्या। स्या। २।
२र १र २र १र १र २र १र
स्याश्रोइनम्। ३। स्याहोइनम्। ३। श्रौहोहावोहो२।
२ १र २ १र २ र २
ततोददा। तौ३दाशु। षाइवसूनी। नौ। २।
२र १र २र १र २र १र २
नाश्रोइनम्। ३। नाहोइनम्। ३। हावौहोहाउ।
२र १ र २ १ २ २ २र
चोदद्राधाः। उपस्तु। तञ्चिदर्वा। र्वा। २। र्वा
१र २र १र १र २र १र
श्रोइनम्। ३। र्वाहोइनम्। ३। श्रौहोहावौहो।
२ ३ १ १ १ १
३। हाउवा३। ई२३४५ः॥ ८ † ॥

---

* "इन्द्रस्यार्कौ द्वौ"—इति ब्रा० ब्रा० ३,२,१०।

† ग्रा० गा० १प० १,१,८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१　२　२र१　२१　२　र　२
इन्द्राहाउ । राजा । जगतः । चर्षणीनाम् । नाम् ।
१र र　१र र २र　२र　२
२ । नोवा । ३ । नोवाहाइ । ३ । हाओ३ । हा
२　२ १　२ १ र　२　१
३हाउ । अधिक्षमा । विश्वरू । पंयदस्या । स्या ।
१र र　१र र २र　२र　२　२
२ । स्योवा । ३ । स्योवाहाइ । ३ हाओ३ । हा३हा
२ १र　२　१र　२　र　२
उ । ततोददा । ती३हाशु । षाइवस्तजी । नी । २ ।
१र र　१र र २र　२र　२　२
नोवा । ३ । नोवाहाइ । ३ । हाओ३ । हा३हाउ ।
२र १ र　२ १　२　२　१र
चोदद्राधाः । उपस्तु । तश्चिदर्वा । र्वा । २ । र्वो
र　१र र २र　२र　२　१
वा । ३ । र्वोवाहाइ । ३ । हाओ३ । हा३हाउ ।
२　३ १ ११ १
वा३ । ई२३४५ । ॥ १० * ॥ २

यः "इन्द्रः" "जगतः" जङ्गमस्य पश्वादेः यतो "राजा" ईश्वरो भवति । चर्षणीनां मनुष्याणां च † राजा भवति । किञ्च "अधि" क्षमा [ सप्तम्येकवचनस्य लुक् ‡ ] क्षमायां ¶ "विश्व-

* ग्रा० गा० १,१,१० ।

† "चर्षणयः"—इति मनुष्य-नामसम्र्स नैघण्टुकम् २, ३ ।

‡ "सुपांसुलुक् ( पा० ७, १, ३९ )"—इत्यादिना ।

¶ "क्षमा"—इति पृथिवी-नामसु षष्ठं नैघण्टुकम् १, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२ ३१३ १३ १२ ३ २उ ३ २३क १र
यस्येदमारजोयुजस्तुजेजनेवनᳬस्वः।

१२ ३१२ ३१
इन्द्रस्यरन्त्यम्बृहत्॥ ३॥ ३

१ २ २१र २ २१र र
* हाउयास्या। इदमारजोयू१जा२ः। तुजेजनेव

२ १ २ २
नाᳬसू१वा२ः। आइन्द्रस्या ३४५रा६५६। तियं

१
बृहत् ॥ ११ † ॥

रूपं" "यत्" धन मस्ति "अस्य" तस्यापि राजा भवति। "ततो ददाति दाशुषे वसूनि" यजमानाय ‡ वसूनि धनानि ददाति। स इन्द्रः अस्माभिः "उपस्तुतं" सम्यक् स्तुतं "राधः" धनम् "अर्वाग्" अस्मदभिमुखं "चोदत्" प्रेरयतु।

"अधिचमा"—"अधिचमि"--इति, "विश्वरूपम्"--"विषुरूपम्"-इति, "उपस्तुतम्"—"उपस्तुतः"—इति च साम्न ऋचः पाठभेदः॥ २॥ २

---

* "यर्कशिरः"—इति ब्रा० ब्रा० ३,९,१०।

† ब्रा० गा०१प० १, २, ११।

‡ दाशुषे—इति दानकर्मणो दाशतेः (नै० ३, २०, १) रूपम् "दाश्वान् साह्वान् मीढ्वांश्च (८) १,१२"—इति सिद्धम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ १ २ ३ १ २ ३ १र २र ३ १र २र ३ १ . २
उदुत्तमंवरुणपाशमस्मदवाधमंविमध्यमꣳश्रथाय।

१ २ २ ३ १र २र ३ २ ३ १ २
अथादित्यव्रतेवयन्तवानागसोअदितयेस्याम॥ ४॥ ४*

२र १र २ २र १ २ १
† हाउ। ३। आयुश्चक्षुर्ज्योतिः। औहोवा। ई

२ १ २ २ १ २ १ २
या। उदुत्तमंवरुणपाशमा२३स्मात्। अवाधमंविमध्यमꣳ

२ १ २ १ २ २ २ १ २ १ २ १ २
अथा२३या। अथादित्यव्रतेवयन्ता२३वा। अनागसोअ

"रजोयुजः" ज्योतिर्भिर्युक्तस्य (ज्योतीरजउच्यतइतियास्कः ‡) अत्यन्त-तेजस्विनः "यस्य" इन्द्रस्य "इदं" पुरोवर्ति स्तोत्रयुक्तं हविरस्ति तद्धविः "स्वः" स्वर्गे सर्वत्र वा "तुजे" दातरि ¶ "जने" यजमानविषये "वनं" यतो वननीयं सम्भजनीयं खलु। अतः "इन्द्रस्य" दानं "रत्यम्" अत्यन्त-रमणीयं "बृहत्" प्रभूतं भवति॥ ३॥ ३

---

* ऋ० १, २, १५, ५। † "वरुणगोतमयोरर्कः"—इति आ० ब्रा०१,२,१०।

‡ "रजो रजतेः। ज्योतीरजउच्यते। उदकं रज उच्यते। लोकारजांस्युच्यन्ते। असृगहनी रजसी उच्येते। "रजांसि चित्रा विचरन्ति तन्यवः"—इत्यपि निगमो भवति"—इति निरु० नै० ४, १९।

¶ तुजे इति तुञ्जतेर्दानकर्मणो रूपम् नै० ३, २०, ९।

३२ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ १ २ २र १र र
हितयेसियाऽ२३मा३। हाउ। ३। आयुश्चक्षुर्ज्योतिः।

२र १ २ १ ३ ५र र ३ १ १ १
औहोवा। ई२। या२३४। औहोवा। ई२३४५

॥ १२* ॥ ४

आद्ये ऋचौ चतुष्पादे ह्येकपादयुतान्तिमा।

शौनःशेपी गार्त्समदी वामदेवीति ताः क्रमात्।

वारुणी पावमानी च वैश्वदेवीति संस्मृताः॥

हे "वरुण!" † "उत्तमम्" उत्कृष्टं शिरसि बद्धं "पाशम्" "अस्मद्" अस्मत्तः "उच्छ्रथाय" उत्कृष्टं शिथिलं कुरु। "अधमं" निकृष्टं पादेऽवस्थितं पाशम् "अव श्रथाय" अवाधस्तात् शिथिलीकुरु। "मध्यमं" नाभिदेशगतं पाशं "विश्रथाय" वियुज्य शिथिलीकुरु। "अथ" अनन्तरं हे "आदित्य" अदितेः ‡ पुत्र!

---

* आ० गा० १प्र०१, २, १२।

† "दक्षस्य वादिते जन्मनि व्रते राजाना मित्रावरुणा विवाससि। अतूर्त्त पन्थाः पुरुरथो अर्यमा सप्तहोता विषुरूपेषु जन्मसु (ऋक् १०म० ६, ४, ४)"—इति मन्त्रलिङ्गात्—"अहोरात्रं मित्रावरुणौ (३का० ११ख० २३ख०)"—नैरुक्तभाष्याच्च मित्रशब्देन दिवा, वरुण-शब्देन च रात्रिः सुग्रहः। "वरुणः वृणोतीति सतः (३का० १०अ०१३ख०)"—इति व्युत्पादनात् सर्वेषां घटपटादीनां तमोरूपेण आवरकस्य।

‡ "अदितिरदीना * * 'अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः। विश्वे देवा अदितिः पञ्चजना अदितिर्जातमदितिर्जनित्वम्'—इत्यदितेर्विभूतिमाचष्ट एनाम्यदीनानीति वा"—इति नैरुक्तम् २का० ४ख० २२-२३ख०। दितिः खण्डनं तदभावोऽदितिरिति निष्पन्नोऽर्थो भाष्यादि-लभ्यः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

१ २ ३ १र २र　　　२
त्वयावयम्पवमानेनसोम

१ २ ३ १र २र　　३ १ २
भरेकृतंविचिनुयामशश्वत् ।

१ २ ३ १र २र　　　३
तन्नोमित्रोवरुणोमामहन्ता

१ २ ३ १ २　३ २ ३ २
मदितिःसिन्धुःपृथिवीउतद्यौः ॥ ५ ॥ ५*

२ र १　　१　३र २　५ २
† हुपायपृष्ठ । पा । ओहा । ई३या । ( एवं त्रिः )

२र　　र र१　२　२र　　र १　२
त्वयावयम्पवमानेनसोमा । भरेकृतंविचिनुयामशाश्वात् ।

३र　र　रर१　२　　२　　र
तन्नोमित्रोवरुणोमामहान्ताम् । अदितिःसिन्धुःपृथिवी

वरुण ! "वयं" शुनःशेपाः "तव" व्रते त्वदीये कर्मणि "अदितये" खण्डन-राहित्याय "अनागसः" अपराध-रहिताः "स्याम" भवेम ॥

"अथादित्यव्रतेवयन्तव"-"अथावयमादित्यव्रतेतव"—इति साम्न ऋचः पाठभेदः ॥ ४ ॥ ४

---

* ऋ० ७, ४, २२, १ ।　　† "अपां सर्पसाम"—इति आ० ब्रा० ३, २, १२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २ २ र १ १र २ ऽ २
उतार्द्यौः। हुपायपृह्व। पा। ओहा। इड्या।

२ र १ ३र २ १ ३
२। हुपायपृह्व। पा। ओहा। ई२। या२३४।

५र र २र १ २र १ १ १ १ १
औहोवा। ए। सुवः। २। ए। सुवा२३४५ः।

॥ ७* ॥

२ र १ १ २र २ २ र र र
हुपायपृह्व। पा। ओहा। (एवं त्रिः)। त्वयावयम्पवमानेन

१ २ २र र १ २ २र र
सोमा। भरेकृतंविचिनुयामशश्वत्। तन्नोमित्रोवरु

र र १ २ र १ २
णोमामहान्ताम्। अदितिःसिन्धुःपृथिवीउता। द्यौः।

२ र १ १र २ २ र १ २र
हुपायपृह्व। पा। ओहा। २। हुपायपृह्व। पा।

१ १ ५र र १ २र १
ओ२। हा२३४। औहोवा। सुवः। ए१। सुवः।

३ १ १ १ १
ए२३४५॥ ८†॥ ५

*,‡ सा० गा० १५० १, १, ७-८। † "समुद्रस्य सर्पंसास"—इति सा० ब्रा० १,२,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



### अथ षष्ठी ।

३ १२ २२ ३२उ ३ २
इमंवृषणङ्कृणुतैकमिन्माम् ॥ ६ ॥ ६

३ २२ ३२ २　　　३ २　　१　　३ २
* इमाऔवा । ३ । इमा३ । औइ । २ । इमा

१　　५　१२२ ३२ २　　३ २　　१
३ । औ२३४वा । वृषाऔवा । ३ । वृषा३ । औइ ।

हे "सोम !"† पवमानेन पवित्रेण पूयमानेन "त्वया" सहायेन "भरे" [ सङ्ग्राम-नाम ( नै०२,१७,६) ] सङ्ग्रामे "प्रभृद्" बहु "कृतं" कर्तव्यं "वयं" "विचिनुयाम" विशेषेण कुर्याम । यस्मात्तव साहाय्येन कर्माणि कुर्मः "तत्" तस्मात्, अस्मान् "मित्रः वरुणः अदितिः" एतन्नामिकाः । "सिन्धुः"‡ एतदभिधाना । तथा "पृथिवी" "उत" अपिच "द्यौः" । एते मित्रादयः "नः" अस्मान् "मा" "महन्तां" पूजयन्तु धनादिदानेन ॥ ५ ॥ ५

---

* "वृषा"—इति था० ब्रा० ३,२,१२ ।

† "सोमः सुनोतेः यदेन मभिषुण्वन्ति । बहुलमस्य नैघण्टुकं वृत्तमाश्चर्यमिव प्राधान्येन । तस्य पावमानीषु निदर्शनायोदाहरिष्यामः"—इत्यादि नैरुक्तम् एका० ११ख० २ख० ।

‡ सिन्धुः समुद्रः । समुद्र इति अन्तरिक्षनामसु पञ्चदशम् पदम् नि० १, २ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

२ ३ १ २ ३ १ २ ३ १ २ २ १ २
सनइन्द्रायजयज्यवेवरुणायमरुद्भ्यः ।

३ १२ ३२
वरिवोवित्परिस्रव ॥ ७ ॥ ७*

३२ १ ५ ३ २२ ३२ ३२ ३२ ३२
२। वृषा३। ओ२३४वा। णङ्कृणावता। एका ओ

२ ३२ २ १ ३२ २ १ ५
वा। एका३। ओइ। २। एका३। ओ२३४वा।

२ ३ १ १ १
इन्मा२३४५म् ॥ १३ † ॥ ६

१ ८ २ २२ १२ २ २
‡ एऊ वा । तेजातमन्धसोदिविसद्भूमिया २द

१ १ १ २ २ २ १ २
दाइ। इडा। उग्रꣳशर्ममहा१ई आ३वाः। सानः।

पूर्वस्या ऋचि प्रकृता हे मित्रादयो देवाः ! यूयम् "एकम्" अद्वितीयं दानकर्मणि "इमं" सोमं "वृषणं" कामाना मभिवर्षकं "कृणुत" कुरुत । तथा "इमां" क्रियां फलाभिवर्षिकां कुरुत ॥

६ ॥ ६

---

* ऋ० ७, १, १९, १ ।

† आ० ग्रा० १प० २,१, १३ ।

‡ "आकारवर्णम्"—इति आ० ग्रा० १,२,१३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र　र　र　१　१　१　र
इन्द्राययज्ज्यवेवरुणायमरु २द्भियः । इडा । वरिवोवि

२　२　२　१　२　१र　र　र　र
त्परा१इखा३वा । आइना । विश्वान्ययआयुस्नानिमानुषा

१　र　र　१　१　२
२णाम् । इडा । सिषासन्तोवना२३ चोइ । माहा३१उ

१　१　१११ १
वा२३ । इट् । इडा२३४५ ॥ १८ * ॥ ७

गायत्री पावमान्यौ तु स्न इत्यादिके ऋचौ ।

अमहीयुस्तयोरेवं छन्दोदैवतनिर्णयः ॥

हे सोम ! † "सः" "नः" "वरिवोवित्" धनस्य लम्भकस्त्वं "नः" अस्माकं "यज्ज्यवे" यष्टव्यायेन्द्राय "वरुणाय" ‡ "मरुद्भ्यः" ¶ च "परिस्रव" धारया चर ॥ ७ ॥ ७

---

* प्रा० पा०१प० २, १, १९ ।

† "अथैषा परा भवति चन्द्रमसो वैतस्य वा"—इति नि० ३का० ११ख० ४ख० ।

‡ 'वरुणः कवन्धं प्र-ससर्ज ( ऋ०५,६,१३,२ )'—इत्यादि-मन्त्र-लिङ्गात् इह वरुणो मेघ-वर्षण-हेतुभूतः । "कवन्धोमेघम्"—इत्यादि निरु०दै०१०,४ ।

¶ "मरुतो मितराविणो वा, मितरोचिणो वा, महद्द्रवन्तीति वा इति नैरुक्तम् २का० ११ख० १३० । 'वायु वै क्षेपिष्ठा देवता'—इति च श्रूयते । ततो मरुतो वायव इति सिद्धान्तः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी।

३ १र २र १२उ १ २ ३ १ २
एनाविश्वान्यर्य आद्युम्नानिमानुषाणाम्।

१ २
सिषासन्तोवनामहे॥ ८॥ ८

१र २ र र र १ २ २र
* हाउ। ३। उहातिजातमार२३न्धसा३ः। हाउ। ३।

१ र १ १ २र २ १
दिविसद्भूमियार२३ंददा३इ। हाउ। ३। उग्रं९ शर्म महार२३इ

२ १ ३ ५ २र २ र १
अवाउ। वा३। ई२३४डा। हाउ। ३। सनइन्द्रायया

१ २र १ र १ १ २र
२३ज्यवा३इ। हाउ। ३। वरुणायमरु२३द्भ्रियाः। हाउ।

२ र १ २ २ ३ ५ २र
३। वरिवोवित्परा२३इस्त्रवाउ। वा३। इ२३४डा। हाउ।

रर र १ २ २र २ र र
३। एनाविश्वानिया२३र्य आ३। हाउ। ३। द्युम्नानिमा

१ २ २र २ र र १ १
नुषार२३णा३म्। हाउ। ३। सिषासन्तोवना२३महाउ।

१ १ ११११
वा३। इट्। इडा२३४५॥ १२ †॥ ८

---

* "अपर्त्येम"—इति आ० ग्रा० १,२,१२।

† आ० गा० २५० २, १,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

३ १ २   २ २ ३ २ ३
अहमस्मिप्रथमजाऋतस्य
१ २ ३ १ २ ३ १ २ ३ १ २
पूर्वन्देवेभ्योअमृतस्यनाम।
२ ३ १ २ ३ २उ ३ १ २
योमाददातिसइदेवमाव
३ २उ ३ १ २ ३ १ २
दहमन्नमन्नमदन्तमद्मि ॥ ९ ॥ ९

॥ प्रथम-दशति ॥

२र   १र र २   २ १   १र २र
* हाउ। ३। सेतूंष्तर। ३। दुस्त। रान्। ३। दाने
१र र २   २र   र १
नादानम्। ३। हाउ। ३। अहमस्मिप्रथमजाऋतार३
२ १ १ १ १   २र   १र र २   २ १
स्यार२३४५। हाउ। ३। सेतूंष्तर। ३। दुस्त। रान्। ३।

"एना" एनेनान्नेन सोमेन "मानुषाणां" मनुष्याणां "वि-श्वानि" "द्युम्नानि" अन्नानि "अर्यः" अभि गच्छन्तः † "सिषा-सन्तः" सम्भक्तुमिच्छन्तश्च वयं "वनामहे" भजामहे ॥ ८ ॥ ८

---

* स्वर्ग्यम्। सेतुसाम। पुरुषगतिर्वा। विशोकं वा—इति आ०ब्रा० ३,२,१३।

† "अर्यः"—इति ईश्वरनामसु द्वितीयं नैघण्टुकम् २,२२। इह तु ऋगता-वित्यस्य रूपमिदम्।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र २र १र २ १ र २र १र २र
अक्रोधिनक्रोधम्। २। अक्रोधिनक्रोधम्। हाउ। ३।

२र र र १ २ १ १ १ १ २ र
पूर्वन्देवेभ्योअमृतस्यना २ ३ मा २ ३ ४ ५। हाउ। ३।

१रर २ २ १ २ १ र २र
सेतूंस्तर। ३। दुस्त। रान्। ३। अद्रयाश्रद्धाम्। ३।

२र र र र १ २ १ १ १ १ २र
येमाददातिसइदेवमा २ ३ वा २ ३ ४ ५ त्। हाउ। ३।

१रर २ २ १ २ १ र र २
सेतूंस्तर। ३। दुस्त। रान्। २। सत्येनानृतम्। ३।

२र २ १ २ १ १ १ १ २१
हाउ। ३। अहमन्नमन्नमदन्तमा२३द्मी२३४५। हाउ।

२र१र २र१ २ १ १ २
३। वा। एषागतिः। ३। एतदमृतम्। ३। स्वर्गच्छ। ३।

१र २ १रर २र१र २ १ १ १ १ १
ज्योतिर्गच्छ। ३। सेतूंस्तीर्त्वाचतुरा२३४५ः॥ २४ *॥ ९

त्रिष्टुभा अन्नदेवता आत्मान मेवाह आत्मा एव ऋषिः। "देवेभ्यः पूर्व" अग्नि-वरुणादि-देवेभ्यः पुरा "अहम्" "अन्नम्" देवता "अमृतस्य" विनाश-रहितस्य "ऋतस्य" सत्यस्य पर-ब्रह्मणः सम्बन्धिनी "प्रथमजा अस्मि नाम" प्रथमत एवोत्पन्ना

* आ० १प० २, १, २४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवामि खलु । "यः" पुमान् "मां ददाति" अन्नरूपां माम् अति-थ्यादिभ्यो ददाति "स इत्" स एव "एवं" परिदृश्यमान-प्रकारेण "आवत्" अवति सर्वान् प्राणिनो रक्षति । यस्तु लोभ-युक्तः सन् प्राणिभ्योऽन्नमदत्वा स्वय मेव तदन्नमत्ति "अन्नम् अदन्तं" नाना-विधान्न-भक्षकं तं लोभिनम् अहमन्नम् अन्न-देवता "अद्मि" भक्षयामि विनाशयामीत्यर्थः ॥ ८ ॥ ९ *

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

* अत्राह यास्कः—व्याख्यातं दैवतं यज्ञाङ्गं चाथात ऊर्ध्वमार्गगतिं व्याख्यास्यामः ॥ सूर्य आत्मेत्युदितस्य हि कर्मद्रष्टायैतदनुप्रवदन्त्यथैतं महान्तमात्मानमेषर्ग्गणः प्रवदन्ती-न्द्रं मित्रं वरुणमग्निमाहुरित्यथैष महानात्मात्मजिज्ञासयात्मानं प्रोवाचाग्निरस्मि जन्मना जातवेदा इहमस्मि प्रजमजा इत्येताभ्याम् ॥ १ ॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतम् म आसन् । अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम ॥ अह-मस्मि प्रथमजा ऋतस्य पूर्वं देवेभ्यो अमृतस्य नाम । यो मा ददाति स इदेवमावा-दहमन्नमन्नमदन्तमद्मि इति स ह ज्ञात्वा प्रादुर्बभूवैवन्तं व्याजहाराय तमात्मानमध्या-त्मजमन्तिकमन्यस्मा आचचक्ष्व इति ॥ २ ॥ अपश्यं गोपामनिपद्यमानमा च परा च पथि-भिश्चरन्तम् । स सध्रीचीः स विषूचीर्वसान आ वरीवर्त्ति भुवनेष्वन्तः । आवरी-वर्त्ति भुवनेष्वन्तरित्यथैष महानात्मा सत्वलक्षणस्तत्परं तद्ब्रह्म तत्सत्यं तत्सलिलं तदव्यक्तं तदस्पर्शं तदरूपं तदरसं तदगन्धं तदमृतं तच्छुक्लं तन्निष्ठो भूतात्मा । सैषा भूत-प्रकृतिरित्येके तत् क्षेत्रं तद् ज्ञानात् क्षेत्रज्ञमनु प्राप्य निरात्मकमथैष महानात्मा त्रिविधो भवति सत्त्वं रजस्तम इति सत्त्वं तु मध्ये विशुद्धं तिष्ठत्यभितो रजस्तमसी इति । कामद्वेषस्तमइत्यविज्ञातस्य विशुध्यतो विभूतिं कुर्वतः क्षेत्रज्ञ-पृथक्त्वाय कल्पते प्रतिभाति लिङ्गो महानात्मा तमोलिङ्गो विद्या प्रकाशलिङ्गस्तमोपि निष-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यत्लिङ्ग आकाशः ॥ ३ ॥ आकाशगुणः शब्द आकाशाद्वायुर्द्विगुण स्पर्शेन वायो ज्योतिस्त्रिगुणं रूपेण ज्योतिष आपश्चतुर्गुणा रसेनाद्भ्यः पृथिवी पञ्चगुणा गन्धेन पृथिव्या भूतग्रामस्थावरजङ्गमास्तदेतदहर्युगसहस्रं जागर्त्ति तस्यां ते सुषुप्स्यन्नङ्गानि प्रत्याहरति भूतग्रामाः पृथिवी मपि यन्ति पृथिव्यप आपो ज्योतिषं ज्योतिर्वाय वायुराकाश माकाशो मनो मनो विद्यां विद्या महान्त मात्मानं महानात्मा प्रतिभां प्रतिभा प्रकृतिं सा स्वपिति युगसहस्रं रात्रिस्तावेताक्शोरात्रावजस्रं परिवर्त्तेते स कालस्तदेतदहर्भवति। युगसहस्रपर्यन्त महर्यद् ब्रह्मणो विदरात्रिं युगसहस्रान्तां तेहोरात्रविदो जनाइति ॥ ४ ॥ तं परिवर्त्तमान मन्योनुप्रवर्त्तते स्रष्टा द्रष्टा विभ्रान्तिमावीह मिति गम्यते स मिथ्यादर्शनेदं पावकं महाभूतेषु चिरोणाकाशाद्वायोः प्राणश्चक्षुश्च वक्तारश्च तेजसोद्भ्यः स्वेचं पृथिव्या मूर्त्तिः। पार्थिवांस्त्वष्टौ गुणान्विद्यात् त्रीन्मातृतस्त्रीन् पितृतो ऽस्थिस्नायुमज्जानः पितृतस्त्वङ्मांसशोणितानि मातृतोन्नं पान मित्यष्टौ सोयं पुरुषः सर्वमयः सर्वज्ञानोपि क्लृप्तः ॥ ५ ॥ स यद्यनुरुध्यते तद्भवति। यदि धर्ममनुरुध्यते तद्देवो भवति यदि ज्ञानमनुरुध्यते तदमृतो भवति यदि काम मनुरुध्यते सं च्यवते। इमां योनिं सन्दध्यात्तदिदमव मतस्— श्लेष्मा रेतसः सम्भवति श्लेष्मणो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नावोस्थीन्यस्थिभ्यो मज्जा मज्जातो रेतस्तदिदं योनौ रेतः सिक्तं पुरुषः सम्भवति। शुक्रातिरेके पुमान् भवति शोणितातिरेके स्त्री भवति द्वाभ्यां समेन नपुंसको भवति शुक्रभिन्नेन यमो भवति शुक्रशोणितसंयोगान्मातृपितृसंयोगाच्च तत् कथमिदं शरीरं परं संयम्यते सौम्यो भवत्येकरात्रोषितं कललं भवति पञ्चरात्राद्बुद्बुदाः सप्तरात्रात्पेशी द्विसप्तरात्रादर्बुदः पञ्चविंशतिरात्रः स्वस्थितो घनो भवति मासमात्रात् कठिनो भवति द्विमासाभ्यन्तरे शिरः सम्पद्यते मासत्रयेण ग्रीवाव्यादेशो मासचतुष्केण त्वग्व्यादेशः पञ्चमे मासे नखरोमव्यादेशः षष्ठे मुखनासिकाक्षिश्रोत्रं च सम्भवति सप्तमे चलनसमर्थो भवत्यष्टमे बुध्याध्यवस्यति नवमे सर्वाङ्गसम्पूर्णो भवति ॥ मृतश्चाहं पुनर्जातो जातश्चाहं पुनर्मृतः। नाना योनि सहस्राणि मयोषितानि यानि वै ॥ आहारा विविधा भुक्ताः पीता नानाविधाः स्तनाः। मातरो विविधा दृष्टाः पितरः सुहृदस्तथा ॥ अवाङ्मुखः पीड्यमानो जन्तुश्चैव समन्वितः। साङ्ख्यं योगं समभ्यस्येत् पुरुषं वा पञ्चविंशकमिति ॥ ततश्च दशमे मासे प्रजायते जातश्च वायुना स्पृष्टस्तन्न स्मरति जन्ममरणम्। अन्ते च



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शुभाशुभं कर्मैतच्छरीरस्य प्रामाण्यम् ॥ ६ ॥ अष्टोत्तरं सन्धिशतं अष्टाकपालं शिरः सम्पद्यते षोडश वपापलानि नव स्नायुशतानि सप्तशतं पुरुषस्य मर्मणा मर्द्धचतस्रो रोमाणि कोट्यो हृदयं ह्यष्टकपालानि द्वादशकपालानि जिह्वा वृषणौ ह्यष्टसुपर्णौ तथोपस्थ-उदपायवेतन् मूत्रपुरीषं कस्मादाहारपानसिक्तत्वादनुपचितकर्माणावन्योन्यं जायेते इति। तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च महत्यज्ञानतमसि मग्नो जरामरण-क्षुत्पिपासा-शोक-क्रोध-लोभ-मोह-मद-भय-मत्सर-हर्ष-विषादेर्ष्यासूयात्मकैर्द्वन्द्वैरभि-भूयमानः सोऽस्मादार्जवं जवीभावामात्मनिर्मुच्यते सोऽस्मान्महाभूमिकावच्छरीरान्नि-मेषमात्रैः प्रक्रम्य प्रकृतिरधिपरीत्य तैजसं शरीरं कृत्वा कर्मणोऽनुरूपं फलमनु-भूय तस्य सङ्क्षये पुनरिमं लोकं प्रतिपद्यते ॥ ७ ॥ अथ ये हिंसामाश्रित्य विद्यामुत्सृज्य महत्तपस्तेपिरे चिरेण वेदोक्तानि वा कर्माणि कुर्वन्ति ते धूममभि सम्भवन्ति धूमाद्रात्रिं रात्रेरपक्षीयमाणपक्ष मपक्षीयमाणपक्षाद्दक्षिणायनं दक्षिणायनात् पितृलोकं पितृलोकाच्चन्द्रमसं चन्द्रमसो वायुं वायोर्वृष्टिं वृष्टेरोषधयश्चैतद्भूत्वा तस्य सङ्क्षये पुनरेवेमं लोकं प्रतिपद्यते ॥ ८ ॥ अथ ये हिंसामुत्सृज्य विद्या माश्रित्य महत्तपस्तेपिरे ज्ञानोक्तानि वा कर्माणि कुर्वन्ति तेऽर्चिरभि सम्भवन्त्यर्चिषोऽहरह्न आपू-र्यमाणपक्ष मापूर्यमाणपक्षादुदगयनमुदगयनाद्देवलोकं देवलोकादादित्यमादित्या-द्वैद्युतं वैद्युतान् मानसं मानसः पुरुषो भूत्वा ब्रह्मलोक मभिसम्भवन्ति न ते पुनरावर्त्तन्ते शिष्टा दन्दशूका यत इदं न जानन्ति तस्मादिदं वेदितव्य मथाप्याह ॥ ९ ॥ न तं विदाथ य इमा जजानान्यद्युष्माक मन्तरं बभूव। नीहारेण प्रावृता जल्प्या चासुतृप उक्थशासश्चरन्ति ॥ न तं विद्यथा विदुषो यमेवं विद्वांसो वदन्त्यक्षरं ब्रह्म पश्यति मन्यद्युष्माक मन्तर मन्यदेषा मन्तरं बभूवेति नीहारेण प्रावृतास्तमसा जल्प्या चासुतृप उक्थशासः प्राणं सूर्यं यत्पथगामिनश्चरन्त्यविद्वांसः चेतश्च मनु प्र वदन्त्यथा ये विद्वांसः चेतश्चोतु कल्पते तस्य तपसा सहाप्रमाद मेत्ययाप्रव्यो भवति तेना सन्ततमिच्छेतेन सुखी मिच्छेदेष हि सखा श्रेष्ठः सञ्जानाति भूतं भवद्भविष्यदिति। ज्ञाता कस्माज्जायते सखा कस्मात्सख्यते सह भूतेन्द्रियैः शेरते महाभूतानि सेन्द्रियाणि प्रज्ञया कर्म कारयति इति वा तस्य तपः प्रतिष्ठाशील सुपशम आत्मा ब्रह्मेति स ब्रह्मभूतो भवति साक्षिमात्रो व्यवतिष्ठते बन्धो ज्ञानहतः ॥"—इति १४,१—१० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीय-खण्डे—

सैषा प्रथमा।

२ ३१२ ३ २ ३ १ २
त्वमेतदधारयः कृष्णासुरोहिणीषु च।
१२ ३ २३ १ २
परुष्णीषु* रुशत्पयः॥ १॥ १० †

२र र २र१र १ २ २ ५
‡ हाउत्वमेतात्। एतदेतात्। आधारा२३४याः।
२१र र २ २ २ २१ २ २१ १
कृष्णासुरोहिणा१इषू३चा। परुष्णा२३ईषू। रुशन्। पा
३ ५र र
२या२३४औहोवा॥ २०॥

२र १ २ १ १ २ १
त्वमेतद्धोहाइ। होइ। आधा१राया२ः। हाइ।
१ २ १ १ २ १
कार्ष्णा१सुरो२। होइ। हाइणी१षुचा२। होइ।
१ ७ १ २१ १ २ ५रर
पारुष्णाइषू२। होइ। रुशत्। पा२या२३४औहोवा॥२१॥
२र र १ १ १
आईत्वमेतात्। आ। आधा१राया२ः। आईका
२ १ २ १ १ ७
र्ष्णा१सुरो२। आइहाईणी१षुचा२। आईपारुष्णा

° "पुरुष्णीषु"—इति क०। † ऋ० ७,६,२२,३।

‡ "नौषि वार्षाहराणि"—इति आ० ग्रा० १, २, १५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ १ ३ ५र र २ १
इषू२। आइ। रुशत्। पा२या२३४औहोवा। अभि

र २ १ २ १ र २र १ र ११ २ १ २ १ २ र
स्फूर्जयं द्विषः। समोषाभिस्फूर्जयं द्विषम्ः। अस्मभ्यङ्गातु

१ २ ३ १ १ १ १
वित्तमा२३४५स ॥ २२ * ॥ १०

श्रुतकक्षऋषिरिन्द्रो गायत्री। अस्य सामर्थ्य मेवोपपादयति—हे इन्द्र! "कृष्णासु" कृष्णवर्णासु गोषु तथा "रोहिणीषु च"["वर्णा दनुदात्तान्तोपधात्तोनः (४,१,३९)"-इति ङीप्†] "परुष्णीषु" रोहितवर्णासु ["परुष्णी पर्ववतीति यास्कः‡] पर्वशः पर्वशो नानावर्णासु च गोषु "रुशत्" [रोचतेर्दीप्तिकर्मणः¶] दीप्यमानं श्वेतम् "एतत्" परिदृश्यमानं "पयः" क्षीरं त्वम् "अधारयः" धारयसि। तस्मात् तद्बलं पूजयाम इति समन्वयः॥ १ ॥ १०

* आ० २प० २, २, २०—२२।

† अनुदात्तस्तु "वर्णानान्तणतिनितान्तानाम् (२ पा० १० सू०)"—फिट् सूत्रेण।

‡ "इरावती परुष्णीत्याहुः पर्ववती भास्वती कुटिलगामिनी"—इति निरु० ९,२६।

¶ "रुशदिति वर्णनाम रोचतेर्ज्वलतिकर्मणः। सूर्यमस्या वत्सं माह साहचर्याद् रसहरणाद्वा"—इति यास्कः नै० २,२०—नै० ६,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

१ २   ३ २ ३ १ २ ४ ३ २
अरूरुचदुषसःपृश्निरग्रिय

३ १ २  ३ १ २   ३ २
उक्षामिमेतिभुवनेषुवाजयुः।

३  १ २   ३ १ २
मायाविनोममिरेअस्यमायया

३ १ २  ३ २ ३ २ ३ १ २
नृचक्षसःपितरोगर्भमादधुः॥ २ ॥ ११ *

२र  १ २  १ र २
† हाउ। ३। स्वर्विश्वम्। ३। अरूरुचत्।

२ १  १  २र  १ २
।३। उषसःपृश्निरा२ग्रायाः। हाउ। ३। स्वर्विश्वम्। ३।

१ र २ र  २ १ र  १  २र  १
उक्षामिमे। ३। तिभुवनेषुवा२जायूः। हाउ। ३। स्वर्वि

२  १र र २  १र  १  २र
श्वम्। ३। मायाविनः। ३। ममिरेअस्यमा२याया। हाउ

१ २  १ २  २ १ र  १
।३। स्वर्विश्वम्। ३। नृचक्षसः। ३। पितरोगर्भमा२दा

---

* उ० २,२,१६,२।

† "स्वर्ज्योतिषी द्वे"—इति ब्रा० ब्रा० ३,२,१६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र　　　१　२　　　१　　२　　२
धूः । हाउ । ३ । स्वर्विश्वम् । २ । सुवा२३र्विश्वाउ । वा३ ।
२　　१ १ १ १ १
ए३ । सुवा२३४५ः ॥ ९* ॥

२र　　　१र　　२　　　१ र२　　　१
हाउ । ३ । ज्योतिर्विश्वम् । ३ । अरूरुचत् । ३ । उष
२　　४ ५　　२र　　　१र　　२
सःपृश्निरा३ । अग्राः । हाउ । ३ । ज्योतिर्विश्वम् । ३ ।
१ र　२र　　　१ र　२　　४ ५　　२र
उक्षामिमे । ३ । त्रिभुवनेषुवा३ । आयूः । हाउ । ३ ।
१र　　२　　　१र र　२　　　१ र　　२
ज्योतिर्विश्वम् । ३ । मायाविनः । ३ । ममिरेअस्यमा३ ।
४ ५　　२र　　　१र　　२　　　१ र
या या । हाउ । ३ । ज्योतिर्विश्वम् । ३ । नृचक्षसः । ३ ।
२ १ र　　२　४ ५　　२र　　　१र　　२
पितरोगर्भमा३ । दाधूः । हाउ । ३ । ज्योतिर्विश्वम् । २ ।
१र　　　२　　　२　　१र ३ १ १ १ १
ज्योता२३इर्विश्वाउ । वा३ । ए३ । ज्योती२३४५ः ॥१०†॥११

अरूरुचदिति त्वेतां पवित्रो दृष्टवानृषिः ।
पवमानो देवता स्याच्छन्दश्च जगती स्मृता ॥

"उषसः" सम्बन्धी "पृश्निः" आदित्यः ‡ [ "पृश्निरादित्यो

*,† ग्रा० गा० २प० ३, १, ९-१० ।

‡ "तथापि निगमो भवति 'सस्तुर्जारः शृणोतु नः'-इत्युषस सख सखार माद साहचर्य्यादसवरणाद्वापि"—इति निरु० नै० ३,१६ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भवति प्राप्नुत एनं ( नै० २,१४ ) वर्णः"-इति नैरुक्ताः ] "अग्नियः" अग्नयी मुख्यः सोमः * "अरूरुचत्" रोचयति। सः "उक्षा" जलस्य सेक्ता पर्जन्यः सन् "मिमेति" भृशं शब्दायते। "भुवनेषु" भूतजातेषु "वाजयुः" तेषा मन्न मिच्छन्। "मायाविनः" माया प्रज्ञा तद्वन्तो देवाः "अस्य" सोमस्य "मायया" प्रज्ञया "ममिरे" निर्मितवन्तः [ सोमस्य एकैकांश-पान-वशात् अग्न्यादयः स्व-स्व-व्यापारेण जगत् सृजन्तीत्यर्थः ]। तस्यास्य मायया "नृचक्षसः" नृणां द्रष्टारः "पितरः" पालकाः देवाः † अङ्गिरसः‡ पितरो वा "गर्भम्" "आ दधुः" धारयन्ति ओषधीषु। [ स चात्र सूर्य्यात्मा सोमः सूयते। सूर्यरश्म्यनुगमाधीनवर्द्धनाच्चन्द्रस्य। यद्वा। अयमुषसः पृश्निः सविता अरूरुचत् रोचयति रोचते वा सर्वं श्लिष्टं समानं तत् सम्बन्धिनो नृचक्षसो नृणां द्रष्टारः पितरो जगद्रक्षकाः रश्मयो गर्भ मादधुर्वृष्ट्यर्थम् ॥

"मिमेतिभुवनेषु"—"बिभर्तिभुवनानि"—इति साम्न ऋचः पाठ-भेदः ॥ २ ॥ ११

---

* "अग्रगमनेनेति वा ।गरणेनेति वापसम्पादिन इति वा। अपिवाग्र मित्येतदनर्थक मुपबन्ध माददीत"—इति निरु० नै० ६,१६।

† "पिता पाता वा पालयिता वा"—इत्यारभ्य "पिता दुहितुर्गर्भं दधाति पर्जन्यः पृथिव्याः"-इत्यन्तं यास्कः नै० ४,२१।

‡ "अङ्गारेष्वङ्गिराः। अङ्गारा अङ्कना अञ्चना"-इतिनिरु० नै० ३,१७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ ३ २उ ३ २ ३ १ २ ३ १ २ ३ १ २
इन्द्र इद्धर्योः सचा सम्मिश्ल आ वचोयुजा ।
१ २ ३१ २ ३ १ २
इन्द्रो वज्री हिरण्ययः ॥ ३ ॥ १२ *

१ २ १२र १ र २१ १ १ ११र २
† इन्द्रमिद्गाथिनो बृहत् । ए२ । इन्द्रमर्कॅभिः । अर्कि-
१ १र र र र र र र र र २र १ १ २
णोवा । औहोवा औहोवा औहोवा । औहोहाइ । ३। इन्द्रं
र र १ २ २ ५ २र १ र र
वाणीरनू२३षताउ । वा३ । ई२३४डा । औहोवा । ३ । औ
१ २ २ १ २ २ र १
होहाइ । ३ । इन्द्रइद्धर्यो२३ःसचा३ । सम्मिश्ल आ वचो२३यु

हयोर्मधुच्छन्दा वैश्वामित्रः द्रष्टा स्याद् गायत्री छन्दः इन्द्रो देवतेति । "इन्द्र इत्" इन्द्र एव "हर्योः" हरिनामकयोरश्वयोः ‡ "सचा" सह युगपत् "आ सम्मिश्लः" सर्वतः सम्यङ्मिश्रयिता । कीदृशयोः हर्योः ? "वचोयुजा" इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः सुशिक्षितयोरित्यर्थः । अयम् "इन्द्रः" 'वज्री' वज्रयुक्तः "हिरण्ययः" हिरण्मयः ¶ सर्वाभरणैरुपेत इत्यर्थः ॥ ३ ॥ १२

---

* उ० २, १, ८, २=ऋ० १, १, १९, २—३ ।

† "यण्वम्"—इति षा० ब्रा० ३,२,१३ ।

‡ "हरी इन्द्रस्य"—इति नि० नै० १, १५, १ ।

¶ "ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि"—इति पा० ६, ४, १७५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

२ ३१२ ३१२
इन्द्रवाजेषुनोवसहस्रप्रधनेषुच।

२ ३२३१ २३ १ २
उग्रउग्राभिरूतिभिः॥ ४॥ १३ *

३ २र र र २र १ २ २ र र १
जा३। औहोवा। ३। औहोहाइ। ३। इन्द्रोवज्रीहि

२ ५ २र र र २र
रा२३ण्ययाउ। वा३। ई२३४डा। औहोवा। ३। औ

१ २ २ र र१ २
होहाइ। ३। इन्द्रवाजेषुनो२३अवा३। सहस्रप्रधना

२ २र र र २र १ २ २ र
२३इषुचा३। औहोवा। ३। औहोहाइ। ३। उग्रउग्रा

१ २ २ १ १११
भिरू२३तिभाउ। वा३। इट्। इडा२३४५॥ ११॥ १२,१३

हे "इन्द्र"! "उग्रः" शत्रुभिरप्रधृष्यस्त्वं "उग्राभिः" अप्रधृष्याभिः "ऊतिभिः" अस्मद्द्वेष्यपरपत्त्वाभिः "वाजेषु" युद्धेषु † "नः" अस्मान् "अव" रक्ष तथा "सहस्रप्रधनेषु च" सहस्रसङ्ख्याक-गजाश्वादि-लाभयुक्तेषु महायुद्धेष्वपि रक्ष॥ ४॥ १३

* ऋ० ८, ८, ३९, १।

† या० गा० २प० २, १, ११।

‡ "वाजे"—इति सङ्ग्रामनामसु द्विचत्वारिंशत्तमं नैघण्टुकम् २, १७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमो ।

१ २ ३ १ २ २ १ २ २ १र
प्रथश्चयस्यसप्रथश्चनामा

२र ३ १ २ ३ २
नुष्टुभस्यहविषोहविर्यत् ।

३ १ २र ३ २ ३ १ २
धातुर्द्युतानात्सवितुश्चविष्णो

३ १ २र ३ १ २
रथन्तरमाजभारावसिष्ठः ॥ ५ ॥ १४ *

१ २ १ २ २ २
† हाउप्राथाः । चयस्यसप्रथः । चना२ । मा३उवा३ ।
२ र १ ३ ५ ३ ५ १र २
ईहा । ३ । ऊवाइ । ओ२३४वा । ई२३४डा । आनुष्टुभस्य
१ २ १ २ २ १२र १
हविषः । हवा२इः । या३उवा ३ । ईहा । ३ । ऊवाइ
३ ५ ३ ५ २र१ र २र १ २
ओ२३४वा । ई२३४डा । धातुर्द्युतानात्सवितुः । चवा-
२ २ २र र ३ ५
२इ । ष्णा३उवा३ । ईहा । ३ । ऊवाइ । ओ२३४वा ।
३ ५ २ ३ २ २र र १ २ २
ई२३४डा । रथन्तरमाजभारा । वसा२इ । ष्ठा३उवा३ ।
२र र १ ३ ५ ३ ५ २
ईहा । ३ । ऊवाइ । ओ२३४वा । ई२३४डा । ए३ ।
१
द्युत् ॥ ५ ॥

---

* ऋ० २, ८, ७, २ ।　　　† "वसिष्ठस्यफौ द्वौ"– इति चा०ब्रा०३,२,२९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ २
प्राथाः। चयस्यसप्रथः। चना२। मा३१उवा२३।
२र र १ र २र ३ ५
इडा। ३। होइ। हो। वाहा३१उवा२३। ई२३४हा।
१र २ १ २ १ २ २र र
आनुष्टुभस्यहविषः। हवा२इः। या३१उवा२३। इडा। ३।
१ र २र ३ ५ २र १ र २र
हाइ। हो। वाहा३१उवा२३। ई२३४हा। धातुर्द्युताना
१ १ १ २र र
त्सवितुः। चवा२इ। ष्णा३। उवा३। इडा। ३।
१ र २र ३ ५ २ १
होइ। हो। वाहा३१उवा२३। ई२३४हा। रथन्तर
र २र र १ २ २ २र र
माजभारा। वसा२इ। ष्ठा३१उवा३इ। इडा। ३।
१ र २र ३ ५ २ १ ३
होइ। होवाहा३१उवा२३। ई२३४हा। ए३। द्यूता
१ १ १ १
२३४५ः॥ ६ †॥ १४

अपश्यत् प्रथइत्येतां त्रिष्टुभं प्रथनामकः।
वैश्वदेवीं भवेदेवं छन्दो दैवतनिर्णयः॥

"यस्य" वसिष्ठस्य "प्रथः" नाम पुत्रः यस्य भरद्वाजस्य "स प्रथः नाम" पुत्रः तयोर्मध्ये "वसिष्ठः" मम पिता "अनुष्टुभस्य" अनुष्टुप् छन्दसा युक्तस्य "हविषः" घर्माख्यस्य "यद्धविः" हविष्टा

---

† आ० गा० २प० ३, २, ५—६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

३ १ २ ३ १ २ ३ २ ३ १ २
नियुत्वान्वायवागह्ययꣳ शुक्रोअयामिते।
१ २ ३ २ ३ २
गन्तासि*सुन्वतोगृहम्॥ ६॥ १५

२र २ १ २ १ २ २ १
†हाउ। ३। शुक्रम्। ३। शुक्रꣳ शुक्रम्। ३। शुक्रꣳ
२ ३ २ १ २ २ र र १ २
शूक्रम्। २। शुक्रꣳ शूक्रम्। नियुत्वान्वाया३वागा१
२ र १ २ २र
हो२। अयꣳ शुक्रा आ३यामा१ता२इ। गन्तासि
१ २ २र २ १ २
सुन्वा३तोगृ१हा२३म्। हाउ। ३। शुक्रम्। ३। शु-
१ २ २ १ २ ३ २ १ २
क्रꣳ शुक्रम्। २। शुक्रꣳ शुक्रम्। शुक्रꣳ शूक्रम्। २

पादकं "रथन्तरं" साम तद्रथन्तरं "धातुः" धाटसञ्ज्ञाद्देवात्‡ "द्युतानात्" द्योतमानात् सवितुश्च¶ विष्णोश्च§ "आजहार" आहृतवान्। [ ह्यग्ह्रोर्भ इति भत्वं रथशब्दोपपदात् तरतेः संज्ञायां भृतृवृजीति खच्। अरुर्द्विषदजन्तस्येति मुमागमः॥ ५॥ १४

---

* "गताषि"—इति ऋ०।

† "शुक्रम्"—इति षा० ग्रा०३,२,२९।

‡ 'धाता-विधाता' सर्वस्य इति नैरुक्तम् ३का० ११ख० १०ख०।

¶ 'सविता सर्वस्य प्रसविता'-इति नैरुक्तम् ३का० १०ख० ३१ख०।

§ 'विष्णु र्विशतेर्वा व्यश्नोतेर्वा'—इत्यादि नैरुक्तम् ३का० ११ख० १५ख०।
एवञ्च विष्णुशब्देन सर्वव्यापी सर्वान्तर्यामीति सिद्धान्तः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २र ३ १ २ ३ १ २
यज्जायथाअपूर्व्य मघवन् वृत्रहत्याय।
१ २ ३ १ २ ३ १ ० ३ १ २र
तत्पृथिवीमप्रथयस्तदस्तभ्नाउतोदिवम् ॥ ७ ॥ १६ *

॥ द्वितीय-दशति ॥

३ २ १ ३ ५र र २र २ १
शुक्रम्। शूर। क्रा२३४। औहोवा। ए। शुक्रम्।
३ ॥ ७ † ॥ १५

नियुत्वानिति गायत्र्या वायुं गृत्समदोऽब्रवीत् ॥

हे "वायो"! ‡ "नियुत्वान्" नियुतो वाहनानि [ वायोः नियुतोरिति ( १,१५,१० ) निघण्टुः ] तैर्युक्तस्त्वं "आगहि" आगच्छ। "अयं" "शुक्रः" दीप्यमानः सोमः ते तुभ्यं "अयामि" [ यामेः कर्मणि लुङि रूपम् ] नियतो गृहीत आसीत् यतः 'सुन्वतः' सोमाभिषवं कुर्वतो यजमानस्य "गृहं" "गन्तासि" यातोसि ॥ ६ ॥ १५

---

* उ० ६, १, १९, १=ऋ० ६, ६, १२, ५—६—७—कण्वे १, २, १६=२, १, ९=२, २,१६।

† आ०गा० २प० ३, २, ७।

‡ 'वायुर्वातेर्वेत्तेर्वास्याद् गति-कर्मणः'—इत्यादि नैरुक्तम् १का० १०१,२ख०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



* एयज्जायथाः । अपूर्विया । हाउ । मघवन्वृ । हाउ । त्रहत्याया । हाउ । ततपृथिवीम् । हाउ । अप्रथयाः । हाउ । एऔहोवादीशाः । तदस्तम्नाः । हाउ । उतोदिवाम् । हाउ । एऔहोवा३ । अस् पया२३४५ः ॥ ९ ॥

एहाउयज्जायथाः । अपूर्विया । होइ । ३ । हाउहाउ- हाउ । मघवन्वृ । होइ । ३ । हाउ३ । त्रहत्याया । होइ । ३ । हाउ३ । ततपृथिवीम् । होइ । ३ । हाउ ३ । अप्रथयाः । होइ । ३ । हाउ३ । एऔहोवादीशाः । तदस्तम्नाः । होइ । ३ । हाउ३ । उतोदिवाम् । होइ । ३ । हाउ३ । एऔहोवा३ । हस पया२३४५ः ॥ १० ॥

० "वायोः षट् सामानि"—इति सा० ब्रा० १, २, १९ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र १र २ र २ र १
एहाउ। औहो२। यज्ञायथा३ः। अपूर्विया। हो

१ १ १ र १ १
ववा२३होइ। मा। घवन्वृत्रहत्याया। होववा२३हो

१ १ र १ १ २र.र
इ। तात्। पृथिवीमप्राथयाः। होववा२३होइ। एऔ

र र १ २ १ १ १ १ र र
होवाटीशाः। होववा२३होइ। तात्। अस्तभ्नाउतो

१ १ २र र र १ र
दिवाम्। होववा२३होइ। एऔहोवा३। हस्इडापया

१ १ १ १
२३४५ः ॥ ११ ॥

१ २ १ २ १र र २ २ १ १
याज्ञायाज्ञा। यथाअपूर्वियाऔ३हो। हा२इया।

२ २ १ र २ २ १ १ २
औ३हो। माघवन्वृत्रहत्यायाऔ३हो। हा२इया। औ३

२ १ र २ २ १ १ २ २
हो। तात्पृथिवीमप्राथयाऔ३हो। हा२इया। औ३हो।

१ र र २ २ १ १ २
तादस्तभ्नाउतोदिवा। मौ३हो। हा२इया। औ

र र २ १ १११
३होवाहाउवा३। पया२३४५ः ॥ १२ ॥

२ १र२ २ १ २ १ २ १ २ १ २
ऊ। वौहो३इ। ३। यज्जायथाः। अर्विपूया। म



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १ २र १ २ १ २ १ २ १ २ १ २
घावन्त्। ऋहत्यायाः। तत्पृथिवीम्। अप्राथयाः। त

१ र १ २ १ २ १ २ १र २ २
दस्तम्भाः। उतोदिवाम्। ऊ। वौहो१इ। २। ऊ।

१र २ ऽ २ २ २ १
वौहो१२। उऊवा३हाउ। वा३। हस्॥ १३॥

२र र २ २ ३ ५ २र १
योरयिंवोरा३यिन्तमाः। योद्युम्ना२३४इर्द्यू। म्नाव

२ २ ५ २र १ २ २
त्तमा२३ः। सोमःस्व२३४ताः। साइन्द्रतायेः३। अस्ति

३ ५ ३ २ १ ऽ ५ ५ ५
स्वा२३४धा। एतेः३। मा२३४दाः। उऊवा६हाउ। वा।

१
अस्॥ १४॥

१र र २ १ २ १ २ १
* हाउहोहाइ। ३। अन्तरिक्षꣳसुवर्दिवञ्जग। न्मा।

१ र र २ १ १र र २ १
(त्रिः)। परात्परमैरय। ता। परात्पर। मैरय। ता।

१ र र २ २ १र ३र २ २ २र २ १र
परात्परमैरय। त। औहोवाहाउ। वा। ए। यज्ञो

२ १र२र १र १ २ १र २र १र र
दिवोमूर्द्धादिवमादनोघर्मोज्योतिः॥ १५॥

* "विष्णोस्त्रीणि स्वरीयाणि"—इति चा० ब्रा० ३, २, १९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र २ १ २ १ २ १
हाउहोहाइ। ३। अन्तरिक्षᳬसुवर्दिवञ्जग। न्मा।
१ र र २ १ १र र २
(त्रिः)। परात्पर मैरय। ता। परात्पर मैरय।
१ १र र २ २ १र ३र २
ता। परात्पर मैरय। त। औहोवाहाउ। वा।
२र २ १ २ १र र २ १र २ १र२र १ र २र
ए। पृथिव्यन्तरिक्षन्द्यौरापःकनिक्रदात्सिन्धुरापोमरुतोमा
र १र र
दयन्ताङ्घर्मोज्योतिः॥ १६॥

१र र १ऽ २ १र र र
हाउहोहाइ (इत्यादिपूर्वपाठः) ता। दिवोमूर्द्धानᳬ
र २ १ २ ३ ५ १ र २ १र र
स मैरयन्। होये३। हो२३४वा। यज्ञोघर्मोज्यो
र २ १ २ ३ ५ १र र
तिः। यज्ञःसमैरयन्। होये३। हो२३४वा। तेजो
२ १र र १र र २ १ २ ३
घर्मोज्योतिः। तेजःसमैरयन्। होये३। हो२३
५ १ २ १र र १ र २ १ २
४वा। सुवर्घर्मोज्योतिः। सुवःसमैरयन्। होये३।
३ ५ १र २ १र र १र र १
हो२३४वा। २। ज्योतिर्घर्माज्योतिः। ज्योतिःसमैर
१ २ ३ २ १ऽ २ १र र
यन्। होये३। हो२३४५वा६५६। घर्मोघर्मोज्यो
तिः॥ १७॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र　　१ऽ　१र　३र१　२
* हाउहोहाइ (इत्यादि) ता। औहोवाहाउ। वा

२र १ र २　१　२　२र १ २ १र र २　२र १ र
ए। इडांयच्छहस्कृतिंयच्छ। ए। मनओजोयच्छ। ए। मनो

२　१र　२　२र १　२　२र　२ १र र २
महिमानंयच्छ। ए। यशस्त्विषिंयच्छ। ए। प्रजवर्चोयच्छ।

२र　१र　२　२र　१　२ १　२　२र　१ र
ए। पशून्विशंयच्छ। ए। ब्रह्मक्षत्रंयच्छ। ए। स्वर्ज्योति-

२
यंच्छ ॥ १८ ॥

१र र　　१ऽ　२ र र
हाउहोहाइ। (इत्यादि) ता। यज्जायथा। अ

र १ २　२　१ २　२　र र १
पूर्व्याया। मघवन् वृत्रहत्याया। या। तत्पृथिवीमप्राथा

२　२　र र १　२　१र र
याः। तदस्तभ्नाउतोदाइवाम्। हाउहोहाइ (इत्या

२　१र　३र २　र　२र　१र र र १　र
दि) त। औहोवाहाउ। वा। ए। तेजोघर्मःसङ्क्री

२ र　१　२ र र २ र २र १र　२ र　१ २ १ २र
डन्तेशिशुमतीर्वायुगोपाऽऽजस्वतीर्मरुद्भिर्भुवनानिचक्रदुः।

१　१ १ १ १　३ १ १ १
इट् इडा२३४५। ई२३४५ ॥ १९ ॥

* "पश्चानुगानम्"—इति षा० ब्रा० ३, १, २, १९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र १र र २ १ १र
हाउहोवा। ३। परात्परमैरय। ता। परात्प
र २ १ १र र २ २ १र ३र २
रमैरय। ता। परत्परमैरय। त। औहोवाहा
२ १ २ २र १ १र र २र १
उ। वा। इन्द्रो। धेनुः। ३। आपो धेनुः।
१र २र १ २ १ २र १ १र
३। भूमि र्धेनुः। ३। अन्तरिक्षंधेनु। ३। द्यौ
२र १ १ २र २ १ २र १
र्धेनुः। ३। परं धेनु। ३। व्रतं धेनु। ३।
२ १ २र १ १ २र १ १ र
सत्यं धेनु ३। ऋतं धेनु। ३। इडा
२र १ १ २र १ १र २र १
धेनुः। ३। स्व र्धेनुः। ३। ज्योति र्धेनुः।
३ ॥२०॥

१र र १ऽ २ १र २र
हाउहोवा। ३। (इत्यादि) ता। यज्ञा यथाः।
२१र र २१र २ १ २ ३ ५ १ २
अपूर्विया। अपूर्विया३। आपूर्वा२३४या। मघवन् वृ।
२१ र २ २१ र २ १ २ ३ ५ १
त्रहत्याया। त्रहत्याया३। त्राहत्या२३४या। तत्पृ
२१र र २ १ २ १ २ ३ ५
थिवीम्। अप्राथयाः। अप्राथया३ः। आप्राथा२३४याः।
१ २ र २१र २ १ २ २ १ २
तदस्तभ्नाः। उतोदिवाम्। उतोदिवा३म्। ऊतो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ १र र २
टा२३४इवाम् । हाउहोवा । ३ । (इत्यादि) त ।
१र ३र २ २ १रर २१ र १ र र१ र २र१र
औहोवाहाउ । वा । तेजोघर्मःसङ्क्रीडन्तेवायुगोपास्ते
२ र १ २ १ २र
जस्वतीम् रुङ्ग्भिर्भुवनानिचक्रदुः ॥ २१ ॥

१ १ १ २ १ २ २
हा२ऊवाक् । ३ । होवा । २ । होवा३ । हाउवा ।
२र २र १ २ १र र २र १ २ १र २ १ र २ १ २ १
ए । तोकम्प्रजाङ्गर्भा नीयमदध्मच्चाचपराचपथिभिश्चर-
३ १ १ १ १
न्ता२३४५ः ॥ २२ ॥

१ १ १ २ २ १ २
*हा२ऊवाक् । ३ । होवा । ३ । अयꣳसशिङ्ते३ ।
१ १ २र १र र २ १र २र १ १
होइ । यस्माद्यावापृथिवी भूवनानिचक्रदुः । हो
२ १ २ १ १ २र १र २ १र २ र १
इ । अयꣳसशिङ्ते३ । होइ । यस्मादापऔषधयोभुव-
२र १ १ २ १ २ १ १ २र
नानिचक्रदुः । होइ । अयꣳसशिङ्ते३ । होइ । यस्मा
२ १ र २र १ १ २ १ २
त्समुद्रियाभुवनानिचक्रदुः । होइ । अयꣳसशिङ्ते ३ ।
१ १ २र १ र २र १र २र १ १ १
होइ । यस्माद्विश्वाभूताभुवनानिचक्रदुः । होइ । हा

* "अनुगानम्"—इति आ० ब्रा० ३,२,१९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ २ २र १ २
२ऊवाक् । ३ । होवा३ । हाउवा । ए । आपः । २ ।
३ १ १ १ १
आपा२३४५ः ॥ २३ ॥

१ १ १ २र ३ २र १
हा२ऊवाक् । ३ । होवा । ३ । येभिर्विया । अमैरा
२र ३ २र १ २र र २
या२ः । तेभिर्विया । अहीमादा२म् । येभिर्भूताम् ।
३ २ १ २र १र २ १र २ १र २र १
सहःसाहा२ः । तेभिस्तेजआपः । आपा२ । येभिर्व्यं
२१र २ २ २र १ २ १ ३
न्तरिक्षमैरया३ः । हाउवा । ए । आपः । २ । आपा
१ १ १
२३४५ः ॥ २४ ॥

१ १ १ २ १ र र
हा२ऊवाक् । ३ । होवा । ३ । यज्जायथा । अ
१ १ १ १
पूर्व्या२ । वीया२ । मघवन्वृत्रहाहो२ । त्याया२ । तत्
र १ १ र
पृथिवीमप्राहो२ । थायाः२ । तदस्तभ्नाउतोहो
१ १ १ १ २
२इ । दाइवा२म् । हा२ऊवाक् । ३ । होवा । २ ।
२ २ २र १र र २ १ र २ र १
होवा३ । हाउवा । ए । तेजोघर्मःसङ्क्रीडन्तेभि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ २ १ २ ३ २ ३ १ २　 २ ३ 　१ 　२ १ 　२ ३ 　　 ३ १ १ १ १
भूमतीर्वायुगोपास्तजस्वतीर्महङ्गिभुवनानिचक्रदू २ ३ ४ ५ः ॥ २५ * ॥ १६

नृमेध-पुरुमेधौ द्वावृषी ऐन्द्र्या अनुष्टुभः ॥

हे "अपूर्व्य" त्वत्तोव्यतिरिक्तेन पूर्वेण वर्जित ! † । हे "मघवन्" मंहनीयतम धनवन्निन्द्र ! "वृत्रहत्याय" ‡ वृत्रासुरहननाय "यद्" यदा त्वं "जायथाः" उत्पन्नः प्रादुर्भूतोसि "तत्" तदानीमेव "पृथिवीं" प्रथमानाम् "अप्रथयः" प्रसिद्धां दृढाम-कारीः । "उत" अपि च "दिवं" द्यां द्युलोकम् अन्तरिक्षेण "अस्तभ्नाः" निरुद्धा मकार्षीः ॥ ईदृशं वीर्यं त्वदन्यस्य न भवतीत्यर्थं द्योतयितुम् अपूर्व्येति पदम् ॥ ७ ॥ १६

इति श्रीमत्सायणार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे छन्दोव्याख्याने षष्ठस्याध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

* ऋा० गा० २प० ३, २, ९—२५ ।

† 'अपूर्व्या पूर्वेषु मध्यरात्रादिकालेषु विद्यमाना'—इति२प०२,७, ४र्थर्चि सायणः । 'यतः पूर्वं नास्ति सा अपूर्वा, अपूर्वा एव अपूर्व्या, स्वार्थिकस्तद्धितः ; प्रथमेत्यर्थः'—इति च तत्रैव वि० ।

‡ 'अथास्य कर्म—रसानुप्रदानं वृत्रवधो या च का च बलकृतिरिन्द्रकर्मैव तत्'—इति नैरुक्तम् ३का० ७अ० १०ख० । 'वृत्रवधो मेघवधः'—इति च तत्रत्य-भाष्यम् । "तत्कोवृत्रोमेघइति नैरुक्ताः । त्वाष्ट्रोऽसुरइत्यैतिहासिकाः । अपाञ्च ज्योतिषश्च मिश्रीभावकर्मणो वर्षकर्म जायते तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० २०२,१६ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीय-खण्डे —

सैषा प्रथमा ।

२ ३ १ २ २ ३ १ २र ३ २ ३ १ २र
मयिवर्च्चोअथोयशोथोयज्ञस्ययत्पयः ।
३ २ ३ १ २ ३ १ २र
परमेष्ठीप्रजापतिर्दिविद्यामिवदृꣳहतु ॥ १ ॥ १७ *

२र १ १ १
† हाउ । ३ । आनो२त्र,वाइ । २ । आनो२त्र्
१ ३ ५र र १ २ र र ३र ३ १ १ १ १
वा । २ । या२३४औहोवा । रक्षतनोरक्षितारा२३४५ः ।
२र १ २र र १ २र र
हाउ । ३ । आनो२त्रु (पूर्वपाठः) गोपायतगोपायि
र ३ १ १ १ १ २र १ १ २ १ २
तारा२३४५ः । हाउ । ३ । आनो२त्रु० । मयिवर्चः ।
१ २ १ २र १ १ २ २
अथोया१शा२ः । अथोयज्ञ । स्ययात्पा१या२ः । पर
र १र १ २ २ १ र १ २
मेष्ठी । प्रजापा१ती२ः । दिविद्यामि । वदृꣳहा१नू२
२र १ १ २ र र ३ १
३ । हाउ । ३ । आनो२त्रु० । रक्षतनोरक्षितारार
१ १ १ २र १ २र र १ २र र
३४५ः । हाउ । ३ । आनो२त्रु० । गोपायतगोपायि

---

* ऋ० ८,७,१७,७ । † "प्राजापत्यस्य व्रतम्"—इति आ०ब्रा० ३,२,२० ।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया ।

२ ३ १ ३ १ २ ३ २ ३
सन्ते पयाꣳसिसमुयन्तुवाजाः

१र २र ३ १ २
संवृष्ण्यान्यभिमातिषाहः ।

र ३ १ १ १ १ २र १ २र १
तारा२३४५ः । हाउ । ३ । आनो२त्र्वा० । ए । रक्ष

२र र र र र १ २र र र २र १
तनोरक्षितारोगोपायतगोपायितारः । २ । ए । रक्ष

२र र र र र र २र र र ३ १ १ १ १
तनोरक्षितारोगोपायतगोपायितारा२३४५ः ॥ ७ * ॥ १७

वामदेवऋषिः प्रोक्तो मयीत्यस्याः प्रजापतिः ।
देवता स्यात्ततश्छन्दोऽनुष्टुप् सद्यद्गतीरितम् ॥

"परमेष्ठी" परमे लोके तिष्ठतीति परमेष्ठी "प्रजापतिः" †
"दिवि" द्योतमाने स्वर्गे "द्यामिव" द्योतमानां कान्तिमिव ।
"मयि" अस्मदीये शरीरे "वर्चः" तेजः ब्रह्माख्यं "दृंहतु" वर्द्ध-
यतु । "अथो" अपिच "यशश्च" दृंहतु । "अथो" किञ्च
"यज्ञस्य" यागस्य सम्बन्धि अतएव स उत्तमं "पयः" हविर्लक्षण
मन्नं च दृंहतु ॥ १ ॥ १७

* आ० गा० ६प्र० ४, १, ७ ।

† 'प्रजापतिः प्रजानां पाता पालयिता वा'—इत्यादि नैरुक्तम् १का० १०ख० ४२,
४३ ख० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३ १ २ ३ १ २
आप्यायमानोअमृताय सोम

३ १र २र ३ १ २
दिविश्रवाꣳस्युत्तमानि धिष्व ॥ २ ॥ १८ *

१र २ १र २ १ २ २
† ओवा२ । ३ । सन्तेपया । सो३समु । यन्तु

४र ५ २ १ २ १ २र ३ ४र ५
वाजाः । संवृष्ण्यया । नो३अभि । मातिषाहाः ।

२र १र २ २ २र ३ ४र ५ २ १
आप्यायमा । नो३अमृ । तायसोमा । दिविश्रवा ।

२ १ २र ३ ४ ५ १र १
सो३उत्त । मानिधिष्वा । ओवा२ । २ । ओ२ ।

२ ५र र
बा२३४ । औहोवा । ३ ॥ ९ ‡ ॥

१ २ १र २ १ २ ३ ४र ५
¶ ई२ । ३ । सन्तेपया । सो३समु । यन्तुवाजाः ।

२ १र २ १ २ ३ ४र ५ २र १र
संवृष्ण्यया । नो३अभि । मातिषाहाः । आप्यायमा ।

२ १ २र ३ ४र ५ २ १र २ १ २र ३ ४
नो३अमृ । तायसोमा । दिविश्रवा । सो३उत्तमानिधि

५ १ १ २ ५र २ १
ष्वा । ई२ । २ । ई२आ२३४औहोवा । हुम् ॥ ११ § ॥ १८

---

* ऋ० १, ९१, १८ ।

† "सोमव्रतम्"—इति चा० ब्रा० ३, ३, २० ।

‡ चा० गा० ३प्र० ४, १, ९ ।

¶ "सोमव्रतम्"—इति चा० ब्रा० ३, २, २४ ।

§ चा० गा० ३प्र० ५, १, ११ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

२ ३ १र २र ३ २ ३ २ ३ १ २ ३ १
त्वमिमा ओषधीः सोम विश्वास्त्वमपो अजनयस्त्वं गाः ।
१र २र ३ २ऽ १ २ ३ १ २र ३ १र २र
त्वमा ततन्थोर्वा३न्तरिक्षं त्वं ज्योतिषा वि तमो ववर्थ ॥ ३॥१९

२र २ ३र २र
* हाउ । ३ । हौवा३ । ३ । हाइ । हौवा३ ।
२र ४ २ १११ ४ २
३ । हौवा३ । ३ । हो३वा३४५ । २ । हो३वा३४ ।
५र र १ र र २र र १ २र १ २ १र २
औहोवा । त्वमिमा ओषधीः सोम विश्वाः । त्वमपो अज

त्रिष्टुभः पावमान्याः स्याद्दृषिर्गौतमनामकः ।

हे "सोम !" "अभिमातिषाहः" अभिमातीनां शत्रूणां हन्तुः "ते" तव एवम्भूतं त्वां "पयांसि" अपणार्थानि क्षीराणि "संयन्तु" सङ्गच्छन्ताम् । तथा "वाजाः" हविर्लक्षणान्यन्नानि च त्वां सङ्गच्छन्ताम्। "वृष्ण्यानि" वीर्याणि च सङ्गच्छन्ताम् । हे "सोम !" त्वम् "अमृताय" आत्मनः अमृतत्वाय अमरत्वाय "आ" समन्तात् वर्द्धमानः सन् "दिवि" नभसि स्वर्गे "उत्तमानि" उन्नततमानि उत्कृष्टानि "श्रवांसि" अन्नानि अस्माभिर्भोक्तव्यानि हविर्लक्षणानि "धिष्व" धारयते । [ "क्रियाग्रहणं कर्त्तव्यमिति (पा०२, ३,१३)" कर्मणः सम्प्रदानत्वात् चतुर्थ्यर्थे षष्ठी † ॥ २॥ १८

° "सोमव्रतम्"—इति स्वा० ब्रा० ३,२,२४ ।

† "चतुर्थ्यर्थे बहुलं छन्दसि"—इति पा०२, ३, ६२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ ३२ १ २ १ २ २२ १ २
नयस्त्वङ्गाः । त्वमाततनोरुवन्तरिक्षं । त्वञ्ज्योतिषावितमो

२ २२ २ ३२ २
ववर्थ । हाउ । ३ । हौवा३ । ३ । हाह । हौवा

२२ ४ २ १ १ १ ४
३ । ३ । होवा३ । ३ । हो३वा ३ ४ ५ । २ । हो३

२ ५२ २ २२ १ २ १ २ १२ २
वा३४ । औहोवा । ए । जनद्दिवमन्तरिक्षम्पृथिवीवि

१ २ २ १२ २२ २ १ १ १ १ १
श्वभोजसम्पुरूपा अजीजनः । इट् । इडा२३४५॥१०*॥१९

हे "सोम !" "त्वम्" "इमाः" भूम्यां वर्तमानाः "विश्वाः" सर्वाः "ओषधीः" "अजनयः" उत्पादितवानसि । तथा "त्वम्" "अपः" तासा मोषधीनां कारणभूतानि वृष्ट्युदकानि अजनयः । तथा त्वं "गाः" सर्वान् पशून् † उदपादयः । "उरु" विस्तीर्णम् "अन्तरिक्षं" "त्वम्" "आ तनोः" विस्तारितवानसि । तस्मिन्नन्तरिक्षे यत् "तमः" अस्मद्दृष्टि-निरोधकम् अन्धकारं तदपि "त्वं" "ज्योतिषा" आलोकेन प्रकाशेन "वि ववर्थ" विश्लिष्टं कृतवानसि । [ ववर्थ वृञ् वरणे लिटस्थलि, "बभूथाततन्थजगृम्भववर्थेति" ( पा०७,२,६४ ) निपात्यते ॥

"आततनोः"—"आततन्थ"—इति साम्न ऋचः पाठौ ॥ २ ॥ १९

* आ० गा०३प० ४, १, १० ।

† "यथापि पशुनामेव भवत्येतस्मादेव"—इति निरु० नै० २, ५ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी ।

३ १२ ३१ २ ३१ २३२३ १ २
अग्निमीडेपुरोहितंयज्ञस्यदेवमृत्विजम् ।
१ २ ३ १ २
होतारꣳरत्नधातमम् ॥ ४ ॥ २० *

२र र २र र २र र २ १
† मनोहाउ । वयोहाउ । वर्चोहाउ । अग्निम् ।
१र ३ १ ३ ५ १ र १ र र
ईडार२इ । पुरोहार२३४इताम् । इहहाउ । इडाहा
२र र २ १ १ ३ १ ३ ५
उ । आयुर्हाउ । यज्ञ । स्यदार्२इ । वमृत्वीर२३४जाम् ।
२१र २र र २ र १र र १
स्वर्हाउ । ज्योतिर्हाउ । ऋतꣳहाउ । होता । रꣳ
३ २ ४ २ १ २ ११११
रार२३ । त्नधा३ता५मा६५६म् । ए३ । महार२३४५: ॥ १२‡ ॥
२ऽ २ १ र२र १र २ २र१र २ १र
¶ हाउ३वा । अग्निमीडेपुरोहितम् । देवेषुनिधिमाꣳ
२ १ २ऽ ३ १ २र१२ १ २र१र २
अहम् । हाउ३वा । यज्ञस्यदेवमृत्विजम् । देवेषुनि
१र २ १ २ऽ १र र २ १र २ २र
धिमाꣳअहम् । हाउ३वा । होतारꣳरत्नधातमम् । दे

---

* ऋ० १,१,१,१ ।　　† गवां व्रतान्निमम् (आ० ग्रा० ३,२,२१) ।

‡ आ० गा० ३प० ४, १, १३ ।　　¶ यमव्रतायम् (आ०ग्रा०३,२,११) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ १र २ १ २ऽ १र १र१र २ १र
वेषुनिधिमाꣳअहम्। हाउ३वा। ए। देवेषुनिधिमाꣳ
२ १
अहम्। (एवं त्रिः) ॥ १८ * ॥ २०

अग्निमीडे मधुच्छन्दा गायत्र्येषाग्नि-संस्तुतिः।

"अग्नि"-नामकं "देवम्" "ईडे" स्तौमि [ ईड स्तुताविति (अदा० आ०) धातुः मन्त्रस्यास्य होत्रा प्रयुज्यमानत्वात् अहं होता स्तौमीति लभ्यते] कीदृशम् अग्निम्? "यज्ञस्य पुरोहितं" यथा राज्ञः पुरोहितः तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं सम्पादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? "होतारम्" ऋत्विजम् [देवानां यज्ञेषु होतृनामक ऋत्विगग्निरेव। तथाच श्रूयते— "अग्निर्वै देवानां होतेति"। पुनरपि कीदृशम्? "रत्नधातमं" यागरूपाणां रत्नानाम् अतिशयेन धारयितारं पोषयितारं वा †। अत्राग्नि-शब्दस्य यास्को बहुधा निर्वचनं दर्शयति— "अथातोनुक्रमिष्यामोऽग्निः पृथिवीस्थानस्तं प्रथमं व्याख्यास्यामो अग्निः कस्मादग्रणी भवति, अग्रं यज्ञेषु प्रणीयतेऽगं नयति सन्नममानोऽक्नोपनो भवतीति स्थौलाष्ठीवि र्न क्नोपयति न स्नेहयति त्रिभ्य आख्यातेभ्यो जायतइति शाकपूणिरितादक्तादग्धाद्वानीतात्स खल्वेते रकार मादत्ते गकारमनक्तेर्वा दहते र्वा नीः परस्तस्यैषा भवति(७,४,१)"इति ॥ ४ ॥ २०

* छा० गा० २प०४,१,१८।

† यास्कस्त्वमुमेवं व्याख्यातवान्—"अग्निमीळेऽग्निं याचामीळिरध्येषणकर्मा पूजाकर्मा वा पुरोहितो व्याख्यातो यज्ञस्य। देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

१ २  २ २उ  ३ २ ३
ते मन्वत प्रथमन्नामगोना

२ ०  ३ १ २ ३ १ २र  ३र
न्त्रिःसप्तपरमन्नामजानन ।

१  २  ३ २ ३क २र  ३ २
ताजानतीरभ्यनूषतक्षा

३  १ २  ३ १र  २र ३  १  २
आविर्भुवन्नरुणीर्य्यशसागावः ॥ ५ ॥ २१

२र  २र र र  २  र  र
* हाउ । ३ । गावोहाउ । ३ । वृषभपत्नीर्हाउ । ३ ।

---

भवतीति वा यो देवः सा देवता । होतारं ह्वातारं । जुहोते र्होते त्यौर्णवाभः । रत्नधातमम् रमणीयानां धनानां दातृतमम्"—इति ७, १५ । "पुरोहितः पुर एतं दधति"—इति च यास्कः २, १२ ॥ अत्र ऋचि स्वरसन्निवेशविधानप्रकारन्त्वित्थमाह दीक्षितः—"तत्राग्निशब्दोऽव्युत्पत्तिपक्षे फिषइत्यन्तोदात्तः व्युत्पत्तौ तु नि-प्रत्ययस्वरेण । अम् । सुप्त्वादनुदात्तः अमिपूर्वइत्येकादेशस्त्वेकादेशउदात्ते नेत्युदात्तः । इले । तिङतिङइति निघातः । संहितायां तूदात्तादनुदात्तस्येतीकारः स्वरितः । स्वरितात् संहितायामिति ले इत्यस्य प्रचयापरपर्याया एकश्रुतिः । पुरः शब्दोऽन्तोदात्तः पूर्वाधरावराणामित्यसि प्रत्ययस्वरात् । हित-शब्दोऽपि धाञो निष्ठायां दधातेर्हिरिति ह्यादेशे प्रत्ययस्वरेणान्तोदात्तः । पुरोऽव्ययमिति गति-सञ्ज्ञायां कुगतीति समासे समासान्तोदात्ते तत्पुरुषे तुल्यार्थेत्यव्यय-पूर्वपद-प्रकृतिस्वरेण गतिकारकोपपदात् कृदिति कृदुत्तरपद-प्रकृतिस्वरे थाथादिस्वरे च पूर्वपूर्वापमर्देन प्राप्ते गतिरनन्तर इति पूर्वपद-प्रकृतिस्वरः । पुरः-शब्दोकारस्य संहितायां प्रचये प्राप्ते उदात्तस्वरितपरस्य सन्नतर इत्याद्यनुदात्तः । ऋत्विक् शब्दः कृदुत्तर-प्रकृतिस्वरेणान्तोदात्तः । होतृ-शब्दस्तृन्-प्रत्ययान्तो नित्स्वरेणाद्युदात्तः । रत्न-शब्दो नब्विषयस्येत्याद्युदात्तः रत्नानि दधातीति रत्नधाः । समासस्वरेण कृदुत्तरपद-प्रकृतिस्वरेण वान्तोदात्तः । तमपः पित्वादनुदात्तत्वे स्वरितप्रचयावित्यादि यथाशास्त्र मुन्नेयम्"—इति वै ।

* "गवां व्रते"—इति आ० ब्रा० ३, २, २१ । तत्र पूर्वम् ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र र र २ र र र २ र
वैराजपत्नीर्हाउ। ३। विश्वरूपाहाउ। ३। अस्मासुरम
र १र र १ १
ध्व९हाउ। ३। तेमन्वतप्रथमन्नामगो२नाम्। त्रिःसप्त
र १र र र र १ २र
परमन्नामजा२नान्। ताजानतीरभ्यनूषता२स्वाः। आ
१ र र १ २र २र र र
विर्भुवन्नरुणीर्यश्रसागा२वा:। हाउ। ३। गावोहाउ।
२ र र २र र र र २ र र
३। वृषभपत्नीर्हाउ। ३। वैराजपत्नीर्हाउ। ३। विश्वरूपा
र २ र र २ र
हाउ। ३। अस्मासुरमध्व९हाउ। ३। अस्मासुरमध्वा२९
२ २ २र १र र २ १ १र र र १ २र १ र २र
हाउ। वा। ए। गावोवृषभपत्नीर्वैराजपत्नीर्विश्वरूपा
१र २ २र १र र २ १ २र र र १ २र
अस्मासुरमध्वम्। २। ए। गावोवृषभपत्नीर्वैराजपत्नीर्वि
१ र २र १र २ ३ १ १ १ १
श्वरूपाअस्मासुरमध्वा२३४५म्॥ १७ * ॥

२र १र र १
† हाउ। ३। तेमन्वतप्रथमन्नामगो। नाम्। ३।
२र १ र १ २र
हाउ। ३। त्रिःसप्तपरमन्नामजा। नान्। ३। हाउ३।
१र र र र १ २र
ताजानतीरभ्यनूषता। स्वाः। ३। हाउ। ३।

* आ० गा० ३प० ४, १, १७।

† "गवां व्रते"—इति आ० ब्रा०३,२,२७। तत्र पूर्वम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १   र   र   १   २   २
आविर्भुवन्नरुणीर्यशसागा। वाः। ३। हाउ३। वा।

२र   १ २र   २र   १ ३ १ १ १ १
ए। इषाः। २। ए। इषा२३४५ः॥ १८*॥ २१

त्रिष्टुभा वामदेवोऽस्तौदग्निं तेमन्वतेति च।

हे "अग्ने !" "ते" स्तोत्रं कुर्वाणा अङ्गिरसः "गोनां" † गवां वाचां ‡ सम्बन्धि नाम स्तुति-साधकं शब्दमात्रं "प्रथमं" पूर्वम्, "अमन्वत" अजानत पश्चात्तस्या वाचः सम्बन्धीनि "त्रिःसप्त" एकविंशतिसङ्ख्याकानि "परमं" परमान्युत्कृष्टानि "नाम" नामानि स्तुति-साधकानि स्तोत्राणि [ जातावेकवचनम् ¶ ] छन्दांसि वा [ तानि च गायत्र्यादीनि जगत्यन्तानि सप्त §, अति-जगत्यादीनि अतिधृत्यन्तानि सप्त॥, कृतिप्रभृतीन्युत्कृतिपर्यन्तानि सप्त + ] 'जानन्' अजानन् अलभत एवंविधच्छन्दोयुक्तै र्मन्त्रै रग्नि मस्तुवन्नित्यर्थः। "ताः" वाचः "जानतीः" सर्वं जानत्यः "उषाः" [ उच्छयन्ति गच्छन्त्युषः कालं प्रापयन्ति ताः ] "अभ्यनू-

---

* आ० गा० ४प्र० ५,२,१८।

† "गोः पादान्ते (७, १, ५७)"—इति पा०।

‡ "गौः"—इति वाङ्नामसु चतुर्थं नैघण्टुकम् (१,११)।

¶ "जात्याख्यायामेकवचनं बहुवचनमन्यतरस्याम्"—इति पा० १,२,६०।

§ गायत्री, २ उष्णिक्, ३ अनुष्टुप्, ४ बृहती, ५ पङ्क्तिः, ६ त्रिष्टुप्, ७ जगती।

|| अतिजगती, २ शक्वरी, ३ अतिशक्वरी, ४ अष्टिः, ५ अत्यष्टिः, ६ धृतिः, ७ अतिधृतिः।

+ कृतिः, २ प्रकृतिः, ३ आकृतिः, ४ विकृतिः, ५ संस्कृतिः, ६ अतिकृतिः, ७ उत्कृतिः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २ ३ १र २र ३ १
समन्यायन्तुपयन्त्यन्याः
१ २ ३ २ ३ १ ३क२र
समानमूर्वंनद्यस्पृणन्ति।
२ ३ १ २ १ २ ३ १ २
तमूशुचिंशुचयोदीदिवांसं
३ १र २र ३ १ २ ३ १ २
मपान्नपातमुपयन्त्यपः॥ ६ ॥ २२ *

षत" अस्तुवन्। ततः सूर्यस्य "यशसा" तेजसा सह "अरुणीः" अरुणवर्णाः "गावः" † "आविर्भुवन्" प्रादुरभूवन्। यद्वा "ते" अङ्गिरसः "प्रथमं" पुरातनं "नाम" एहि सुरभि गुग्गुलु-गन्धिनीति धेनु-नामधेयम् "अमन्वत" उच्चारयामासुः। पश्चात् स्व-भूतानि पणिभिरपहृतानि त्रिःसप्त-रत्नान्यविन्दन्। तत उच्चारितं जानत्यो "गावः" "अभ्यनूषत" हम्भारवलक्षणं शब्द-मकुर्वत। तदानीं मुषाः प्रादुरभूदिति॥

"तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ताजानतीरभ्यनूषतक्षाआविर्भुवन्नरुणीर्यशसागावः"—इति छन्दोगाः। "तेमन्वतप्रथमन्नामगोनान्त्रिःसप्तपरमन्नामजानन्। ताजानतीरभ्यनूषतक्षाआविर्भुवन्धेनोस्त्रिःसप्तमातुःपरमाणिविन्दन्। तज्जानतीरभ्यनूषतव्राआविर्भुवदरुणीयशसागोः" — इति बह्वृचाः॥ ५॥ २१

* ऋ०८,७,१४,२।

† "अरुणो गाव उषसाम्"—इति निघ० १, १५, ७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र　१र २　२ १ र २　२र १
* हाउ । ३ । ऐरयत् । ३ । अपःसमैरयत् । ३ । भूत
र २　२ र र　र २र र र
मैरयत् । ३ । अपाङ्गर्भोग्निरिडा । पाङ्गर्भोग्निरिडा । २ ।
२ र र र १ र　२ १ २
पृथिव्यागर्भोग्निरिडा । ३ । समन्व्यायन्त्युपयन्तियार२३न्याः ।
२ र १ र　२ १ २ १ र　र र १ १
समानमूर्वन्नद्यस्पृणा२३न्ती । तमुशुचिꣳशुचयोदीदिवा२
२　२ १र र　२ १ २　२र
३ꣳसाम् । अपान्नपातमुपयन्तियार२३पा३ः । हाउ । ३ ।
१र २　२ १ र र　२र१ र २　१ र
ऐरयत् । ३ । अपःसमैरयत् । ३ । भूतमैरयत् । ३ । अपा
र र २र र र　२ र र र
ङ्गर्भोग्निरिडा । पाङ्गर्भोग्निरिडा । २ । पृथिव्यागर्भोग्निरिडा
२ र र र　२　२र २ १
। २ । पृथिव्यागर्भोग्निरिडा ३ । हाउवा । ए । अग्निःशि
२ १　२र　२ १　२ १　२र　१र　२ १　२ १　२र
शुक्रः । ए । शुक्रःशिशुक्रः । ए । तेजःशुक्रस्यशुक्रम् । ए ।
१र　२ १र　र १र　२र　१र २ १ २र १ २र १　२र　१ र ३
तेजःसप्राःसमीचीः । ए । तेजउषोनजारः । ए । सुवर्ज्योती
१ १ २ १
२३४५ः ॥ ३ ॥

२र　१र २　१ र २　१
हाउ । ३ । ऐरयन् । ३ । समैरयन् । ३ । सम
२　१ र　२ १　२　२ र १ र
स्वरन् । ३ । समन्व्यायन्त्युपयन्तियार२३न्याः । समानमूर्व

* "अपां व्रते द्वे"—इति षा०ब्रा० ३,२,२२ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १२ २ २ २ १
न्नद्यस्पृणा२३न्ती। तमूशुचिꣳशुचयोदीदिवा२ ३ ꣳ

२ २१र २ २ १ २ २र १र
साम्। अपान्नपातमुपयन्तिया२३पा३ः। हाउ। ३। ऐर

२ १ र २ १ २ २ २
यन्। ३। समैरयन्। ३। समस्वरन्। २। समस्वरा३न्।

२ ३ १ १ १ १
हाउवा३। ई२३४५॥ ४ *॥ २२

इतीयं त्रिष्टुबाग्नेयी दृष्टा गृत्समदेन सा।

"अन्याः" वर्षाणाः "आपः" "संयन्ति" भूम्यां सङ्गच्छन्ते "अन्याश्च" "पूर्वं" तत्रावस्थिताः "उपयन्ति" उपगच्छन्ति। ताः सर्वा आपः "समानं" सह "नद्यः" नदीभूत्वा "ऊर्वं" समुद्रमध्ये वर्तमानं वडवानलं "पृणन्ति" प्रीणयन्ति [पृण प्रीणने(प०) तौदादिकः] "तमु" तमेव "अपान्नपातम्" "शुचिं" निर्मलं "दीदिवांसं" दीप्यमानं [दीदिवेति छान्दसो दीप्तिकर्मा लिटः क्वसुः॥ वस्वेकाजाद्घसा मिति नियमादिडभावः। छन्दसीवेति वक्तव्य मिति वचनाद्द्विवचनाभावः] एवम्भूतं "शुचयः" शुद्धाः "आपः" "उपयन्ति" समीपे गच्छन्ति॥

एष हि वैद्युताग्निरूपेण मेघे वर्तमानोऽस्मान् अजीजनदिति बुध्वा वडवानलरूपेण वर्तमानं तं पर्युपासत इत्यर्थः। यद्वा अन्या

* आ० गा० ३प० ४, २, ३-४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एकधनाख्या * आपः संयन्ति । चात्वालोत्करयोर्मध्ये † वसतीवरीभिः सङ्गच्छन्ते । अन्या वसतीवर्य्याख्या आपश्च ‡ उपयंति उपगच्छन्ति एकमत्यं प्राप्ता भवन्ति । एताश्च मिलित्वा यज्ञं साधयन्त्यः तत्साध्य-वृष्टि-द्वारा नद्यो भूत्वा ऊर्वं पृणन्तीत्यादि समानम् ! एवं हि आपो दा अस्यर्इन्त वयं पूर्वं यज्ञं वक्ष्याम इत्यादिको बह्वृच-ब्राह्मण-विनियोगश्चानुगृह्यते ॥

"अपान्नपातमुपयन्त्यापः"—"परितस्थुरापः"—इति साम्न-ऋचः पाठ-भेदः ॥ ६ ॥ २२

---

* "सोमकण्डनाय यैर्जलमानीयते ते कुम्भा एकधनाः । एकं घनं सोमरूपं यत्रेति"—इति वेददीपः ( य० मा० श्रा० स० ५ अ० ७क० ) ।

† "उत्तरवेदिनिचयार्थं यत्र भूप्रदेशे मृदं खनति स प्रदेशश्चात्वाल उच्यते"—इति वेददीपः ( य० मा० श्रा० स० ५ अ० ७क० ) । "स्फ्योत्खातां मृद मुत्करे त्यजेत्"—इति वेददीपः ( य० मा० श्रा० स० १ अ० २५क० ) ।

‡ "अग्नीषोमीयस्य वपामार्जनान्ते वसतीवरीग्रहणम् स्यन्दमानानामनस्तमिते-ऽस्तमितस्ये न्निनाह्यात्पु रेजानस्ये दनीजानोऽन्यस्यापि समीपावसितस्य पुरेजानस्योभया भाव उल्कुषीं हिरण्यं वोपर्युपरि धारयन् हविष्मतीरिति"—इति का० सू० ८, ९, ७-१० । अग्नीषोमीयस्य पशोर्वपामार्जनपर्य्यन्ते कर्मणि कृते अनस्तङ्गते रवौ हविष्मतीरिति ( य० मा० श्रा० स० ६ अ० २३क० ) मन्त्रेण । यदि रविरस्तङ्गतो यजमानश्च पुरा ईजानः सोमयाजी तदा गृहे एव निनाह्यान्मणिकाद् वसतीवरीग्रहणम् निनहनीयो निनाह्यः । यदि च यजमानः पुरा न सोमयाजी तर्हि समीपस्थितस्य यष्टुः मणिकाद् ग्रहणम् स्वस्य अन्यस्य च यज्ञकर्त्तृत्वाभावे उल्कां कनकं वा वहन्तीनामपां समीपे धारयन् वहन्तीभ्यो वसतीवरीर्गृह्णीयादिति सूत्रार्थः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१र २र ३ १ -२ ३ १र २र ३ १ २र
आप्रागाद्भद्रा युवतिरह्नः केतूं त्समीर्त्सति।
१ २ ३ २ ३ १ २ ३ १ २ ३ १ २ ३ १ २
अभूद्भद्रा निवेशनी विश्वस्य जगतोरात्री ॥ ७ ॥ २३ *

१ १र २ र २ १र २ १ १
† हो२इ। ३। आप्रागाद्भद्रायुवतिः। हो२इ। ३।
१ २र १र र २ १ १ र २ १र २ १र २र
अह्नःकेतूं त्समीर्त्सति। हो२इ। ३। अभूद्भद्रानिवेशनी।
१ १ २ १ २र १र २र १ १
हो२इ। ३। विश्वस्यजगतोरात्री। हो२इ। २। हो२।
२ २ ३ १ १ १ १
वा३। हाउवा३। ई२३४५ ॥ ६ ‡ ॥ २३

अस्तौदनुष्टुभा रात्रिं वामदेव ऋचानया।

"भद्रा" सूर्यप्रकाशसन्तापं निवारयन्ती सुखकरी "युवतिः" तमसो मिश्रयित्री¶ "रात्रिः" "आ प्रागाद्" आभिमुख्येन प्रगच्छति। "अह्नः" §चन्द्रमसः "केतून्" रश्मीन् "समीर्त्सति" सम्यक्सम्बन्धयितु

---

* ऋ०४,५,१०,१।

† "रात्रे रुत्तरम्"—इति आ०ब्रा०३,१,२२।

‡ आ०गा०३प०४,२,६।

¶ युवतिरिति मिश्रणार्थ-यौति रूपम्; तथाचैवमर्थः प्रकृति-लभ्यः।

§ "अह्नर्नामान्युत्तराणि द्वादश। अह्नः कस्मादुपाहरन्त्यस्मिन् कर्माणि"—इत्यादि निरु० नै० २, २०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथाष्टमी ।

२ २ ३ १ २  ३ २ ३ २उ ३
प्रत्नस्यवृष्णोअरुषस्यनूमहः

२ ३ १ २ ३ १ २ ३ १ २
प्रनोवचोविदथाजातवेदसे ।

३  १ २३ १२ २२३ २ ३
वैश्वानरायमतिर्नव्यसेशुचिः

१ २  ३ १ २ ३ १ २
सोमइवपवतेचारुरग्नये ॥ ८ ॥ २४ *

२र  १  १ऽ  २  २
† हाउ । ३ । ऊ२ । २ । ऊ२ । वा३ । हाउवा३ ।

१ २१ २ १ र र २१ र २१र
हस्हस्अर्चिःशोचिस्तपोहरः । प्रत्नस्यवृष्णोअरुषस्यनूमा

२ १ र र  र र २१र  २  २र र १र
२३हाः । प्रनोवचोविदथाजातवेदा२३साइ । वैश्वानराय

२ १र र १र  र र २१  २
मतिर्नव्यसेशू२३चीः । सोमइवपवतेचारुरग्ना२३या३इ ।

मिच्छति च । अतएव "भद्रा" कल्याणी रात्री "विश्वस्य" सर्वस्य "जगतः" "निवेशनी" निवेशकारिणी "अभूत्" भवति । अहनि स्व-स्व-व्यापारात् खिन्नान् सर्वप्राणिनः स्वाश्रयेषु स्वापयतीत्यर्थः ॥ ७ ॥ २३

* ऋ० ४, ८, १९, ३ ।

† "विष्णोर्व्रतम्"—इति ग्रा०ग्रा० ९, २, २२ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १र १ऽ २ २ २
हाउ। ३। ऊ२। २। ऊ२। वा३। हाउवा३। ई२

१ १ १
३४५॥ ७*॥

२र २र ३र २र ३र २र २ र १
† हाउहाउहाउ। ओहा। २। ओहाइ। वयोहोइ।

२ र १ २ १ २र १ २र १
३। पयोहोइचक्षुर्होइ। ३। श्रोत्रꣳहोइ। ३। आयुर्होइ।

२ र १ २ र १ २र र १ २
३। तपोहोइ। ३। वर्चोहोइ। ३। तेजोहोइ। ३। सुव

१ २र १ २ १ र २र १
र्होइ। ३। ज्योतिर्होइ। ३। प्रक्षस्यवृष्णो अरुषस्यनूमा२३-

२ १ र र र र २ १र २ २र र १र
हाः। प्रनोवचोविदथाजातवेदा२३साइ। वैश्वानरायमति

२ १र २ १र र र ० १ २ २र
र्नव्यसेशू२३चीः। सोमइवपवतेचारुरग्ना२३या३इ। हाउ

र २र २र २र २९ २ र र २ र १
२हाउ। ओहा२। आहाइ। वयोहोइ। ३। पयोहोइ।

२ १ २र १ २र १
३। चक्षुर्होइ। ३। श्रोत्रꣳहोइ। ३। आयुर्होइ। ३।

२ र १ २ र १ २ र १ २ १
तपोहोइ। ३। वर्चोहोइ। ३। तेजोहोइ। ३। सुवर्हो

२र १ २र १ २ ५र र
इ। ३। ज्योतिर्होइ। २। ज्योतिर्हो२। वा२३४औहो

---

* छा० गा०३प० ४,२,७।

† "महावैश्वानरव्रते द्वे"—इति छा० ब्रा० ३,२,२८। तत्र पूर्वम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र　२　१　२ १ र　२　२र　२ १ २र १र　२　१
वा। ए। अग्निःसमुद्रमाचयन्। ए। अग्निमूर्द्धाभवद्दिवः।

२र　२र　१र २ १　२ र　१र र र ३ १ १ १ १
ए। आयुर्द्धीअस्मभ्यंवर्चोधादेवेभ्या२३४५ः ॥ ३ * ॥ २५

वैश्वानरं जगत्यास्तोद्भरद्वाजो बार्हस्पत्यः ।

"पृक्षस्य" सम्पृक्तस्य व्याप्तस्य [यद्वा पृक्षं हविर्लक्षण मन्नं† तद्वतः] "वृष्णः" सेक्तुः "अरुषस्य"‡ आरोचमानस्य "वैश्वानराय"¶ "महः" पूजायुक्तं बलं तेजो वा "नु" क्षिप्रं स्तौमि। अतएव "नः" अस्मदीयं "वचः" वचनं "विदथे" यागे§ "प्रयच्छति" स्तौतीत्यर्थः। "जातवेदसे" जातप्रज्ञाय जातधनाय|| वा तमुद्दिश्येत्यर्थः। उक्तमेव प्रकारान्तरेणादरादाह—"नव्यसे" नवतराय "वैश्वानराय" अग्नये "शुचिः" निर्मला स्तोतॄणां

---

* आ० गा० ३प० ६, १, ३।

† "पृक्षः"—इति अन्ननामसु पञ्चमं नैघण्टुकम् २, ७।

‡ "अरुषीरारोचनान्"—इति निरु० दै० ६, ७।

¶ वैश्वानरः कस्माद् विश्वान् नरान् नयति विश्व एनं नरा नयन्तीति वापि वा विश्वानरा एव स्यात् प्रत्यृतः सर्वाणि भूतानि तस्य वैश्वानरः। तस्यैषा भवति ० ० ० इतो जातः सर्वमिदमभिविपश्यति वैश्वानरः संयतते सूर्य्येण राजा यः सर्वेषां भूतानां मभिश्रयणीयस्तस्य वयं वैश्वानरस्य कल्याण्यां मतौ स्यामेति। तत्को वैश्वानर मध्यम इत्याचार्या। वर्षकर्मणा ह्येतं स्तौति"—इति निरु० दै० १, २१-२२।

§ "विदथः"—इति यागनामसु पञ्चमं नैघण्टुकम् ३, १७। "विदथानि वेदनानि। विदथानि प्रचोदयन्नित्यपि निगमो भवति"—इति नि० नै० ६, ७।

|| "जातवेदाः कस्माज्जातानि वेद जातानि वैनं विदुर्जाते जाते विद्यत इति वा जातवित्तो वा जातधनो जातविद्यो वा जातप्रज्ञानो यत्तज्जातः पशूनविन्दतेति तज्जात-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शोधयित्री वा "चारुः" कल्याणी "मतिः" मननीया स्तुतिश्च "पवते" मत्सकाशात् प्रभवति स्वयमेव गच्छतीत्यर्थः। "सोमः इव" यथा सोमो दशापवित्रात् स्रवति तद्वदित्यर्थः * ॥

"प्रचस्य"- "पृचस्य"—इति "महः"-"सहः"— इति, "प्रनोवोच" "प्रनुवोचम्"—इति, "जातवेदसे"-"जातवेदसः— इति, "नव्यसे"—"नव्यसि"—इति च साम्न ऋचः पाठभेदः ॥ ८ ॥ २४

---

वेदसो जातवेदस्त्वमिति ब्राह्मणं तस्मात् सर्वानृतून् पशवोग्निमभि सर्पन्तीति च तस्यैषा भवति ॥ जातवेदसेसुनवामसोममरातीयतोनिदहातिवेदः। सनःपर्षदति-दुर्गाणिविश्वानावेवसिन्धुन्दुरितात्यग्निः। जातवेदसइति जातवेदस्यां वैवं जातवेदसेर्चाय सुनवाम सोममिति प्रसवायाभिषवाय सोमं राजान ममृत मराती यतो यज्ञार्थं मनिस्मो निदहाति। निश्चयेन दहति भस्मीकरोति सोमोददित्यर्थः। स नः पर्षदतिदुर्गाणि विश्वानि दुर्गमानि स्थानानि नावेव सिन्धुं नावा सिन्धुं सिन्धुं नावा नदीं जलदुर्गां महाकुलां तारयति दुरितात्यग्निरिति दुरितानि तारयति। तस्यैषा परा भवति॥ प्रनूतंजातवेदमसश्वंहिनोतवाजिनम्। इदन्नो वर्हिरासदे। प्रहिणुत जातवेदसं कर्मभिः समश्नुवान मपि वोपमार्थं स्यादश्वमिव जातवेदसमितीदन्नो वर्हिरासीदत्विति तदेतदेक मेव जातवेदसङ्गायचं तृचं दशतयीषु विद्यते। यत्तु किञ्चिदाग्नेयन्तज्जातवेदसानां स्थाने युज्यते स न मन्येताय मेवाग्नि रित्यप्येते उत्तरे ज्योतिषी जातवेदसी उच्येते। ततो नु मध्यमः। अभिप्रवन्तसमनेव योषा इति तत्पुरस्ताद्व्याख्यात मथासावादित्य उदुत्यञ्जातवेदसमिति तदुपरिष्टाद् व्याख्यास्यामो यस्तु सूक्तं भजते यस्मै हविर्निरुप्यते यमेव सोग्निर्जातवेदा निपातमेवैते उत्तरे ज्योतिषी एतेन नामधेयेन भजेते"—इति निरु० दै० १. १९—२०।

* "दशापवित्रेण परिमृज्यैष ते योनिरिति ग्रहसादनमिति का० ९, ५, २५। दशापवित्रेण गृहीतं ग्रहं परिमृज्य पात्राद्वहिर्निगतं सोमं मार्जयित्वा एष ते योनिरिति मन्त्रेण ग्रहस्य सादनं करोति। वीप्सा सर्वग्रहार्था इति सूत्रार्थः॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी ।

१ २ ३ १ २र ३ २
विश्वे देवा मम शृण्वन्तु यज्ञ-
२ १र २र २ १र २र३ १ २
मुभे रोदसी अपान्नपाच्च मन्म ।
२ ३ १ २ ३ १ २
मा वो वचाꣳसि परिचक्ष्याणि
३ २उ ३ १ २
वोचꣳ सुम्नेष्विद्वो अन्तमा मदेम ॥ ९ ॥ २५

२र १ २ १ १
* हाउ । ३ । आइहौ । ३ । आइहो२ । ३ । आइ-
२ १ २ १ १ २र २र २ १
हिहा२इ । २ । आइहिहाइ । विश्वे देवा मम शृण्वन्तु या
२ ३ १र र र र २ १ २ १र र
२३ज्ञाम् । उभे रोदसी अपान्नपाच्च मे२३न्मा । मा वो व
र र २ १ २ २र १ २
चाꣳसि परिचक्ष्याणि वो२३चा३म् । हाउ । ३ । आइहौ
१ १ २ १ २ १
। ३ । आइहो२ । ३ । आइहिहा२इ । २ । आइहिहाइ ।
१र र र ३ २ ३ १ १ १ १
सुम्नेष्विद्वो अन्तमा मदा२इमाउवा३ । ई२३४५ ॥ ८ † ॥ २५

---

* "विश्वेषां देवानां व्रतम्"—इति ब्रा० ब्रा० ३, २, २२ ।

† ब्रा० गा० ३प० ४, २, ८ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



एषा त्रिष्टुब् वैश्वदेवी भरद्वाजेन वीक्षिता ।

"विश्वे" सर्वे "देवाः" "मम" मदीयं "मन्म" मननीयं "यज्ञं" यजनीयं पूजां हवींषि वा "शृण्वतु" गृह्णन्त्वित्यर्थः । "अपान्नपात्" मध्यस्थानोऽग्निश्च* "उभे रोदसी" द्यावा-पृथिव्यौ अस्मदीयं स्तोत्रं शृण्वन्तु चित्ते अवधारयन्तु ।

अथ प्रत्यक्ष-कृताः—हे "देवाः"! "वः" युष्माकं "परि-चक्ष्याणि" परिवर्जनीयानि यानि "वचांसि" स्तोत्राणि "मा

---

* "अपान्नपात् तनूनप्त्रा व्याख्यातः"—इत्यादि निरु०दै०४,१८—१९। "तनून-पादाज्यं भवति नपादित्यनन्तरायाः प्रजाया नामधेयम्"—इत्यादि निरु० दै० २, ५ ॥ "आपः—इत्यन्तरिक्षनामसु अष्टमं नैघण्टुकम् १,३। "नपात्"—इति अपत्यनामसु तयोदशं नैघण्टुकम् २, २। अग्नेर्मध्यस्थानत्वं जातत्वादिकञ्च यथा—"अपा मुपस्थ उपस्थाने महत्यन्तरिक्षलोक आसीना महान्त इति वा गृह्णत माध्यमिका देवगणा विश इव राजान मुपतस्थुर्ऋग्मियं मृग्मन्त मिति वार्चनीय मिति वा पूजनीय मिति वा हरद् दूतो देवानां विवस्वत आदित्याद्विवस्वान्विवासनवान् प्रेरितवतः परागता-द्वास्याग्नेर्वैश्वानरस्य मातरिश्वान माहर्त्तार माह। मातरिश्वा वायुर्मातर्यन्तरिक्षे श्वसिति मातर्याश्वनितीति वाथैनमेताभ्यां सर्वाणि स्थानान्यभ्यापादंस्तौति ॥ मूर्द्धाभुवोभवतिनक्तमग्निस्ततस्सूर्योजायतेप्रातरुद्यन् । मायामूतुयाज्ञियानामेताम-पोयत्तूर्णिश्चरतिप्रजानन्। मूर्द्धा मूर्त्त मस्मिन् धीयते मूर्द्धा यः सर्वेषां भूतानां भवति नक्त मग्निस्ततः सूर्यो जायते प्रातरुद्यंस्स एव। प्रज्ञां त्वेतां मन्यन्ते यज्ञि-यानां देवानां यज्ञसम्पादिना मपो यत् कर्म चरति प्रजानन् सर्वाणि स्थानान्यनु-सञ्चरति त्वरमाणस्तस्योत्तरा भूयसे निर्वचनाय ॥ स्तोमेनहिदिविदेवासोअग्निमजी-जनञ्छक्तिभीरोदसिप्राम्। तमूअकृण्वन्त्रेधाभुवेकंसओषधीःपचतिविश्वरूपाः। स्तोमेन यं हि दिवि देवा अग्नि मजनयञ्छक्तिभिः कर्मभिर्द्यावापृथिव्यो रापूरणन्तमकुर्वं-स्त्रेधा भावाय पृथिव्या मन्तरिक्षे दिवीति शाकपूणिर्यदस्य दिवि तृतीयं तद-सावादित्य इति हि ब्राह्मणं तदग्नीहत्य स्तौत्यथैनमेतयादित्यहत्य स्तौति"—इति निरु० दै० १, २६—२८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी ।

१ २ ३ १ २ ३ १र २र ३ २
यशोमाद्यावापृथिवीयशोमेन्द्रबृहस्पती ।
२ ३ १ २ ३ १ २ ३ १ २
यशोभगस्यविन्दतुयशोमाप्रतिमुच्यताम् ॥
२ २ २ ३ २ ३ १ २ ३ १ २
यशस्वा३ऽस्याः सꣳसदोऽहमप्रवदितास्याम् ॥ १० ॥ २६

२ऽ १र २र १र र २ १र २ऽ
* हाउ३वा । यशोमाद्यावापृथिवी । हाउ३वा ।
१र २र २र २ऽ २ र २
यशोमेन्द्रबृहस्पती । हाउ३वा । यशोभगस्यविन्दतु ।
२ र २र १ २ र २ऽ २
हाउ३वा । यशोमाप्रतिमुच्यताम् । हाउ३वा । यश
१ र २ १ २ऽ २ १ २ १र र
स्वियस्याःसꣳसदः । हाउ३वा । अहम्पवदितास्याम् ।
२ऽ १ २ १
हाउ३वा । अस्वमिष्टये३हस् ॥ १२ † ॥ २६

वोचं'' न ब्रवीमि अपितु समीचीनानीति । अतः, "वः" युष्माकम् "अन्तमाः" अन्तिकतमाः सन्तो वयं "सुम्नेष्वित्'' युष्माभिर्दत्तेषु सुखेष्विव ‡ वर्तमानाः "मदेम'' मोदेम ॥

"यज्ञम्"—"यज्ञियाः"—इति पाठौ ॥ ८ ॥ २५

---

* "यशः"—इति षा०ब्रा०३,२,२३ ।

† षा०गा०२प०४,२,१२ ।

‡ "सुम्नम्"—इति सुखनामसु षोडशं नैघण्टुकम् ३, ६ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ एकादशी।

१ २ ३ १ ७क २र ३ १ २ ३ १ २ ३ १ २ ३ १ २ ३ २
इन्द्रस्यनुवीर्य्याणिप्रवोचंयानिचकारप्रथमानिवज्री।

२ ३ २ ३ २ ३ १ २ ३ २ ३ १ २ ३ १ २
अहन्नहिमन्वपस्ततर्द प्रवक्षणाअभिनत्पर्वतानाम्॥ ११॥२७*

वामदेवो महापङ्क्त्या स्तौति लिङ्गोक्तदेवता।

"द्यावापृथिवी" द्यावापृथिव्योः "यशः" "मा" स्तोतारम् "आविन्दतु" लभतां प्राप्नोत्वित्यर्थः। किञ्च, "इन्द्रबृहस्पती" इन्द्राबृहस्पत्योः † "यशः" "मा" मां विन्दतु। किञ्च, "भगस्य" आदित्यस्य ‡ "यशः, "मा" मां विन्दतु। बहुलेन यशसा यशोमया "मा प्रतिमुच्यताम्" न प्रमुच्यताम्। "यशस्त्रस्याः" अस्याः मम "संसदः" समूहस्य "यशः" न प्रमुच्यताम्। "अहं" प्रवदिता सर्वत्र प्रवक्ता "स्याम्" भूयासम्॥ १०॥ २६

---

* ऋ० १, २, ३६, १।

† "तिस्रएव देवता इत्युक्तं पुरस्तात्तासां भक्ति-साहचर्यं व्याख्यास्यामः। . . .। "अथैतानीन्द्रभक्तीनि। . . .। अथास्य संस्तविका देवा अग्निः सोमो वरुणः पूषा बृहस्पतिः ब्रह्मणस्पतिः पर्वतः कुत्सो विष्णुर्वायुः। अथापि मित्रो वरुणेन संस्तूयते पूष्णा रुद्रेण च सोमोऽग्निना च पूषा वातेन च पर्जन्यः"—इति निरु० दै० १, १०।

‡ "भगो व्याख्यातः तस्य कालः प्रागुत्सर्पणात्"—इत्यादि निरु० दै० ६, १३—१४। "जार आ भगम्। जार इव भग मादित्योऽच जार उच्यते"—इत्यादि निरु० नै० ९, १६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ र  २ १र  २र१र
* वृत्रहत्यायहोइ। ३। अधृष्णवेहोइ। ३। अपूरवे
२र१  २ १र र  २ १र
होइ। २। अपूरावा२इ। पृथिवीच्चाहोइ। विवर्त्तयाहो
२ १  २ १  २र १र
इ। २। विवर्त्तीया२। अन्तरिक्षᳬहोइ। ३। सुधारया
२र१  २ १रर  २र१र
होइ। २। सुधारायारे। दिवंवेपाहोइ। ३। अवेपयो
२ र१  १  १ऽ
होइ। २। अवेपाया२ः। होइ। २। ऊवे२। हा
१ ऽ  १  २१  २  १
३१उवा२। इन्द्र२। २। इन्द्र। स्यनू। २। स्यनू३। आ
१  २र १र  २१  २  १
उ। वा२। वीर्य्याणि। प्रवा। २। प्रवा३१उ। वा२३।
२ १११  १र र ऽ  १र  २१  २
चा२३४५म्। यानी२। २। यानि। चका। २। चका३१
१  २ १र  २१  २  १
उ। वा२। रप्रथमा। निवा। २। निवा३१उ। वा२३।
२ ११११  १ ऽ  १  २१
जी२३४५। अह२न्। २। अहन्। अहाइम्। २।
२  १  १२१  २१  २  १
अहा३१उ। वा२। अन्वपः। तता। २। तता३१उ। वा
३ ११११  १ ऽ  १  २१  २
२३। हा२३४५। प्रव२। २। प्रव। क्षणाः। २। क्षणा३१

* "वार्चघ्नम्"—इति सा० ब्रा० ३, २, २३।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १ २ १

उ। वा२। अभिनत्या। र्वता।२। र्वता३१उ। वा२३।

१ १११ १ २ १ २ २ १ २

ना२३४५म्। वृत्रहत्यायहोइ। ३। अधष्णवेहोइ। ३।

२ २१२ २ २ १ २ १२ २

अपूरवेहोइ। २। अपूरावा२इ। पृथिवीञ्चाहोइ। ३।

२ १ २ २ १ २ १

विवर्त्तयाहोइ। २। विवर्त्ताया२। अन्तरिक्षꣳहोइ। ३।

२ २ १ २ २ २ १ २ १२ २

सुधारयाहोइ। २। सुधाराया२। दिवंवेपाहोइ। ३।

२२१२ २२ १ १ १ ६

अवेपयोहोइ। २। अवेपाया२:। होइ। २। ऊवे। २।

२ १२ २ १२ २ १२

हा३१उवा२। ए। वृत्रहासपत्नहा। ३॥ १७*॥ २७

हृष्टा हिरण्यस्तूपेन त्रिष्टुबेषेन्द्रदेवता।

"वज्री" वज्रयुक्त इन्द्रः "प्रथमानि" पूर्वसिद्धानि मुख्यानि वा "यानि" "वीर्याणि" पराक्रमयुक्तानि "कर्माणि" चकार। तस्य "इन्द्रस्य" तानि वीर्याणि। "नु" क्षिप्रं "प्रवोचं" प्रब्रवीमि। कानि वीर्याणीति? तदुच्यते—"अहिं" मेघम् † "अहन्" हतवान्। तदेकं वीर्यम्। "अनु" पश्चाद् "अपः" जलानि

* ग्रा० गा० ३प० ४, २, १७।

† "अहिः"—इति मेघनामसु एकविंशतितमं नैघण्टुकम् १, १०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी ।

३ १२ ३१ २ २ १ २
अग्निरस्मिजन्मनाजातवेदा

३ २ ३ १ २ ३ १ २ ३ २
घृतम्मेचक्षुरमृतम्मआसन् ।

३ १ २ ३ १२ ३२ ३ १२
त्रिधातुरर्कोरजसोविमानो

१२ ३ १ २ ३ १ २ ३ १ २
जस्रञ्ज्योतिर्हविरस्मिसर्वम् ॥ १२ ॥ २८ *

२ऽ　२ १ २ १ २१२१ २ २२　१ २
† हाउ३वा । अग्निरस्मिजन्मनाजातवे दाः । इडा ।
१　१ २　२ऽ　२ १ २२ १　२१ २ २ १
सुवः । इडा । हाउ३वा । घृतम्मेचक्षुरमृतम्मआसन् ।
१ २　१　१ २　२ऽ　२ १२ २ १२　२२
इडा । सुवः । इडा । हाउ३वा । त्रिधातुरर्कोरजसो

"ततर्द" हिंसितवान् भूमौ पातितवानित्यर्थः । इदं द्वितीयं वीर्यम् । "पर्वतानां" सम्बन्धिनीः "वक्षणाः" प्रवहणशीला नदीः† "प्राभिनत्" कूलद्वय-कर्षणेन प्रवाहितवानित्यर्थः । इदं तृतीयं वीर्यम् ‡ ॥ ११ ॥ २७

---

* ऋ० २,१,२१,१—३,१,२०,२—३,२,५,१ ।

† "अग्नेरिलादम्यक्षानुगानम्—इति ब्रा०ब्रा० ४,२,२४ । अस्यैव द्वितीयमेतत् ।

† "वक्षणाः"—इति नदीनामसु नवमं नैघण्टुकम् १, १३ ।

‡ "अथास्य कर्म रसानुप्रदानं वृत्रवधो या च का च बलकृति रिन्द्र-कर्मैव तत्"—इति निरु० दै० १, १० । वृत्रवधो मेघ-वध इति च तद्भाष्यम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २ १ र १ १ र २१ १ २
विमानः। इडा। सुव.। इडा। हाउ३वा। अजस्र

१र २१ २ १ २ १ र १ १ र
ज्योतिर्हविरस्मिसर्व्वम्। इडा। सुवः। इडा॥ २ *॥ २८

विश्वामित्रऋषिस्त्रिष्टुप्छन्दस्त्वग्निरिति द्वयोः।

उत्तराग्नेः स्तुतिः पूर्वा स्तुतिः सर्वात्मनात्मनः।

हे कुशिकाः! भोक्तृ-भोग्य-भावेन द्विविधम् इदं सर्वं जगत्। "एतावद्वा इदमन्नं चैवान्नादश्च सोम एवान्न मग्नि रन्नादः"—इति श्रुतेः। तत्र सकल-भोक्तृ-वर्ग-रूपेणान्नादोऽग्निः। स च अग्निवाय्वादित्य-भेदेन त्रेधा भूत्वा पृथिव्यन्तरिक्ष-द्युलोकानधितिष्ठति। तदुक्तं वाजसनेयके—"स त्रेधात्मानं व्यकुरुतादित्यं द्वितीयं वायुं तृतीयम्"—इति।

तत्र सः "अग्निः" अहं "जन्मना" एव "जातवेदाः" "अस्मि" श्रवण-मननादि-साधन-नैरपेक्ष्येण स्वभावत एव साक्षात्कृत-परतत्वस्वरूपोऽस्मि। "घृतं मे चक्षुः" यदेतद्विश्वस्यावभासकं मम स्वभावभूतम्प्रकाशात्मकं चक्षुः तद् घृतम् इदानी मत्यन्तं दीप्तम्। यदेतद् "अमृतं" कर्म-फलं दिव्यादि-विविध-विषयोपभोगात्मकं तत् "मे" मम "आसन्" आस्ये वर्तते। सकल-भोक्तृ-वर्गात्मना स्वयमेवावस्थानात् †। एवं स्वात्मनः पृथिव्यधिष्ठातृ-रूपता मभिधाय वाय्वात्मनान्तरिक्षाधिष्ठातृता माह—अर्को जगतः स्रष्टा

* आ० मा० ३५० ६, १, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्राणः । "सोऽर्चन्नचरत्तस्यार्चत आपो जायन्तार्चतैव मेक मभूदिति तदेवार्कस्यार्कत्वम्"—इति श्रुतेः । स प्राणः अहं "त्रिधातुः" त्रिधात्मानं विभज्य तत्र वाय्वात्मना "रजसः" अन्तरिक्षस्य "विमानः" विमाता अधिष्ठातास्मि ॥ तथा आदित्यरूपेण द्युलोकाधिष्ठातृता माह—"अजस्रं ज्योतिः" अनुपक्षीणं नित्यं तेजः प्रकाशात्मा द्युलोकाधिष्ठाता आदित्योऽप्यह मस्मि । एवं भोक्तृ-रूपता मात्मनोऽनुसन्धाय भोग्यरूपता मप्यनुसन्धत्ते । यत् "हविः" भोग्यं प्रसिद्ध मस्ति तत् "सर्वम्" अप्यह मेवास्मि* ।

यद्वा । अहम् "अग्नि रस्मि" देवानां हविः-प्रापणात् अङ्गनादिगुण-युक्तोऽस्मि । किञ्च, "जन्मना" उत्पत्त्या "जातवेदाः" जातप्रज्ञानोऽस्मि । उत्पत्ति-क्षण एव सर्वज्ञोऽह मस्मि । अथवा जातं सर्वं स्वात्मतया वेत्तीति जातवेदाः सर्वात्मक इत्यर्थः । तत् कथम् ? इत्युच्यते—"घृतं मे चक्षुः" यदेतद् घृतं प्रसिद्धमस्ति तन्मे चक्षुः-स्थानीयम्, यथा लोके चक्षुर्भासकम् एवं घृतमपि प्रक्षिप्तं ज्वालामुत्पादयत मम भासकम् । "अमृतं" प्रभारूपं यदमृत मविनाशि ज्योतिः "मे" मम "आसन्" आस्ये वर्त्तते । "त्रिधातुः" प्राणापानव्यानात्मकस्त्रिधा वर्तमानोऽर्कोऽर्चनीयो यः प्राणोऽस्ति सोऽप्यह मेवास्मि । तथा "रजसः" अन्तरिक्षस्य "विमानः" विशेषेण माता परिच्छेत्ता वायुश्चाह मस्मि । किञ्च । "अजस्रं ज्योतिः" नैरन्तर्येण तापकः सूर्यश्चाह मस्मि । किं बहुना । आज्य-पुरोडाशादिरूपं यदेतद्धवि रस्ति तदुपलक्षितं तत्सर्वं मप्यह मस्मि । "सर्वं खल्विदं ब्रह्म"—इति

---

* अत्र यद्वक्तव्यं तत् पुरस्तादेवाहमस्मिप्रथमजाऋतस्येत्यत्र टीकितम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ त्रयोदशी ।

२ ३२ ३१र २र३ १र
पात्यग्निर्विपो अग्रम्पदं वेः
१र ३ १र २र ३ १ २
पातियह्वश्चरणꣳसूर्य्यस्य ।
२ ३ १ २ ३ १ २ ३१र
पातिनाभा सप्तशीर्षाणमग्निः
२र ३ १ २ ३ १ २ ३ २
पातिदेवानामुपमादमृष्वः ॥ १३ ॥ २९ *

॥ तृतीय-दशति ॥

२र २र र १ २र २
† हाउ । ३ । पात्यग्निर्विपो अग्रम्पदं वेः । हा३१उवा
३ ५ २ २ ३
२३ । सूर३४वाः । इह । हा३१उवार३ । ज्योर३४
५ २र २र र १ २र २
तीः । हाउ । ३ । पातियह्वश्चरणꣳह्वरियास्था । हा३
३ ५ २ २ ३
१उवा२३ । सूर३४वाः । इह । हा३१उवार३ । ज्योर२

ष्टुतेः । तमनेकधाग्नेः सर्वात्मकत्व-प्रतिपादनेन परब्रह्मत्त्व मुक्तं भवति ॥

"अजस्रं"-"घर्मः"—इति साम्न ऋचः पाठ-भेदः ॥ १२ ॥ २८

० ऋ० ३,१,९,१—३,१,२५,२—३,१,२५३ ।

† इदमपि मस्यैव।म्नर्गतं तृतीयम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



५ २र २र र र र १ २ २
३४ती:। हाउ। ३। पातिनाभासप्तशीर्षाणमाग्निः। हा

३ ५ २ १ २
३१उवा२३। सू२३४वाः। इह। हा३१उवा २३ ज्यो२३४

५ २र २र र र र र १ २ २
ती:। हाउ। ३। पातिदेवानामुपपादमार्ष्वः। हा३१

३ ५ २ १ २
उवा२३। सू२३४वाः। इह। हा३१उवा२३। ज्यो२३

५
४ती: ॥ ३ * ॥ २९

"अग्निः" "वेः" गन्ता † सर्वत्र व्यापकः "विपः" रिपः भूम्याः ‡ "अग्रं" मुख्यं "पदं" "स्थानं" "पाति" रक्षति। "यह्वः" महान् ¶ अग्निः "सूर्यस्य" "चरणं" चरत्यनेनेति चरणमन्तरिक्षं § "पाति"। "नाभा" ‖ नाभौ अन्तरिक्षस्य मध्ये "सप्तशीर्षाणं" सप्तगणं मरुद्गणं "पाति"। "ऋष्वः" दर्शनीयोऽयम् +

* आ० गा० ३प० ५, १, ३।

† "वेः—इति वेतेर्गतिकर्मणो रूपम्, नै० २, १४, १८।

‡ "विपः"—इति रिप इत्यस्य रेफव्यत्यये वकारभावे रूपम्, "रिपः"—इति तु पृथिवी-नामसु त्रयोदशं नैघण्टुकम् १, १।

¶ "यह्वः"—इति महन्नामसु त्रयोदशं नैघण्टुकम् ३, ३।

§ "अतएवान्तरिक्षनामसु "अध्वा"—इति (नै० १, ३, १२)।

‖ सुपां सुलुगित्यात्वे रूपम् (पा० ७, १, ३९)।

+ "ऋष्वः"—इति पश्यते रूपमिदम् निरु० ६.३० ·१०,९१ १२७०—१४,१२।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थखण्डे—

सैषा प्रथमा।

१ २ २ १ १ ३ १ ३ १ १

भ्राजन्त्यग्नेसमिधानदीदिवोजिह्वाचरत्यन्तरासनि।

१२ २२ ३ १ २ १ २ ३ १२ २२ ३ १ २

सत्वन्नोअग्नेपयसावसुविद्रयिंवर्च्चोदृशेदाः॥ १॥ ३०

२२ २ २ १ २ १ २ २ २

* भ्राजाऔहोहोहाइ। त्यग्नेसमिधानादी१दिवा२ः।

२ २ २ १ २ १ २ २ २ २

जिह्वाऔहोहोहाइ। चरत्यन्तारा१सानी२। सत्वाऔ

१ २ १२ २ २ २ २ २ १ २ १२ २

होहोहाइ। नोअग्नेपयसावसू३वीत्। रयिंवर्च्चोदृशौहो

१ १ २ ४ ५ ४

३। ऊम्मा२। हा। औ३होवा। हो५इ। डा॥ ५ †॥ ३०

"अग्निः" "उपमादम्" "देवानाम्" उपमादकं यज्ञं "पाति" रक्षति॥

"पात्यग्निर्विपोअग्रम्" — "पातिप्रियेरिपोअग्रम्" --इति पाठौ॥ १३॥ २९

इति श्रीमत्सायणाचार्य्य-विरचिते माधवीये सामवेदार्थ-प्रकाशे, छन्दोध्याव्याख्याने षष्ठस्याध्यायस्य तृतीयः खण्डः॥ ३॥

---

* तस्यैव पञ्चम मिदम्।

† आ० गा० २ प० ५, १, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३ १र २र ३ १र २र
वसन्त इन्नु रन्त्यो ग्रीष्म इन्नु रन्त्यः।

३ १र २र ३ १ २ ३ १र २र३ १र २र
वर्षाण्यनु शरदो हेमन्तः शिशिर इन्नु रन्त्यः॥ २॥ ३१

३ ४ २ ४ ५ १र २
* वा५सन्ताः। ई३न्नू३रन्तायाः। ग्रीष्म इन्नुरा१

२ २ २१र २ १ २ २ १र
नी३याः। वर्षाण्यनुशा३। हुम्। रा३दाः। हेमन्तः

२ २ २१११
शिशिर इन्नुरा२ऽन्तियाउ। वा३४५॥ ८ †॥ ३१

वामदेव ऋषिः पङ्क्तिर्भ्राजन्त्यग्न इति द्वयोः।

आग्नेयी प्रथमर्त्व्या द्वितीया दृश्यते तयोः॥

"समिधान" ऋत्विग्भिः समिध्यमान! दीप्त! हे "अग्ने!" "भ्राजन्ती" प्रकाशमाना "आसनि" आस्ये "अन्तर्" मध्ये स्थिता त्वदीया "जिह्वाः" ‡ हवींषि "चरति" भक्षयति। हे "अग्ने"! "वसुवित्"! धनलम्भक! त्वम् "अस्मभ्यम्" "पद्मा" अन्नेन सह "रयिं" रमणीयं धनं "दृशे" दर्शनाय "वर्चः" तेजश्च तेजस्वित्वं वा "अदाः" देहि॥ १॥ ३०

* "ऋतुष्ठा"—इति षा० ब्रा० ३, २, २४।

† षा० गा० ४प० ५, १, ९।

‡ "जिह्वा"—इति वाङ्नामसु च दृश्यते १,११। अग्नेश्च जिह्वाः सप्त काली-करालीत्येवमादयः प्रसिद्धाः, ता एव पुनः ससार इत्यप्युच्यतेऽन्यत्र।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"वसन्तः इन्नु" वसन्तएव चैत्र-वैशाखरूपो वसन्तऋतुरेव "रन्त्यः" रमणीयः भवति। "ग्रीष्मइन्नु" ज्येष्ठाषाढरूपो ग्रीष्म-ऋतुरेव "रन्त्यः" रमणीयः। "वर्षाणि" वर्षा श्रावण-भाद्रपद-रूपेणावयवीभूतः प्रावृट् ऋतुरेव "रन्त्यः" रमणीयः। "तान्यनु" "शरदः" आश्विन-कार्त्तिकरूपेणावयवीभूत ऋतुः "रन्त्यः" रमणीयः। "हेमन्तः" मार्गशीर्ष-पौषरूप एव "रन्त्यः" रमणीयः। "शिशिरइन्नु" माघ फाल्गुनरूप एव "रन्त्यः" रमणीयः * ॥ २ ॥ ३१

---

* अत्रोपनिषत् तद्व्याख्यानञ्च यास्क-कृतम्—सप्तयुञ्जन्तिरथमेकचक्रमेकोअश्वो वहतिसप्तनामा। त्रिनाभिचक्रमजरमनर्वं यत्रेमाविश्वाभुवनाधितस्थुः। सप्त युञ्जन्ति रथमेकचक्रमेकचारिणम् चक्रञ्चकतेर्वा चरतेर्वा क्रामतेर्वैको अश्वो वहति सप्तनामा-दित्यः सप्तास्मैरश्मयो रसानभिसन्नामयन्ति सप्तैनमृषयस्तुवन्तीति वेद मपीतरन्नामै-तस्मा देवाभिसन्नामात्। संवत्सरप्रधान उत्तरोऽर्द्धर्चस्त्रिनाभिचक्रं त्र्यृतुः संवत्सरो ग्रीष्मो वर्षा हेमन्त इति। संवत्सरःसंवसन्तेऽस्मिन् भूतानि। ग्रीष्म ग्रस्यन्ते अस्मिन् रसा वर्षा वर्षात्यासु पर्जन्यो हेमन्तो हिमवान्। हिमं पुनर्हन्तेर्वा हिनोतेर्वा न अजर मजरणधर्माण मनर्वमप्रत्यृत मन्यस्मिन्। यत्रेमानि सर्वाणि भूतान्यभि सन्तिष्ठन्ते तं संवत्सरं सर्वमात्राभि स्तौति। पञ्चारे चक्रे परिवर्त्तमान इति पञ्चर्तुतया। पञ्चर्त्तवः संवत्सरस्येति च ब्राह्मण हेमन्त-शिशिरयोः समासेन षडर आहुरर्पित मिति षडृतुतया। अराः प्रत्यृताः नाभौ। षट् पुनः सहतेः। द्वादशारन्नहितज्जराय। द्वादशप्रधयश्चक्रमेकमितिमासानां मासा मानात्। प्रधिः प्रहितो भवति। तस्मिन् साकन्त्रिशतानशङ्कवोर्पिताःषष्टिर्नचलाचलासः। षष्टिश्च ह वै त्रीणि च शतानि संवत्सरस्याहोरात्रा इति च ब्राह्मणं समासेन। सप्तशतानिविंशतिश्चतस्थुः। सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्रा इति च ब्राह्मणं विभागेन"—इति निरु० नै० ४, २०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया ।

३ १ २　२ १ २　३ २ ३ १ २
सहस्रशीर्षाः पुरुषः सहस्राक्षः सहस्रपात् ।
१र २र ३१ २ ३ ० २　३ २
सभूमिꣳ सर्वतो* वृत्वात्यतिष्ठद्दशाङ्गुलम् ॥ ३ ॥ ३२ †

२ १　१　२ १ र र　२　२
‡ उडुवाहाउ । ३ । सहस्रशीर्षाः पुरू२३षाः । सह-
र १ २ २　२　१ र　२ १र　२　१
स्राक्षः सहस्रा२३पात् । सभूमिꣳ सर्वतोवा२३र्त्वा । अत्यति
२ १र　२　२ १　२　२ १　२
ष्ठद्दशाङ्गू२३लाम् । उडुवाहाउ । २ । उडुवा३हाउ ।
२　१　१ १ १ १
वा३ । इट् इडा २३४५ ॥ १३ ¶ ॥ ३२

सर्व-प्राणि-समष्टि-रूपो ब्रह्माण्ड-देहो विराड़ाख्यो यः पुरुषः सोऽयं "सहस्रशीर्षाः" सहस्र-शब्दस्योपलक्षणत्वात् ॥ अनन्तैः शिरोभिर्युक्त इत्यर्थः । यानि सर्व-प्राणिनां शिरांसि तानि सर्वाणि तद्देहान्तःपातित्वात्तदीयान्येवेति सहस्र-शीर्षत्वम् । एवं सहस्राक्षत्वं सहस्रपादत्वं च । स पुरुषो "भूमिं"

---

* "विश्वतो"—इति ऋ० ।　　† ऋ० ८, ४, १७, १ ।

‡ "द्वे पुरुषव्रते"—इति छा० ब्रा० ३.१.२५ ।

¶ छा० गा० ३प० ५, १, १३ ।

॥ "सहस्रम्"—इति बहुनामसु पठ्यते नैघण्टुके ३, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१ २ ३ २उ ३ १२३ १ २ ३ १ २ ३ १ २
त्रिपादूर्ध्व उदैत्पुरुषःपादोस्येहाभवत्पुनः।

२ ३ २ ३क २र ३ १ ३ २
तथा*विष्वङ्व्यक्रामदशना † नशने अभि ॥ ४ ॥ ३३ ‡

२ १ २र २१र र र १
¶ उह्रुवौहोवा२। ३। त्रिपादूर्ध्वउदैत्पुरु२३षाः।

१र र र र २१ २ १र २ १ २
पादोस्येहाभवत्पू२३नाः। तथाविष्वङ्वियक्रा२३मात्।

२ र र २ २१र र २१
अशनानशने आ२३भी। उह्रुवौहोवा२। २। उह्रु

र १ ३ ५र र ३ ५ २१
वौ। होर। वा२३४। औहोवा। ई२३४डा। उह्रु

र र २१र १ ३ ५र र
वौहोवा२। २। उह्रुवौ। होर। वा२३४। औहो

ब्रह्माण्ड-गोलक-रूपां सर्वतः "आ" समन्तात् "वृत्वा" परिवेष्ट्य दशाङ्गुल-परिमितं देशम् "अत्यतिष्ठत्" अतिक्रम्य व्यवस्थितः। दशाङ्गुलमित्युपलक्षणम्। ब्रह्माण्डाद्बहिरपि सर्वतो व्याप्यावस्थितइत्यर्थः ॥ ३ ॥ ३२

* "ततो"—इति ऋ०। † "त्याशना"—इति च ऋ०।
‡ ऋ० ८, ४, १७, ४। ¶ तच द्वितीयम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी।

१ २ १ २उ ३ २ ३ २उ ३ १ २
पुरुषएवेद९*सर्वयद्भूतंयच्चभाव्यम् †।

१ ५ २ १ र ७र २ १ र
वा। इ२३४वाः। उद्भवौहोवा२। २। उद्भवौ।

१ २ ५र र ३ १ १ १ १
होर। वा२३४। औहोवा। ऊ२३४५॥ १४‡॥ ३२

योऽयं "त्रिपात् पुरुषः" संसार-स्पर्श-रहितः बहुल-स्वरूपः सोऽयम् "ऊर्ध्व उदैत्" अस्मादज्ञान-कार्य्यात्संसाराद्वहिर्भूतः सन् तत्रत्यैर्गुणदोषै रस्पृष्टः उत्कर्षेण स्थितवान्। "अस्य" योयं "पादः" लेशः सोऽयमिह मायायां प्रादुरभवत्। सृष्टि-संहाराभ्यां पुनः पुनरागच्छदिति [अस्य सर्वस्य जगतः परमात्म-लेशत्वं भगवताप्युक्तम्—"विष्टभ्याह मिदं कृत्स्न मेकांशेन स्थितो जगदिति"] तथा मायाया मागत्यानन्तरं "विष्वङ्" देव-तिर्य्यगादि-रूपेण विविधः सन् "व्यक्रामत्" व्याप्तवान्। किं कृत्वा? "अशनानशने" अभिलक्ष्य अशनं भोजनादि-व्यवहारोपेतं चेतनं प्राणि-जातम्, अनशनं तद्रहित मचेतनं गिरि-नद्यादिकम्। तदुभयथा यथा स्यात्तथा। यमेव विविधो भूत्वा व्याप्तवानित्यर्थः॥ ४॥ ३२

---

* "पुरुषएवेदं"—इति } ऋग्वेदीय-पाठौ।
† "भव्यम्"—इति।

‡ आ० गा० ए प० ५, १, १४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ १ २ ३ १ २ ३१ २ ३ १ २ ३ २
पादोस्य सर्वाभूतानि त्रिपादस्यामृतन्दिवि * ॥ ५ ॥ ३४ †

२ २ १ २ २ २
‡ इयौहोवा २। ३। पुरुष एवे द९सार२३र्वाम्।

१ २ २ १ २ २ २ २ २ २ २ २
यद्भूतंयच्चभावा२३याम्। पादोस्य सर्वाभुता२३नी। त्रि

१२ २ २ १ २ १ २ २ १ २ २
पादस्यामृतन्दार२३इवो। इयौहोवा २। २। इयौहो२

३ ५ २ २ ३ ५ १ २ २
वा२३४। औहोवा। ई२३४डा। इयौहोवा २। २।

१ २ १ २ ५ २ २ ३ ५ १ २
इयौहो२। वा२३४। औहोवा। ज्यो२३४ती:। इयौ

२ १ २ १ ३ ५ २ २
होवा २। २। इयौ। हो२। वा२३४औहोवा।

३ १ १ १ १
ई२३४५ ॥ १५ ¶ ॥ ३४

यत् "इदं" वर्त्तमानं जगत् तत् "सर्वं" "पुरुषएव"। "यद्भूतम्" उत्पन्नं जगत् "यच्च भाव्यं" भविष्यज्जगत् तदपि पुरुषएव यथास्मिन् काले वर्त्तमानाः प्राणिनः सर्वेऽपि चराचरात्मकपुरुष-

---

* "उतामृतत्व"—इत्यादिश्च ऋग्वेदीयः।

† ऋ० ८, ४, १७, ४।

‡ "त्रीणि लोकानां व्रतानि, दिवः"—इति ता० ब्रा० ३, २, २५।

¶ आ० गा० १५०५,१,१५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

१ २ ३ २उ ३ १ २ ३ १ २
तावानस्य*महिमाततो†ज्यायाꣳश्चपूरुषः।
३ १ २ ३ १ २र ३ १र २र ३ १ २
उतामृतत्वस्येशानेयदन्नेनातिरोहति‡॥ ६ ॥ ३५¶

२र १र र २ १ २ २र
§ हाउ। ३। तावातस्य। महा२३इमा३। हाउ

स्यावयवाः तथैव गतागामिनो ऽपि कल्पयोर्द्रष्टव्य मित्यभिप्रायः। एतदेवोभयं स्पष्टीक्रियते—"अस्य" पुरुषस्य "सर्वाणि भूतानि" काल-त्रय-वर्त्तीनि प्राणि-जातानि "पादः" चतुर्थोंऽशः। "अस्य" पुरुषस्यावशिष्टं "त्रिपात्" स्वरूपम् "अमृतं" "विनाश-रहितं" सत् "दिवि" द्योतनात्मके स्व-प्रकाश-स्वरूपे व्यवतिष्ठत इति शेषः। [ यद्यपि "सत्यं ज्ञान मनन्तं ब्रह्म"-इत्यनन्तस्य परब्रह्म-णोऽहीयदन्तत्वाभावात् पादचतुष्टयं निरूपयितु मशक्यं, तथापि जगदिदं ब्रह्म-स्वरूपापेक्षया अल्पमिति विवक्षितत्वात् पादत्वो-पचारः॥ ५ ॥ ३४

* "एतावानस्य"—इति,
† "यतो"—इति,
‡ "पादोस्येहा"—इत्यादिश } ऋ०।
¶ ऋ० ७, ४, १७, ३।
§ "अन्तरिक्षस्य"—इति श्या० ब्र० १,२,२५। व्रतमिति शेषः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी।

१ २ २ १ २ ३ २ ३ २ ३१ २
ततो* विराड † जायतविराजोअधिपूरुषः।
२ ३ १२ २२ ३ २४ ३ १ २ ३ २
सजातोअत्यरिच्यतपश्चाद्भूमिमथोपुरः॥ ७॥ ३६ ‡

१ २ २ २ २ १२ २ २२ २ १२
३। ततोज्यायाꣳस्पूरु२३षा३ः। हाउ। ३। उता-
२ २ २२ १ २ २ २ १२
मृतत्वस्येशा२३ना३ः। हाउ। ३। यदन्नेनातिरोहा
२ २ऽ २ १ १ १ १ १
२३ती३। हाउ३। वा३। इट् इडा२३४५॥ १६ ¶॥३५

अतीतानागतवर्तमान-रूप-जगदाद्याधारो योऽस्ति "तावान्" सर्वोऽपि "अस्य" पुरुषस्य "महिमा" स्वकीय-सामर्थ्य-विशेषः। न तु तस्य वास्तवं स्वरूपम्। वास्तवस्तु "पुरुषः" "ततः" महिम्नोऽपि "ज्यायान्" अतिशयेनाधिकइत्यर्थः। "उत" अपिच "अमृतत्वस्य" देवत्वस्य "अयम् ईशानः" स्व-मायया "यत्" यस्मात् कारणात् "अन्नेन" प्राणिनां भोग्येन अन्नेन निमित्त-भूतेन "अति रोहति" स्वकीयां कारणावस्था मतिक्रम्य परिदृश्यमान-जगदवस्थां प्राप्नोति। तस्मात् प्राणिनां कर्म-फल-भोगाय जगदवस्था-स्वीकारात् नेदन्तस्य वस्तु-तत्व मित्यर्थः॥॥ ६॥ ३५

* "तस्माद्"—इति, }
† "विराळ्"इति च, } ऋ०।
‡ ऋ० ८,४,१७,५। ¶ आ० गा० २प० ५,१,१६।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ऽ   १ र २ १र २र   २ऽ   २ १र
* हाउ३वा । ततोविराडजायत । हाउ३वा । विरा
२र र २ १र २   २ ऽ   १ २र १र   २
जोअधिपूरुषः । हाउ३वा । सजातोअत्यरिच्यत ।
ऽ   २ १र र २ १ र २ १   २ ऽ   १.   ३ १ १
हाउ३वा । पश्चाद्भूमिमथोपुरः । हाउ३वा३ । ई२३
१ १
४५ ॥ १७ † ॥ ३६

"विष्वङ् व्यक्रामत्"—इति यदुक्तं तदेवात्र प्रपञ्च्यते—"ततः" तस्मादादि-पुरुषात् "विराट्" ब्रह्माण्ड-देहः "अजायत" उत्पन्नः । [ विविधानि राजन्ते वस्तून्यत्रेति विराट् ‡] "विराजो अधि" विराड्देहस्योपरि तमेव देहमधिकरणं कृत्वा "पुरुषः" तद्देहाभिमानी कश्चित् पुमानजायत । योऽयं सर्व-वेदान्त-वेद्यः परमात्मा सएव रूपेण प्रविश्य ब्रह्माण्डाभिमानी देवतात्मा जीवो ऽभवत् [ एतच्चाथर्वणिकउत्तरतापनीये विस्पष्टमामनन्ति—"स वा एष भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्य मूढो मूढइव व्यवहरन्नास्ते माययैवेति ] । "स जातः" विराट् पुरुषः "अत्यरिच्यत" अतिरिक्तोऽभूत् । विराड्व्यतिरिक्तो देव-तिर्य्यङ्मनुष्यादिरूपोऽभवत् । पश्चाद्देवादि-जीव-भावादूर्ध्वं भूमिं ससर्जेति शेषः । "अथो" भूमि-सृष्टेरनन्तरं तेषां जीवानां "पुरः" ससर्ज [ पूर्य्यन्ते सप्तभि र्धातुभि रिति पुरः ] शरीराणि ॥ ७॥ ३६

* "पृथिव्याः"—इति ऋ० ब्रा० २,२,२५ । व्रतमिति शेषः ।

† आ० गा० ३प० ५, १, १७।

‡ "विराट् विरमणाद्विराजनाद्वाविराधनाद्वा"—इति दै० ब्रा० ३, १२।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मन्येवामिति पञ्चर्चो वामदेवेन वीक्षिताः।
अत्राद्यैकान्तिमे च द्वे त्रिष्टुभस्तासु चादिमा॥
उपरिष्टाज्ज्योतिरिति बन्हृचैव विधीयते।
अन्ये अनुष्टुभौ द्यावा-पृथिव्योः प्रथमा तथा॥
द्वितीयैन्द्री चतुर्थी च तृतीयाग्नीर्निजात्मनः।
स्तुतिर्गवा मन्तिमेति छन्दोदेवत-निर्णयः॥

अथ अष्टमी।

१ २ ३ १ २ ३
मन्येवान्द्यावापृथिवीसुभोजसौ
१र २र ३ १ २ ३ १र २र
येअप्रथेथाममितमभियोजनम्।
१ २ ३ १ २ ३ १र २र ५ १ ५
द्यावापृथिवीभवतꣳस्योनेतेनोमुञ्चतमꣳहसः॥ ८ ॥३७*

१ २र १ २ र र र र र
† ऊवाइ। ३। हूपम्। मन्येवान्दयावापृथिवीसू३
१ २ र र र १ २
भोजा१सा२उ। येअप्रथेथाममितमभी३योजा१ना२म्।

---

* ऋ० षा० ५, १९, २०, २१।

† "द्यावापृथिव्योः"—इति षा० ब्रा० ३, २, २५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र र　　र　　१　२　　　　१र र　　　१
द्यावापृथिवीभवा३ता७स्यो१ना२इ । तेनोमुञ्चता३मा७

२　　　१　　　१र　　३　　५र र
हा१सा२ः । ऊवाइ । ३ । हूपा२ । वा२३४औहोवा ।

२र　र १
ए । हूपम् । ३ ॥ १९ * ॥

२　१र　२　१　　२र　र　　र र
† प्रतिष्ठासिप्रति । ष्ठा । ३ । वर्चोसिमनोसि । एही ।

२ र र र र　र　र र रर　२र　र र
मन्येवान्द्यावापृथिवीसुभोजसावैही । येअप्रथेथाममितम

र　र र र　२र र　र　र र　र र
भियोजनामैही । द्यावापृथिवीभवत७स्योना । ऐही ।

२र र　　र र र　२ १र　२　१　　२
तेनोमुञ्चतम७ंहसाऐही । प्रतिष्ठासिप्रति । ष्ठा । ३ । व

र　र　　र　　२　　२र　२र१
र्चोसिमनोसि । ऐही३ । हाउवा । ए । भूतम् । ३ ।

॥ २१ ‡ ॥ ३७

हे "द्यावापृथिवी" द्यावापृथिव्यौ ! "वां" युवां "सुभोजसौ" शोभन-पालयितारौविति "मन्ये" अहं जानामि हे द्यावापृथिव्यौ ! "अमितम्" अपरिमितं "योजनं" [ युज्यते पुरुषोऽनेनेति योजनम् ] धनादि, तत् "अभ्यप्रथेथाम्" अभिविस्तारयतम् । हे

---

* आ० गा० ३प० ५, १, १९ ।

† "विपरीते"—इति आ० ब्रा० ३, ९, २५ । तत्र द्वितीयम् ।

‡ आ० गा० ३प० ५. १, २१ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

१२ ३ १ २ ३ १ २ ३ २ ३ १ २
हरीतइन्द्रश्मश्रूण्युतोतेहरितौहरी।

१ २ ३ १ २ ३ १ २ ३ १ २
तन्त्वास्तुवन्तिकवयःपुरुषासोवनर्गवः॥ ९॥ ३८

२ र १ २ २ १ र र १ २ २ २ १र
* हरीतइन्द्रश्मश्रूणी। उतोतेहरिता१उहा२री। तान्त्वा

२ ४ ५ २ १र र २ ४ ५
स्तुवन्ति क्वा३। वाया:। पुरुषासोवना३। गावा:।

१ र २ १ २ १ २ १ २ १ र
ऋश्यासइन्द्रभङ्क्तिमघवन्निन्द्रभुङ्क्तिभङ्तिप्रभुङ्क्तिौ

२ र २ १ १ १ १
न्द्रस्तसरपूता२३४५:॥ २२ †॥ ३८

"द्यावापृथिवी" द्यावापृथिव्यौ! युवां अस्माकं "स्योने" सुख रूपे‡ स्व-सुख कार्य्यौ "भवतम्" "ते" द्यावापृथिव्यौ "वः" अस्मान् "अंहसः" पापात् "मुञ्चतम्" मोचयतम्॥ ८॥ ३७

हे "इन्द्र!" "ते" तव "श्मश्रूणि" "हरी" सोम-पानेन हरितवर्णानि [तथाच श्रूयते—"इन्द्रः श्मश्रूणि हरिताभि पुष्णुते"-इति। "शेश्छन्दसि बहुलम् (६, १, ७०)"—इति हरि-

---

* "ऋष्यस्य साम व्रतं वा"—इति आ० व्रा० ३, २, २५।

† आ० गा० ३प० ५, १, १२।

‡ "स्योनम्"—इति सुखनामसु पञ्चदशं नैघण्टुकम् ३, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ दशमी।

१उ ३ १ २ १ २ ३ १ ३ १ २ ३ २
यद्वर्चोहिरण्यस्ययद्वावर्चोगवामुत।
३२ ३ १ २ ३ २ ३१ २३ १ २
सत्यस्यब्रह्मणोवर्च्चस्तेनमासꣳसृजामसि॥ १०॥ ३९

२र २ १ २ १ २र१र १
* हाउ। ३। ऽहमन्नम्। ३। अहमन्नादो। हम
२र१र २र १र २र १ २र
न्नादो। २। हंविधारयो। २। हंविधारयः। हाउ।
१ २र १ २ १ १ र १ २र१र २ १ २
३। यद्वर्चोहिरण्य। स्या। यद्वावर्च्चोगवामू। ता। स
१ २ २र १ १ १र २र १ २र १ २र
त्यस्यब्रह्मणोव। चाः। तेनमासꣳसृजाम। साइ। हाउ

शब्दात्परस्य शेर्लुक्]। "उतो" अपिच। "ते" "हरी" अश्वौ †
"हरितौ" हरिद्वर्णौ। "कवयः" मेधाविनः "पुरुषासः" ‡
पुरुषाः "वनगवः" [ वननीयाः सम्भजनीयाः सेवनीयाः गावो
येषां ते वनगवः मध्यरेफश्छान्दसः ¶। गोस्त्रियो (१,२, ४८)
रितिह्रस्वत्वम् ] तादृशाः "कवयः" "तं" "त्वा" त्वां स्तुवन्ति॥
॥ ९॥ ३८

---

* "दिशां व्रतं दशानुगानम्"—इति श्रा० ब्रा० ३, २, २६।

† "हरी इन्द्रस्य"—इति निघ० १,१५,१।

‡ "आज्जसेरसुक्"—इति पा० ७, १५७।

¶ "वर्णागमोवर्णविपर्य्ययश्च"—इति पा० ३, ४, ९८ वा०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ १ २ १ २र १र १ २र १र
३। अहमन्नम्। ३। अहमन्नादो। हमन्नादो। २।

१ २र १र १ २र १ २१ २ २र
हंविधारयो। २। हंविधारयः। हाउ३। वा। ए।

२ १ २ १ २र १र १ २र १ १ र१
अहमन्नमहमन्नादोहंविधारयः। ३। ए। अहᳬसुव

र ३ १ १ १ १
र्ज्योती२३४५:॥ १ *॥

२र २ १ २र १ २र १
हाउ। ३। अहᳬसहो। हᳬसहो। २। हᳬ

२र १ २ १ २र १ १ १ र २ र १र
सासहिः। अहᳬसासहिः। २। अहᳬसासहानो।

१ र २ र १र १ र २ र १ २र १ २र १
हᳬसासहानोहᳬसासहानः। हाउ। ३। यद्वर्चोहिर

२ १ १ र १ २र १ र २ १ २ १ २ १ २र १ १
ण्य। स्या। यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणोव। चाः।

१र २र १ २र १ २र २ १ २र
तेनमासᳬसृजाम। साइ। हाउ। ३। अहᳬसहो।

१ २र १ २र १ २ १ २र १
हᳬसहा। २। हᳬसासहिः। अहᳬसासहिः। २।

२ १ र २ र १र १ र २ र १र १ र २ र १
अहᳬसासहानो। हᳬसासहानो। हᳬसासहानः।

* आ० गा० ३प० ५, २, १।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ऽ १ २र २ १ १र १ २र १ २ १ र २ र
हाउ। ३। वा। ए। अहꣳसहोहꣳसासहिरहꣳसासहा

१ २र २ १ र ३ १ १ १ १
नः। ३। ए। अहꣳसुवर्ज्योती२३४५ः ॥ २ * ॥

२र २ १ २र १ २र १ २र
हाउ। ३। अहंवर्चो। हंवर्चो। हंवर्चः। हाउ।

१ २र १ २ १ १ २र १ १र १ र २ १ २ १
३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामू। ता। सत्य

२ १ २र १ १ १र २र १ २र १ २र
स्यब्रह्मणोव। चाः। तेनमासꣳहजाम। साइ। हाउ।

१ २र १ २र १ २र २ २र
३। अहवर्चो। हंवर्चो। हंवर्चः। हाउ। ३। वा। ए।

२ १ २र १ र २ १ १ १ १
अहंवर्चः। ३। ए। अहꣳसुवर्ज्योती२३४५ः ॥ ३ † ॥

२र २ १ र २र १ र २र १ र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः।

२र १ २र १ २ १ १ २र १ २र १ र २
हाउ। ३। यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामू।

१ २ १ २ १ २र १ १ १र २र १ २र १
ता। सत्यस्यब्रह्मणोव। चाः। तेनमासꣳहजाम। साइ।

२र २ १ र २र १ र २र १ र २र
हाउ। ३। अहन्तेजो। हन्तेजो। हन्तेजः। हाउ।

२ १ र २ १ र ३ १ १ १ १
ए। अहन्तेजः। ३। ए। अहꣳसुवर्ज्योती२३४५ः ॥ ४ ‡ ॥

*, †, ‡ ग्रा० गा० ३५० ५, २, १-३-४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १ २र १ २र १ र
हाउ। ३। दिशन्दुहे। दिशन्दुहे। २। दिशौ

१ र १ र २ र १ र २ र २र १ २र १
दुहे। ३। दिशोदुहे। ३। सर्वादुहे। ३। हाउ। यद्वर्चोहिर

२ १ १ २र १ २र १ र २ १ २ १ २ १ २र १ १
ण्य। स्या। यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणोव। चाः।

१र २र १ २र १ २र १ २ र
तेनमासꣳसृजाम। साइ। हाउ। ३। दिशन्दुहे।

१ र २ र १ र २ र १ र २ र
३। दिशोदुहे। ३। दिशोदुहे। सर्वादुहो। ३।

२र २ २र १ २ र १ र २ र १ र २ र १ २ २ र
हाउ। वा। ए। दिशन्दुहेदिशौदुहेदिशोदुहेसर्वादुहे।

२र २ १ र ३ १ १ १ १
३। ए। अहꣳसुवर्ज्योती२३४५ः॥ ५ * ॥

२र १ र २ १ २
हाउ। ३। मनोजयित्। ३। हृदयमजयित्। ३।

१ र २ २ १ २र २र १ २र १
इन्द्रोजयित। ३। अहमजैषम्। ३। हाउ। यद्वर्चोहिर

२ १ १ २र १ २र १ र २ १ २ १ २ १ २र १
ण्य। स्या। यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणोव।

१ १र २र १ २र १ २र १ र २
चाः। तेनमासꣳसृजाम। साइ। हाउ। मनोजयित्।

१ २ १ र २ २ १ २र
३। हृदयमजित। ३। इन्द्रोजयित्। ३। अहमजैषम्।

* आ० गा० १प० ५, २, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३। हाउ३वा। ए। मनोजयिद्वृदयमजयिदिन्द्रोजयिदह्
मजैषम्। ३। ए। अह०सुवर्ज्योती२३४५: ॥ ६ ॥

हाउ। ३। वयः। ३। वयोवयः। ३। हाउ। ३।
यद्वर्चाहिरस्य। स्या। यद्वावर्चोगवाम्। ता। सत्यस्य
ब्रह्मणोव। चाः। तेनमास०सृजाम। साइ। हाउ।
३। वयः। ३। वयोवयः। ३। हाउ३। वा। ए। वयो
वयोवयः। ३। ए। अह०सुवर्ज्योती२३४५: ॥ ७ ॥

हाउ। ३। रूपम्। ३। रूप०रूपम्। ३। हाउ
३। यद्वर्चाहिरण्य। स्या। यद्वावर्चोगवामृता। स
त्यस्यब्रह्मणोव। चाः। तेनमास०सृजाम। साइ।
हाउ। ३। रूपम्। रूपा०रूपम्। ३। रूपम्। ३। ए।
अह०सुवर्ज्योती२३४५: ॥ ८ * ॥

---

* आ० गा० ३प० ५, २,९-७-८।

४२ ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १ २ १ २
हिहियऊ२। ३। उदपप्तम्। उदपप्तम्। २।
२र १र २ २ १ २र १ २
ऊर्द्ध्वीनभाᳬस्यरुषि। ३। व्यद्यौत्सम्। ३। अततनम्।
२र २र २र १ १र १ २ १
३। हाउ। हाउ। हाउ। यद्वर्चोहिरण्य। स्या।
१ २र १२र १ र २ १ २ १ २ १ १र १ १ १र
यद्वावर्चोगवामू। ता। सत्यस्यब्रह्मणो व। चाः। तेन
२र १ १र १ १ २ १ २
मासᳬसृजाम। साइ। हिहियऊ२। ३। उदपप्तम्।
२र तर र २ १ २र १ २
३। ऊर्द्ध्वीनभाᳬस्यरुषि। ३। व्यद्यौत्सम्। ३। अतत
२ऽ २ २र १ २ र१र र २ २
नम्। ३। हाउ३वा। ए। उदपप्तमूर्द्ध्वीनभाᳬस्यरुषिव्य
२र १ २ २ १ ३ ११११
द्यौत्समतनम्। ए३। पिन्वसा२३४५॥ ८ *॥

२र १र १ २र १र
हाउ। ३। प्रथे। ३। प्रत्यष्ठाम्। ३। हाउ। ३।
१ २र १ २ १ १ र१२र१ र २ २ १
यद्वर्चोहिरण्य। स्या। यद्वावर्चोगवामूता। सत्य
२१ २र१ १ १र २र१ २र १ २र
स्यब्रह्मणोव। चाः। तेनमासᳬसृजाम। साइ। हाउ।

* आ० गा० ३प० ५, २, ८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ एकादशी।

२ ३ १ २ ३ २ ३२
सहस्तन्नइन्द्रदध्योज
३क २ ३ १ २
ईशेह्यस्यमहतोविरप्शिन्।

१र १ २र २१ ३ २ १र १र
३। प्रये। ३। प्रत्यष्ठाम्। ३। हाउ३। वा। ए। प्रयेप्रत्य
२र १र २ १ र १ १११
ष्ठाम्। ए। अहंसुवर्ज्योतीर२३४५ः॥ १० *॥ ३९

वामदेव ऋषिः। अनुष्टुप् छन्दः। आग्रासने विनियोज्या।

"हिरण्यस्य" हित-रमणीयस्य एतन्नामकस्य "यद्वर्चः" तेजोऽस्ति। "यद्वा" अपिच। "गवाम्" एतन्नामकानां † "यद्वर्चः" तेजोऽस्ति। "उत" अपिच। "सत्यस्य" सर्वैः सम्मतस्य ‡ "ब्रह्मणः" यद्वर्चोऽस्ति तेन तैः "अं" "संसृजामसि"¶ सम्पादयामः। नवन्तः पशुमन्तः श्रोत्रिया भवेमेति तात्पर्यार्थः॥ १०॥ ३९

---

* ग्रा० गा० ३प० ५, २, १०।

† "हिरण्यं कस्माद्ध्रियत आयम्यमानमिति वा ह्रियते जनाज्जनमिति वा हितरमणं भवतीति वा हृदयरमणं भवतीति वा हर्यतेर्वा स्यात् प्रेप्साकर्मणः"—इति निरु० नै०२,१०।

‡ गौरिति निघण्टौ पञ्चर्थः (१,१,१—१,४,४—१,५,३—१,११,४—१,१५,७—२,११,१०।

¶ "सत्यं कस्मात् सत्सु तायते सत्प्रभवं भवतीति वा"—इति निरु० नै०३,१२।

‖ "इदन्तोमसि"—इति पा०७,१,४६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ३ १ ३ १ २ २र ३ १ २
क्रतुन्ननृम्ण७स्थविरञ्चवाजं
३ २ ३ १ २ ३ १ २
वृत्रेषुशत्रूनत्सहनाकृधीनः ॥ ११ ॥ ४०

२र १ २ १ २ १
* हाउ। ३। आइही। ३। ओहा। २। ओ
२ २र १ १ १र
हा३। हाउ। ३। सहस्तन्नइन्द्रदध्यो२जाः। आया
१ऽ २र १ १र र र
२उ। ऊ। आयाउ। ३। ईशेह्यस्यमहतोविरा२
१ १र १ऽ २र १ १
ण्शायिन् †। आया२उ। ऊ। आयाउ। ३। क्रतुन्न
१ १र १ऽ २र १
नृम्ण७स्थविरञ्चवा२जाम्। आया२उ। ऊ। आया
२ १र र र १ १र
उ। ३। वृत्रेषुशत्रूंत्सुहनाकृधा२इनाः। आया२
१ऽ २र १ २र १
उ। ऊ। आयाउ। ३। हाउ। ३। आइही।
१ २ १ २ १ २ २ऽ २र
३। ओहा। ओहा। ओहा३। हाउ३। वा। ए
२र १र २ १ २ र १र र र ३ १ १ १ १
आयुर्द्वाअस्मभ्यंवर्चोधादेवेभ्या२३४५ः ॥ १७ ‡ ॥ ४०

---

* "कश्यपव्रतं दशानुगानम् * * * गवांव्रते"—इति श्रा० ब्रा० ६, २, २७ तत्र प्रथम मिदम्।

† "ण्शारन्"—इति क० पु० पाठः।

‡ श्रा० गा० ३प० ५, २, १७।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी ।

२ १ २ ३ १ २ ३ १ २
सद्दर्षभाःसुसद्दवत्साउदेत

१ २ ३ २ ३ १ २
विश्वारूपाणिविभ्रतीर्द्व्यध्नीः ।

३ २ ३ २ ३ १ ० ३ २
उरुःपृथुरयंवोअस्तुलोक

३ १२ २२ ३ २ ३ १ २
इमाआपस्सुप्रपाणाइहस्त ॥ १२ ॥ ४१

॥ चतुर्थ-दशति ॥

२ ३ १ २२ १ २२ १२ २
* हाउ३वा। सद्दर्षभाःसद्दवत्स। उदेत। हाउ३

हे "विरप्शिन्" विशेषेण रपणं व्यक्त-वचनं तदस्यास्तीति विरप्शी, तस्य सम्बोधमं हे विरप्शिन्! विशेषेण स्तोत्र-विषये सव्यवाक्य? "इन्द्र!" "ते" तव "सहः" शत्रूणा मभिभवन-रूपम् "ओजः" बलं "नः" अस्मभ्यं "दद्धि" देहि [ ददाते-श्छान्दसं रूपं लोड़ि हेर्द्विभावादिना ] यस्मात् त्वं तस्य "अस्य" "महतः" बलस्य "इशे" ईश्वरो भवसि। अतो हे इन्द्र! "नः" अस्माकं "क्रतुं न" यज्ञमिव "नृम्णं" धनं "स्थविरम्" अतिशयेन प्रवृद्धं, "वाजं" बलं च "कृधि" कुरु। किञ्च नोऽस्माकं "शत्रून्" "वृतेषु" आवरकेषु उपायेषु "कृधि" कुरु ॥ ११ ॥ ४०

* "निरुक्ताभिमिरुक्तौ द्वा वनड्डहते वा"—इति, षा० ब्रा० ९, २, २७। तत्र प्रथम मिदम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २र१र २ १ २र र र २ऽ २ १
वा। विश्वारूपाणिबिभ्रतीद्यूभ्नीः। हाउइवा। उरुः-
२ १ र १ र ९ र १ २ऽ २ १र र २
पृथुरयम्बोअस्तुलोकः। हाउइवा। इम। आपःसुप्र-
र १र २ १ २ऽ १ २ १
पाणाइहस्त। हाउइवा। अम्वमिष्टयेइहसम्मा ॥१८*॥ ४१

हे "सहर्षभाः" वृषभैः सहिताः! "सहवत्साः" वत्सैः सहिताः! गावः! "द्व्यध्नीः" सायं प्रातः काले द्विविधान्यूधांसि यासां ता द्व्यध्नीः द्व्यध्न्यः! "विश्वा" सर्वाणि नाना "रूपाणि" "बिभ्रती" बिभ्रत्यः यूयम् "उदेत" उद्गच्छत सम्यक् आगच्छत। किञ्च। "उरुः" बहुः "पृथुः" विस्तीर्णः [ उरुः पृथु रिति शब्दाभ्याम् आयाम-विस्तारौ उच्येते। "अयं लोकः" "वः" युष्माकम् "अस्तु" भवतु। "इमा आपः" "इह" लोके भूतले अस्मिंस्थाने "सुप्रपाणाः" सुखेन प्रकर्षेण पातुं योग्याः सन्तु त बद्धीभूताः "स्त" भवत उपविशतेति पूर्वेण सम्ब १२ ॥ ४१

इति श्रीमत्सायणाचार्य्य-विरचिते सामवेदार्थ-प्रकाशे छन्दो-व्याख्याने षष्ठस्याध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

* ग्रा० गा० ३प० ५, २, १९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



## अथ पञ्चम-खण्डः—

सैषा प्रथमा।

२ ३ १ २ ३ २ ३ २ ३ १ २
अग्न आयूᳪषिपवस आसुवोर्जमिषञ्चनः।
३ १ २ ३ १ २
आरेबाधस्वदुच्छुनाम्॥ १ ॥ ४२*

२र १ २र १ १ २ १र र
† भ्राजा। २। भ्राजा३१उ। वा२। अग्न आयूᳪ
२ र १र २ १र २ १ २ २र१र र २ १ र
षिपवसे। आसुवोर्जमिषञ्चनः। आरेबाधस्वदुच्छुनाम्।
२र १ २र १ २र १र
भ्राजा। २। भ्राजा३१उ। वा२। ए। भ्राज।
३॥ ५‡॥ ४२

चतुर्दशाग्न आयूंषीत्याद्यास्तत्र जगत्यसौ।
विभ्राट् त्रिष्टुप् चित्रमिति गायत्री द्वादशेतराः॥
आद्याग्नेः पवमानस्य स्तुतिः सौर्यस्त्रयोदश।
ऋषीणां विप्रकीर्णत्वात्तत्र तत्राभिदध्महे॥
शतं वैखानसा एवं दृष्टवन्तो महर्षयः।

---

* ऋ० ७, २, १०, ३=उ० ६,३,१०,१।
† "सूर्यस्य भ्राजाभ्राजे द्वे"—इति आ० ब्रा० ३, २, २८। तत्र प्रथममिदम्।
‡ आ० गा० ३प० ६, १, ५।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वितीया।

३२ ३ १ २ ३ २उ
विभ्राड्बृहत्पिबतुसोम्यम्मध्वा
३१ २३१२३१ २
यद्दधद्यज्ञपतावविह्रुतम्।
१२ ३१ २३ १२३ १२
वातजूतोयोअभिरक्षतित्मना
३१ २ ३ १र २र
प्रजाःपिपर्त्तिबहुधाविराजति॥ २॥ ४३ *

१ २ १ र १ २ २
† हाहाउ। ३। इडा। ३। हस्। ऋतम्मो।
२ १र र १ १र
३। विभ्राड्बृहत्पिबतुसोमियार्२म्माधूर्२। आयुर्दधद्य
र १ १र र र र
ज्ञपतावा२इह्रुता२म्। वातजूतोयोअभिरक्षता२ इ
१ २ १र र १ १ २उ
त्माना२। प्रजाःपिपर्त्तिबहुधाविरा२जाती२। हाहाउ।

हे "अग्ने" पवमान-रूप! अस्माक मायूंषि अन्नान्येतन्नामकानि वा "पवसे" चरसि "नः" अस्माकम् "ऊर्जम्" अन्नरसम् "इषम्" अन्नं च "आसुव" आभिमुख्येन प्रेरय। किञ्च। "दुच्छूनां" [रक्षोनामैतद्] रक्षांसि "आरे" अस्मत्तो दूरएव ‡ "बाधस्व" सम्पीडय॥ १॥ ४२

* उ० ६,३,५,१=ऋ० ८,८,२८,२।

† "वायोर्विकर्णभासे द्वे स्तोत्रे"—इति ब्रा० ब्रा० ३,२,२८। तत्र विकर्णं नाम प्रथममिदम्।

‡ "आरे"—इति दूरनामसु पठितं नैघण्टुकम् ३, २६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ र　　१　　२ १ र　　१र
३। इडा। ३। हस्। ३। ऋतम्भे। ३। औहो
३र　२　१　२ १ र　१र　३र
वाहाउ। वा। फा२ट्। ऋतम्भे। ३। औहोवा
२　२　१　२ १ र　१र　३र
हाउ। वा। फा२ट्। ऋतम्भे। ३। औहोवा
२　२　१
हाउ। वा। भ्रा२ट्॥ ७*॥ ४३

विभ्राण्नामक एतान्तु-सूर्य-पुत्रो ददर्श सः।

"विभ्राट्" विभ्राजमानः विशेषेण दीप्यमानः† सूर्यः "बृहत्" परिवृढं "सोम्यं" सोममयं‡ "मधु" पिबतु। किं कुर्वन्? "यज्ञपतौ" यजमाने "अविह्रुतम्" अकुटिलम्¶ अकण्टकम् "आयुर्दधत्" अन्नं वा कुर्वन्§। "यः" सूर्यो "वातजूतः" वातेन वायुना प्रेर्यमाणः सन्‖ "त्मना"+ आत्मना स्वयमेव "अभि रक्षति" सर्वं जगदभिरक्षन् पालयति [राशि-चक्रस्य वायु-प्रेर्यत्वात् सूर्यस्यापि तत्प्रेर्यत्वम्] स सूर्यः "प्रजाः" "पिपर्ति" वृष्ट्यादि-प्रदानेन

---

* आ० गा० ३प० ६, १, ७।

† विभ्राडिति ज्वलतिकर्मणो "भ्राजते"—इत्यस्य रूपम् (नै० १,१६.१)।

‡ "सोम मर्हति यः"—इति पा० ४, ४, १३७।

¶ "ह्वृ कौटिल्ये (भ्वा० प०)"—इत्यस्येदं रूपमिष्टं विह्रुतमितीत्यभिप्रायः। "ह्रु ह्वरेश्छन्दसि (७, २, ३१)"—इति ह्रु आदेशः। "अविह्रुत मखण्डित मायुः"—इति वेददीपः य० मा० मा० स० ३१, ९०।

§ "आयुः"—इत्यन्ननामसु त्रयोविंशं पदम् २, ७।

‖ "जुङ् गतौ (भ्वा०आ०)"—इत्यस्यैव णिजन्तस्येदं जूत इति रूपमित्यभिप्रायः।

+ "मन्त्रेष्वाङ्यादेरात्मनः"—इति पा० ६, ४, १४१।

४३ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ तृतीया।

२ २ ३ २ ३ १ २ ३ १ २ ३
चित्रन्देवानामुदगादनीकं
१ २ ३ २ ३ १ २ ३ २
चक्षुर्मित्रस्यवरुणस्याग्नेः।
२ ३ १ २ ३ २ ३ १ २ ३
आप्राद्यावापृथिवीअन्तरिक्षꣳ
१ २ ३ १र २र ३ १ २
सूर्यआत्माजगतस्तस्थुषश्च॥ ३॥ ४४ *

१ १ १ १ १ १
† उवी२उवि। उविहो२उवि। त्रिः। इती२इति।
१ १ १ १ १ १
इतिहो२इति। त्रिः। असी२असि। असिहो२अ
१ र २ र १ २ १र १ १
सि। त्रिः। अरूरुचोदिवम्पृथिवीम्। असी२असि।
१ १ १ २ ३ १र र २र र
असिहो२असि। एवन्त्रिः। पतिर। स्वपामोषधीना

पूरयति पालयति वा। "बहुधा" "विराजति" विशेषेण दीप्यते च॥

"पिपर्ति"-"पुपोष"—इति, "बहुधा"—"पुरुधा"—इति च पाठौ॥ २॥ ४३

---

* ऋ० १, ८, ७, १।

† "आदित्यव्रतम्"—इति सा० ब्रा० ३, ९, २९।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १२ ३ ५ १
३म् । ओइ । पताइरा२३४सी । एवम् त्रिः । चा

१ २र १र २र १ २र १ र २ १ र २र र १र र
इ । चन्देवानामुदगादनीकम् । वाइश्वेषान्देवाना९

२ १ २ १र १ १र १ १र
समिदजस्वज्ज्योतिरातता२म् । होइ । ३ । आयुर्यन् ।

१ १ २ १ २ १ २ र १र २
३ । अवः । ३ । चक्षुर्मित्रस्यवरुणस्याग्नेः । सुवःस९

३ २ १ २ २ १र १ १ १
सर्पस९सार्पा ३ । जनावन९सुवा२ःसुवः । जना२वना

१ १ १र र र र र ०
२म् । सुवा२ःसुवः । त्रिः । आप्राद्यावापृथिवीअन्त

२ २ र र र २ र र
री२३क्षा३म् । इपिप्रइपीऐही । ३ । अस्तोषतस्वभा

र र र २ र र र र र २र र र
नवाऐही । विप्रानविष्टयामताएही । ग्रावाणोबर्हिषिप्रि

र र र २ र र र १ १
याऐही । इन्द्रस्यर९हिम्बृहादैही । इन्द्रा२स्यरा२ ।

र र र
१ २
ह्विया२म् । बृहदिन्द्रस्यर९ह्वियम्बृहादैही । ३ । एवं

१र र र ० २ २
त्रिः । सूर्यआत्माजगतस्तास्थुषा२२३स्वा३ । अन्तश्चरति

र र र र २ र र र र र र
रोचनाऐही । ३ । अस्यप्राणादपानता । ऐही । ३ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र र र र १र२र र र १ऽ
व्यख्यन्महिषोदिवामैही । ३ । प्रोणतिप्रोणति । ३ । प्रो ।
२र १ ३र २ ५र र २ २र १र
एति । २ । प्रो२३ । एता३४औहोवा । ए३ । हेवा
र र १ १ १ १ १
दिवाज्योती२३४५: ॥ १ * ॥

२र र २र ३र२र १र र २ र
† हाउहाउहाउ । भ्राजाओवा । ३ । उदुत्यञ्जा । ३ ।
२ १ र र र ० २ २र र ३र २र
चित्रन्देवानामुदगादनी२३का३म् । हाउ२हाउ । भ्राजा
३र र २ र १ ०
ओवा । ३ । तवेदसम् । ३ । चक्षुर्मित्रस्यवरुणस्यआ२३
१ २र र ३र २र ३र र २र र
ग्ना३इ: । हाउ२हाउ । भ्राजाओवा । ३ । देवंवहा ।
१र र र २ र ० २ २र २र
३ । आप्राद्यावापृथिवीअन्तरी२३क्षा३म् । हाउ२हाउ ।
३र २र ३र र २ र १र र र
भ्राजाओवा । ३ । तिकेतव: । ३ । सूर्यआत्माजगतस्ता
० २ २र र ३र २र ३र र २ र
स्थुषा२३आ३ । हाउ२हाउ । भ्राजाओवा । ३ । दृशे
र १र र र ० १ २र
विश्वा । ३ । सूर्यआत्माजगतस्तास्थुषा१२३आ३ । हाउ

---

* आ० गा० २प० ६, २, १ ।

† "सौर्यातिषङ्गः"—इति आ० आ०३, २, २८ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र　　३र १र १र र　　२ र　　१
२हाउ । भ्राजाओवा । ३ । यसूर्यम् । २ । यसूर२३रि

२　　२　　२र १र　र　र　३　१ १ १ १
याउ । वा३ । ए३ । देवादिवाज्योती२३४५: ॥ ४* ॥

२र　　२र　१　र　२　　२र　१　र　२
† हाउ । ३ । भ्राजाभ्राज । ३ । आयूरायु: ।

१　२　र　　१ र १　　२　१　र　र　र
३ । उदुत्यञ्जा । ३ । तवेदसम् । ३ । चित्रन्देवाना-

७　२　　२र　　२र　१　र　२　　२
मुदगादनी२३का३म् । हाउ । ३ । भ्राजाभ्राज । आ

१ र २　　१र　२　र　　१　　७　　२
यूरायु: । देवंवहा । ३ । चक्षुर्मित्रस्यवरुण । स्यआ२३ग्ना

२र　　१र　१　र　२　　२र　१　र　२
इ: । हाउ । ३ । भ्राजाभ्राज । आयूरायु: । ३ ।

१　र　२　　१र　र　र　र　　र　७　　२
तिकेतव: । ३ । आप्राद्यावापृथिवीआन्तरी२३क्षा३म् ।

२र　　२र　१　र　२　　२र　१　र　२　　१　र　२
हाउ । ३ । भ्राजाभ्राज । आयूरायु: । २ । इश्नेवि

र　　१र　र　र　　७　　२　　२र
श्वा । ३ । सूर्यआत्माजगतस्तास्थु षा२३श्वा३ । हाउ । ३ ।

२र　१　र　२　　२र　१　र　२　　१　र　२
भ्राजाभ्राज । ३ । आयूरायु: । ३ । यसूर्यम् । ३ ।

---

* आ० गा० ३प० ६, २, ४ ।

† "मित्रावरुणयो: ओतमित्याचक्षते"—इति आ० ब्रा० ९, २, १९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ २ २र१र र र ३ १ १
यसू २ ३ रियाउ। वा३। ए३। देवादिवाज्योती २ ३
१ १
४ ५ः ॥ १९ * ॥ ४४

कुत्साः। "देवानां" दीव्यतीति देवा रश्मयः तेषां, देवानामेव वा प्रसिद्धानाम् † "अनीकं" तेजः समूह रूपं "चित्रम्" आश्चर्यकरं सूर्यमण्डलम् "उदगात्" उदयाचलं प्रयासीत्। कीदृशम्? "मित्रस्य वरुणस्याग्नेश्च चक्षुः" उपलक्षणमेतत्, एतदुपलक्षितानां जगतां चक्षुः प्रकाशकं चक्षुरिन्द्रियस्थानीयं वा। उदयं प्राप्यैव "द्यावापृथिवी" दिवं च पृथिवीं च "अन्तरिक्षं" च "आप्राः" स्वकीयेन तेजसा "आ" समन्तात् अपूरयत्। ईदृग्भूत-मण्डलान्तर्वर्ती सूर्यः अतर्यामितया सर्वस्य प्रेरकः परमात्मा "जगतः" जङ्गमस्य "तस्थुषश्च" स्थावरस्य च "आत्मा" स्वरूपभूतः स हि सर्वस्य स्थावर-जङ्गमात्मकस्य कार्य-वर्गस्य [कारणाच्च कार्यं नातिरिच्यते। तथाच पारमर्षं सूत्रम् ‡—"तदनन्यत्वमारम्भण शब्दादिभ्यः"—इति] यद्वा। स्थावर-जङ्गमात्मकस्य सर्व-प्राणिजातस्य जीवात्मा। उदिते हि सूर्ये मृतप्रायं सर्वं जगत् पुनश्चेतनयुक्तं सत् उपलभ्यते ¶ [तथाच श्रूयते—"योऽसौ तमो नुदेति सर्वेषां प्राणानादायोदेतीति" ॥ ३ ॥ ४४

---

* ग्रा० गा० ३प० ६, २, १९।

† "देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा यो देवः। सा देवता"—इति निरु० दै० १, १५।

‡ "सांख्यशास्त्र-प्रणेतृ-कपिलनामर्षि-कृतमित्यर्थः।

¶ "चायनीयं देवाना मुदगम दनीकं ख्यानं मित्रस्य वरुणस्याग्नेश्चापूपुरद् द्यावापृ-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ चतुर्थी।

१र　२र　३ १ २ ३ ३ १ २ ३ २
आयङ्गौःपृश्निरक्रमीदसदन्मातरम्पुरः।

३ १ २　३ १ २
पितरञ्चप्रयंत्स्वः ॥ ४ ॥ ४५ *

१ ८　१ ८　१ २
उवोऽ२। ३। हिगोऽ२। ३। हिगिगि। ३।

---

थिव्यौ चान्तरिक्षञ्च महत्वेन तेन सूर्य आत्मा जङ्गमस्य च स्थावरस्य च"—इति निरु० दै० ६, १६। अत्र वेददीपकृद्भाष्यानन्त्वेवम्—"परापररूपेण स्थितः सूर्योऽत्र स्तूयते। सूर्यः चित्र माश्चर्यं यथा तथा उदद्रात् उदयं प्राप्तः उद्गच्छति वा। लडर्थ लुङ्। उदयन्नेव स्वतेजसा नैशं तमो हन्ति अन्येषां ज्योतींष्यादत्त इत्याश्चर्यम्। किम्भूतः सूर्यः? देवानां दीव्यन्ति द्योतन्ते इति देवाः किरणास्तेषा मनीकं मुख माश्रय इत्यर्थः। यद्वानीकं समूहः किरणपुञ्ज इत्यर्थः। तथा मित्रस्य वरुणस्य अग्नेः चक्षुः नेत्रवत् प्रकाशक इत्यर्थः। मित्रादय उपलक्षकाः सर्वस्य सदेवमनुष्यस्य विश्वस्य रूपाणि सूर्योदयेऽभि व्यज्यन्ते अतो मित्रादीनां चक्षुः स सूर्य उद्गतः सन् द्यावा पृथिवी दिवं भूमिं चान्तरिक्षं चाप्राः आपूरितवान् आपूरयति वा स्वतेजसेति शेषः। एवमपररूपेण स्तुत्वापररूपेण स्तौति—किम्भूतः सूर्यः? जगतो जङ्गमस्य तस्थुषः स्थावरस्य च जगत आत्मा अन्तर्यामी। य एतस्मादित्ये पुरुषं वेदयन्ते इन्द्रः स प्रजापतिस्तद्ब्रह्मेति 'श्रुतेः' सूर्याद्वैतमनेनोच्यते इति भावः" ( य० मा० भा० स० ७, ४२ )॥ "हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। योऽसावादित्ये पुरुषः सोऽसावहम्"—इति वाजसनेय्युपनिषदन्तिमा ऋक्॥ "पुरुषः पुरिषादः पुरिशयः पूरयतेर्वा पूरयत्यन्तरित्यन्तरपुरुषमभिप्रेत्य"—इति निरु० नै० २, ३।

* उ० ६, १, ११, १=ऋ० ८, ९, ४०, १।

† "गन्धर्वाप्सरसा सानन्दप्रतिनन्दौ पक्षौ"—इति षा० ब्रा० ३, २, २९। तत्रेद सानन्दनाम साम।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र र र र र २ र र र र
आयङ्गौःपृश्निरक्रमीदैही। ३। असदन्मातरम्पुराऐही।

२ र र र १ ऽ १ ऽ
३। पितरञ्चप्रयंन्त्स्वा ऐही। ३। उवी२। ३। हिगी२।

१ २
३। हिगिगि। ३॥ २ *॥

२ १ २ १ २ १ २र र
† उवी। ३। हिगी। ३। हिगिगी। ३। आयङ्गौः

र र र २ र र र र २
पृश्निरक्रमीदैही। असदन्मातरम्पुराऐही। पितरञ्चप्र

र र र २ १ २ १ २ १
यंन्त्स्वाऐही। उवी। ३। हिगी। हिगिगी॥ ३ ‡॥

२ऽ १ २ ३र २र ३र र २र र
¶ हाउ३वा। ईन्दूः। भ्राजाओवा। ३। आयङ्गौः

र र र २ऽ १ २ ३र २र ३र र
पृश्निरक्रमीदैही। हाउ३वा। ईडा। भ्राजाओवा। ३।

२ र र र र २ऽ १ ३ ३र २र ३र
असदन्मातरम्पुराऐही। हाउ३वा। सात्यम्। भ्राजाओ

---

* षा० गा० ३प० ६, २, २।

† "मम प्रतिनन्द"—इति षा० ब्रा० ३, २ २९।

‡ षा० गा० ३प० ६, २, ३।

¶ "तिस्रः सार्पराज्ञः"—इति षा० ब्रा० ३, १, २९। तत्र प्रथम मिदम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र . २ र र र २१ १ २
वा। ३। पितरञ्चप्रयंत्स्वाऐही। हाउ३वा। दीयौः।
॥ ७* ॥ ४५

आयङ्गौः पृश्निरित्यस्य सार्पराज्ञी समैक्षत।
ऋचस्तिस्रो भवेदासां विकल्पेनात्मदेवता॥

"गौः" गमनशीलः † "पृश्निः" प्राष्टवर्णः व्याप्ततेजाः‡ "अयं" सूर्यः "आक्रमीत्" आक्रान्तवान् उदयाचलं प्राप्तवानित्यर्थः। आक्रम्य च "पुरः" पुरस्तात् पूर्वस्यां दिशि "मातरं" सर्वस्य भूतजातस्य निर्मात्रीं "भूमिम्" "असदत्" आसीदति प्राप्नोति [सदेश्छान्दसो लेट्¶। लृदित्वात् च्लेरङादेशः§] ततः "पितरं" पालकं द्युलोकम्, ; "च" शब्दादन्तरिक्षं "प्रयन्" प्रकर्षेण शीघ्रं गच्छन् "स्वः" सु अरणः॥ शोभन-गमनो भवति। यद्वा। पितरं स्वर्लोकं प्रवर्त्तते॥ ४॥ ४५

---

* ग्रा० गा० ३प० ६, २, ७।

† "गौरादित्यो भवति गमयति रसान् गच्छत्यन्तरिक्षेऽथ द्यौर्यत् पृथिव्या अधि-दूरं गता भवति यच्चास्यां ज्योतींषि गच्छन्ति"—इति निरु० नै० २, १४।

‡ "पृश्निरादित्यो भवति प्राश्नुत एनं वर्ण इति नैरुक्ताः संस्पृष्टा रसान् संस्पृष्टा भासं ज्योतिषां संस्पृष्टो भासेति वाथ द्यौः संस्पृष्टा ज्योतिर्भिः पुण्यकृद्भिश्च"—इति निरु० नै० २, १४।

¶ "लिङर्थे लेट्"—इति पा० ३, ४, ७।

§ "पुषादिद्युताद्यॢदितः परस्मैपदेषु"—इति पा० ३, १, ५५।

|| "स्वरादित्यो भवति सु अरणः सु ईरणः स्वृतो रसान् स्वृतो भासं ज्योतिषां स्वृतो भासेति वैतेन द्यौर्व्याख्याता"—इति निरु० नै० २, १४।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पञ्चमी ।

अन्तश्चरति रोचनास्य प्राणादपानती ।

व्यख्यन्महिषो दिवम् ॥ ५ ॥ ४६ *

† औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१ओ । वा२३ । भू२३४वात् । अन्तश्चरतिरोचना । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । जा२३४नात् । अस्यप्राणादपानती । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । वा२३४र्द्धान् । व्यख्यन्महिषोदिवम् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । का२३४रात् । औहोऔहोवा । होइ । २ । औहोऔहोवा । हा३१उ । वा२३ । भू२३४तीः । औहो

* उ० ६, १, ११, २= ऋ० ८, ८, ४७, २ ।

† "महतां सूतिः"—इति आ० ब्रा० ३, २, २९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र र र　　१　　१र र र र र　　२
औहोवा । होइ । २ । औहोऔहोवा । हा३१उ ।
१　　१ र २र १र　२ र र　　११ र र र र　　१
वा२ । अभ्राजीज्योतिरभ्राजीत् । औहोऔहोवा । हो
१र र र र र　　२　　१　　२
इ । २ । औहोऔहोवा । हा३१उ । वा२३ । ए३ ।
१र र र र र　३ १ १ १ १
सर्वान्कामानश्नीमही२३४५ ॥ ६ * ॥

२ऽ　　१ २　　३र १र २र र　　२
† हाउ३वा । भूतम् । भ्राजाऔवा । ३ । अन्तश्च
र र　　र र　　२ऽ　　१　　२र २र १र
रतिरोचना । ऐही । हाउ३वा । पृथिवी । भ्राजाऔ
३र र　　२ र र र　र र र　　२ऽ　　१ २
वा । ३ । अस्यप्राणादपानताऐही । हाउ३वा । साह: ।
२र २र ३र र　　२　　र　र र र　　२ऽ
भ्राजाऔवा । ३ । व्यख्यन्महिषोदिवामैही । हाउ३वा ।
१ २
तेजः ॥ ८ ‡ ॥ ४६

२ र र　१ २　　२　　१
¶ अन्तर्देवेषू३रोचा१सा२इ । ३ । अन्तश्चरती३रो

---

* आ० गा० ३प० ६, २, ६ ।

† तत्र द्वितीयमिदम्—इति ( आ० ब्रा० ३, २, १९ )

‡ आ० गा० ३प० ६, २, ८ ।

¶ "मित्रावरुणयोश्चरित्यावतते" —इति आ० ब्रा० ३, २, १९ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ २ र र १ २ २
चा१ना २। अस्यप्राणादा३पाना१ता २इ। व्यख्यन्महीर

१ २ २ र र १ २ २
षोदा१इवा २म्। अन्तर्देवेषू३रोचा१सा २इ। २। अन्त

र र १ १ ३ ५र र २ २र १र र
र्देवेषू३रो२३। चा२सा२३४औहोवा। ए३। देवादिवा

र २ १ १ १ १
ज्योती२३४५ः॥ १८ *॥ ४६

"अस्य" सूर्यस्य "रोचना" † रोचमाना दीप्तिरन्तःशरीर-मध्ये मुख्य-प्राणात्मना "चरति" वर्त्तते। किं कुर्वती? "प्राणादपानती" [मुख्य-प्राणस्य प्राणाद्याः पञ्च वृत्तयः। तत्र प्राणनं नाड़ीभि रूर्ध्वं वायोर्निर्गमनम्] तथाविधात् प्राणात् प्राणनादनन्तरम् अपानती [अपाननं नाड़ीभि रवाङ्मुखं वायोर्नयनम्] तत् कुर्वन्ती [अपपूर्वादनितेर्लटः शतृ, (३, २, १२४) अदादित्वाच्छपो लुक् (२, ४, ७२)। उगितश्चेति (४, १, ६) ङीप्। शतुरनुम इति ‡ नद्या उदात्तत्वम्। यद्वा। "अन्तः" द्यावापृथिव्योर्मध्ये "अस्य" सूर्यस्य "रोचना" रोचमाना दीप्तिः "चरति" गच्छति [रुच दीप्तौ (भ्वा० आ०)। अनुदात्तेतश्च

---

* षा० गा० २प० ६, १, १८।

† रोचना इति "रोचते"—इति ज्वलतिकर्मणोरूपमित्यभिप्रायः (निघ० १ १६, ८)।

‡ "शतुरनुमोनद्यजादी"—इति पा० ६, १, १७३।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ षष्ठी।

२ २उ ३ १ २ ३ १ २ ३ १ २
त्रिꣳशद्धाम विराजति वाक्पतङ्गाय धीयते।
२ ३ २ ३ २ ३ १ २
प्रति वस्तोरह द्युभिः ॥ ६ ॥ ४७ *

२ऽ १ २ ३र २र ३र र २
हाउ३वा। आपः। भ्राजाओवा। ३। त्रिꣳशद्धा
र र र र २ऽ १ २ ३र २र ३र र
मविराजताऐही। हाउ३वा। ऊर्पा। भ्राजाओवा।
२र र र र र र २ १ २
३। वाक्पतङ्गायधीयताऐही। हाउ३वा। दीप्तः।

हलादेरिति (३,२,१४८) युच्]। किं कुर्वन्ती? "प्राणात्" प्राणनादुदयादनन्तरम् "अपानती" सायाह्न-समये अस्तङ्गच्छन्ती। ईदृश्या दीप्त्या युक्तः अतएव "महिषो" महान् सूर्यः ‡ "दिवम्" अन्तरिक्षं उदयास्तमयोर्मध्ये "व्यख्यत्" विचष्टे प्रकाशयति [महे रचि महेष्टिषजिति औणादिकष्टिषच् प्रत्ययः। चक्षिङः ख्याञ् (२,४,५४) छान्दसे लुङि ¶ अस्यतिवक्ति ख्यातीत्यादिना (२,१,५२) ल्नेरङादेशः ॥ ५ ॥ ४६

---

* उ० ६, १, ११, ३= ऋ० ८, ८, ४१, ३।

† तद्वै वान्निम मिदम्—इति श्रा० ब्रा० ३. २, १९।

‡ "महिषः"—इति महन्नामसु अष्टमं नैघण्टुकम् ३, ३। "महान् कस्मान्मानेनान्यान् जहातीति शाकपूणि र्मंहनीयो भवतीति वा"—इति निरु० नै० ३, १३।

¶ "छन्दसि लुङ्लङ्लिटः"—इति पा० ३, ४, ६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३र २र ३र २ १ २ २ २ २ २९
भ्राजाओवा। ३। प्रतिवस्तोरहद्युभाएँहो। हाउ३वा।
१ २
ज्योतिः॥ ८ *॥ ४७

"त्रिंशद्धाम" धामानि स्थानानि [ वचनव्यत्ययः (३, १, ३८) ] "वस्तोः" वासरस्य † अहोरात्रस्यावयवभूतानि। "अह" शब्दोऽवधारणे ‡। "द्युभिः" सूर्यस्य दीप्तिभिरेव ¶ "विराजति" विराजते विशेषेण दीप्यते [ व्यत्ययेनैकवचनम् (३, १, ३८)। मुहूर्तान्यत्र धामान्युच्यन्ते। पञ्चदश रात्रेः पञ्चदशाह्नः ] "पतङ्गाय" पतति गच्छतीति पतङ्गः सूर्यः § तस्मै सूर्याय स्तुति-रूपा "वाक्" "प्रतिधीयते" प्रतिमुखं स्तोतृभिर्विधीयते क्रियते। यद्वा "वस्तोः" अह्नः "त्रिंशत्" "धाम" धामानि [ घटिकाभिप्रायमेतत् ] त्रिंशद्घटिकाः [ अत्यन्तसंयोगे द्वितीया (२,३,५)] एतावत् कालं "द्युभिः" दीप्तिभिरसौ सूर्यो "विराजति" विशेषेण दीप्यते। तस्मिंश्च समये "वाक्" त्रयी-रूपा तस्मै "पतङ्गाय" "प्रतिधीयते" प्रतिमुखं धार्यते तं पूर्वं

---

* छा० गा० ३प० ६, २, ९।

† "वस्तोः"—इति अहर्नामसु प्रथमं नैघण्टुकम् (१,९)।

‡ "अह इति च ह इति च विनिग्रहार्थीयौ पूर्वेण सम्प्रयुज्येते। अयमहेदं करोत्वयमिदं ह करिष्यतीदं न करिष्यतीति"—इति निरु० नै० १, ५।

¶ "द्योतत इति सतः"—इति निरु० नै० १, ६।

§ "पतङ्गः"—इति अश्वनामसु द्वाविंशं नैघण्टुकम् १, १४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ सप्तमी ।

२ ३ २ ३ १ २ ३ १ २ ३ १ २
अपत्ये तायवोयथानचत्रायन्त्यक्तुभिः ।
१ २ ३ १ २
सूरायविश्वचचसे ॥ ७ ॥ ४८ *

अथाष्टमी ।

१ २ ३ २ ३ २ ३ २ ३ २ ३ १ २
अदृश्रन्नस्यकेतवोविरश्मयोजनाँ अनु ।
१ २ ३ १ २
भ्राजन्तोअग्नयोयथा ॥ ८ ॥ ४९ †

२र र र ३र २र ३रर २ र २
‡ हाउहाउहाउ । भ्राजाओवा । ३ । दिदीद्दिवि
२ १ २ र १ २ ३र
श्वतस्पृथुः । उदुत्यञ्जाता२वाइदा१सा२म् । देवंवह

सेवत इत्यर्थः ॥ [स्रूयते हि—“ऋग्भिः पूर्वाह्णे दिवि देव ईयते, यजुर्वेदे तिष्ठति मध्ये अह्नः । सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः”—इति । यदा त्विह सूक्ते सार्पराज्ञ्या आत्मस्तुतिस्तदा सूर्यात्मना स्तूयत इत्यवगन्तव्यम् ॥ ६ ॥ ४७

* ऋ० १, ४, ७, २ ।  † ऋ० १, ४, ७, ३ ।

‡ “षडेन्द्राः परिषयऋतूनाम्”—इति आ० ब्रा० ३, ९, २९ । तत्र प्रथम मिदम् ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २र र १ २ २
न्तीइकाइतां१वा२:। इष्टोविश्वायाइसूरा१या२म्। अ

र र १ २ २ र १ २
पत्येतायाइवोया१था२। नक्षत्रायन्तीयाक्तू१भा२इ:।

२र १ २ २ १ २
सूरायविश्वाइचाक्षा१सा२इ। अदृश्रन्नस्याइकाइता१वा२:।

२ १ २ २र र १ २ ऽ
विरश्मयोजाइनाँ३आ१नू२। भ्राजन्तोअग्नाइयोया१था

२र र ३र २र ३र र ३र २ ४
२३। हाउइहाउ। भ्राजाओवा। २। भ्राजाओ

३ १ १ १ १
३५वा६५६। ई२३४५॥ ११*॥

२र र ३ २र २र र २ र १ २
† हाउइहाउ। भ्राजाओवा। ३। दिदीहिविश्वतस्पृ

१ २ र १ २ २र
थु:। उदुत्यञ्जाताइवाइदा१सा२म्। देवंवहन्तीइ

१ २ २ र र १ १र २ र
काइता१वा२:। दृष्टोविश्वायाइसूरा१या२म्। अपत्ये

र १ २ र १ २ २र र
तायाइवोदा१था२। नक्षत्रायन्तीयाक्तू१भा२इ:। सूरा

१ २ २ १ २
यविश्वाइचाक्षा१सा२इ। अदृश्रन्नस्याइकाइता१वा२:।

* आ० गा० ९, २, ११।

† नहि २ द्वितीयम्। (आ० ग्रा० ३, २, २९)



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ र १ २ २र र १ २
विरश्मयो ऽ२ना ऽ३आ२नू २ । भ्राजन्तोअग्ना३योया१था२३ ।

२र र् ३ २र३रर ३ १ ४
हाउ२हाउ । भुक्राओवा । ३ । भुक्रा२ओ५वा६५६ ।

३ १ १ १ १
ई२३४५ ॥ १२ * ॥ ४८ ॥ ४९

"त्ये" "तायवः" "यथा" प्रसिद्धास्तस्करा इव "नक्षत्राणि" देवगेहरूपाणि [ "देवगृहा वै नक्षत्राणि"—इति श्रुत्यन्तरात् । यद्वा, इह लोके मानुषा ये स्वर्ग माप्नुवन्ति ते नक्षत्ररूपेण दृश्यन्ते । तथाच श्रूयते—"यो वा इह यजते अमुं स लोकं नक्षते तन्नक्षत्राणां नक्षत्रत्वम्"—इति । यद्वा, तेषां सुकृतिनां ज्योतींषि नक्षत्राण्युच्यन्ते । "सुकृतां वा एतानि ज्योतींषि यन्नक्षत्राणीति"—आम्नानात् । यास्कस्त्वाह—"नक्षत्राणि नक्षतेर्गतिकर्मणो नेमानि नक्षत्राणीति च ब्राह्मणम्"—इति]यथाविधानि नक्षत्राणि "अक्तुभिः" रात्रिभिः सह "अप यन्ति" अपगच्छन्ति । "विश्वचक्षसे" विश्वस्य सर्वस्य प्रकाशकस्य "सूराय" सूर्यस्य आगमनं दृष्ट्वेति शेषः [ तस्करा नक्षत्राणि च रात्रिभिः सह सूर्य आगमिष्यतीत्याकुलायन्त इत्यर्थः । तायुरिति स्तेननाम ( नै ३, २४, ७ ) तायुस्तस्कर इति तन्नामसु पाठात् । अक्तुरिति रात्रिनाम ( नै० १, ७, ४ ) शर्वरी अक्तुरिति तन्नामसु पाठात् ॥ ७ ॥ ४८

---

* आरण्यगा० १प० ६, २, १२।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ नवमी।

३१ २ ३ २ २ १ २
तरणिर्विश्वदर्शतोज्योतिष्कृदसिसूर्य।

२३१ २ ३२
विश्वमाभासिरोचनम्॥ ९॥ ५०*

अथ दशमी।

१२ २ २३ १ २ ३१र २र३१२
प्रत्यङ्देवानांविशःप्रत्यङ्ङुदेषिमानुषान्।

३२उ ३क २र३२
प्रत्यङ्विश्वꣳस्वर्दृशे॥ १०॥ ५१†

अथ एकादशी।

१२ ३१२ १२२ २१ १२
येनापावकचक्षसाभुरण्यन्तञ्जनाꣳअनु।

१२ ३१२
त्वंवरुणपश्यसि॥ ११॥ ५२‡

"अस्य" सूर्यस्य "केतवः" प्रज्ञापकाः "रश्मयः" दीप्तयः "जनान् अनुव्यदृश्रन्" जनान् सर्वान् अनुक्रमेण प्रेक्षन्ते। सर्वं जगत् प्रकाशयन्तीत्यर्थः। तत्र दृष्टान्तः—"भ्राजन्तः" दीप्यमाना "अग्नय इव"॥

"व्यदृश्रन्"-"अदृश्रम्"—इति पाठौ॥ ८॥ ४९

* ऋ० १, ४, ७, ४। † ऋ० १, ४, ७, ५।

‡ ऋ० १, ४, ७, ६।


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



* हाउ२हाउ । भूताश्रोवा । ३ । दिदीहिविश्वतस्पृथुः । तरणिर्विश्वा३दाशो१ता२ः । ज्योतिष्कृदसीसूरा१या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ् देवा३नांवा१ट्टशा२ः । प्रत्यङ् देषी३मानू१षा२न् । प्रत्यङ् विश्वꣳस२वार्ह१शा२इ । येनापावका३चाचा१सा२ । भुरण्यन्तञ्जा३नाꣳश्रा१नू२ । त्वंवरुणा३पाश्या१सा२३इ । हाउ२हाउ । भूताश्रोवा । २ । भूता३श्रो५वा६५६ । ई२३४५ ॥ १३ † ॥

‡ हाउ२हाउ । तेजाश्रोवा । ३ । दिदीहिविश्वतस्पृथुः । तरणिर्विश्वा३दाशो१ता२ः । ज्योतिष्कृदसीसूरा१या२ । विश्वमाभासी३रोचा१ना२म् । प्रत्यङ् देवा३

---

* तच तृतीय मिदम् ( श्रा० ब्रा० ३, २, २९ ) ।

† श्रा० गा० ३प० ६, २, १३ ।

‡ तच चतुर्थ मिदम् ( श्रा० ब्रा० ३, २, २९ ) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २ र १ २ २
नावा१इ्शा२ः । प्रत्यङ् देवो३मानू१षा२न् । प्रत्यङ्

१ २ २र र र १ २
विश्व०सू३वाई१शा२इ । येनापावका३चाक्षा१सा२ ।

२ १ २ २ १ २
भुरण्यन्तञ्जा३ना०आ१नू२ । त्वंवरुणा३पाश्या१सा२३इ ।

२र र २र २र३ रर १र २ ४ ३ १
हाउ२हाउ । तेजाओवा । २। तेजा३ओ२वा६५६ । ई२

१ १ १
३४५ ॥ १४ * ॥ ५० ॥ ५१ ॥ ५२

हे "सूर्य" त्वं "तरणिः" प्रगन्ता अन्येन गन्तु मशक्यस्य महतोऽध्वनो गन्तासि † [ तथाच स्मर्यते—"योजनानां सहस्रे द्वे द्वे शते द्वे च योजने । एकेन निमिषार्द्धेन क्रममाणं नमोस्तु ते" —इति ] यद्वा । उपासकानां रोगात्तारयितासि ["आरोग्यं भास्करादिच्छेत्"—इति स्मरणात्] तथा "विश्वदर्शतः" विश्वैः सर्वैः प्राणिभिर्दर्शनीयः [ आदित्य-दर्शनस्य चण्डालादि-दर्शन-जनित-पाप-निवर्हण-हेतुत्वात् । तथाचापस्तम्बः-"दर्शने ज्योतिषां दर्शनम्"—इति यद्वा, "विश्वं" सर्वं भूतजातं "दर्शतं" द्रष्टव्यं प्रकाश्यं येन स तथोक्तः ] तथा "ज्योतिष्कृत्" ज्योतिषः प्रका-

* ग्रा० गा० ३प० ६, २, १४ ।

† "तरणिः"—इति निघण्टौ तु ( २, १५ ) क्षिप्रनामसु पान्त्यं पदं । तरणिर्वोज्नाना ( ४३७ पृ० ) मिति मन्त्र-व्याख्यायामत्वग्र मेव व्याचख्यौ तारकमिति ; माधवस्तु 'क्षिप्रं दातारं वा'—इति ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शस्य कर्त्ता, सर्वस्य वस्तुनः प्रकाशयितेत्यर्थः। यद्वा, चन्द्रादीनां [ रात्रौ हि अस्तमये चन्द्रादिषु सूर्य-किरणाः प्रतिफलिताः अतोऽन्धकारं निवारयन्ति। यथा द्वारस्य दर्पणोपरि निपतिताः सूर्यरश्मयो गृहान्तर्वर्ति तमो निवारयन्ति तद्वदित्यर्थः ] यस्मादेवं तस्मात् "विश्वं" प्राप्तं "रोचनं" रोचमानम् "अन्तरिक्षम्" "आ" समन्तात् "भासि" प्रकाशयसि ॥

यद्वा, हे "सूर्य" अन्तर्यामितया सर्वस्य प्रेरक परमात्मन्! "तरणिः" संसाराब्धेस्तारकोसि। यस्मात् त्वं "विश्वदर्शतः" विश्वैः सर्वैर्मुमुक्षुभिर्दर्शतो द्रष्टव्यः साक्षात्कर्तव्य इत्यर्थः [अधिष्ठान-साक्षात्कारे हि आरोपितं निवर्तते ] "ज्योतिष्कृत्" ज्योतिषः सूर्यादेः कर्त्ता [तच्चाम्नायते—"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत"—इति* ] ईदृशस्त्वच्चिद्रूपतया "विश्वं" सर्वं दृश्यजातं "रोचमानं" दीप्यमानं यथा भवति तथा "आ भासि" प्रकाशयसि [मेवं न्यक्करणे हि सर्वं जगत् दृश्यते।†

* "चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद्वायुश्च प्राणश्च मुखादग्निरजायत"—इति य० मा० शा० म० ३१ अ० १२ क०। 'यथा दध्यादि-द्रव्याणि, गवादय पशवः, ऋगादयो वेदाः, ब्राह्मणादयो मनुष्याश्च तस्मादुत्पन्ना एवं चन्द्रादयो देवा अपि तस्मादेवोत्पन्ना इत्याह। मनसः सकाशात् चन्द्रमाः जातः चक्षोः चक्षुषः सकाशात् सूर्यः अजायत। वायुः प्राणश्च श्रोत्रात् कर्णादजायत। मुखादग्निरजायत' —इति च रुद्राख्यानं महीधर-कृतम्।

† "हे सूर्य! त्वं ज्योतिष्कृत् तेजसः कर्त्तासि विश्व माभासि प्रकाशयसि च अग्निविद्युन्नक्षत्रचन्द्रग्रहतारकादिषु त्वदीयं तेज इत्यर्थः। कीदृशं विश्वम्? रोचनं दीप्यमान



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तथाचाम्नायते—"तमेवभान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति"—इति * ॥ ९ ॥ ५०

हे सूर्य! त्वं "देवानां" "विशः" मरुन्नामकान् देवान् † [ "मरुतो वै देवानां विशः"–इति श्रुत्यन्तरात्। तान्मरुत्संज्ञकान्देवान् ] "प्रत्यङ् उदेषि" प्रतिगच्छन्नुदयं प्राप्नोषि ‡। तेषा मभिमुखं यथा भवति तथेत्यर्थः। तथा "मानुषान्" मनुष्यान् प्रत्यङ् उदेषि। तेऽपि यथास्मदभिमुख एव सूर्य उदेतीति मन्यन्ते तथा "विश्वं" प्राप्य "स्वः" द्यां लोकं "दृशे" द्रष्टुं "प्रत्यङ्" उदेषि। यथा स्वर्लोक-वासिनो जनाः स्वस्याभिमुख्येन पश्यन्ति तथा उदेषीत्यर्थः [ एतदुक्तं भवति—ये लोकाः

---

त्वत् प्रकाशेनेति भावः। कीदृशस्त्वं तरणिः तरत्यतिक्रामति नभोवर्त्मेति तरणिः। 'अर्त्तिसृधृधम्यश्यवितॄभ्योऽनिरिति ( उणा० २, ९८ ) तरतेरनिप्रत्ययः। विश्वदर्शतः विश्वस्य दर्शतः दर्शनीयः दृशेरतच् ॥"—इति वेददीपः।

* "हिरण्मये परे कोशे विरजं ब्रह्म निष्कलम्। तच्छुभ्रं ज्योतिषां ज्योतिस्तद्यदात्मविदो विदुः। न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽय मग्निः। तमेव भान्त मनुभाति सर्वं तस्य भासा सर्व मिदं विभाति"—इति मुण्डकोपनिषत् २, १०।

† "विशः"—इति, अग्ने जरितरिति व्याख्यायां ( १५७ पृ० ) प्रजाः। विशोविश इति व्याख्यायां ( २४४ पृ० ) प्रजाः। यद्वाव इति व्याख्यायां प्रजाः, तत्रैव विशे मृडे इति च। प्रवोमहे इति व्याख्यायां ( ६६७पृ०) प्रजाः। निघण्टु-द्वितीय-तृतीये मनुष्यनामसु चतुर्थञ्च।

‡ "प्रत्यङ्ङिदं सर्व मुदेषि। प्रत्यङिदं सर्व मभि विपश्यसीति"—इति निरु० दै० ६, २४।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



पश्यन्ति ते जनाः सर्वेऽपि स्वस्वाभिमुख्येन सूर्यं पश्यन्तीति *। तथाचाम्नायते—"तस्मात्सर्व एव मन्यन्ते मां प्रत्युदगात्"—इति ॥ १० ॥ ५१

हे "पावक" सर्वस्य शोधक ! "वरुण" अनिष्ट-वारक सूर्य ! त्वं "जनान्" प्राणिनः "भुरण्यन्तं" धारयन्तं पोषयन्तं वा इमं लोकं † "येन" ‡ "चक्षसा" प्रकाशेनानु पश्यसि अनुक्रमेण प्रकाशयसि तं प्रकाशं स्तुम इति शेषः। यद्वा, उत्तरस्या ऋचि सम्बन्धः तेन चक्षुसा उदेषीति ¶। तथाच यास्केनोक्तं §—तत्ते वयं स्तुम इति वाक्यशेषोऽपिवोत्तरस्या मन्वयस्तेन व्याख्यातीति ( निरु० दै० ६, २२ )" ॥ ११ ॥ ५२

---

* "अपि वैतस्या मेव। येनापावक . . .। तेन नो जनानभि वि पश्यसि"—इति निरु० ६, २५-२६।

† "भुरण्युरिति क्षिप्रनाम भुरण्युः शकुनिर्भूरि मध्वानं नयति स्वर्गस्य लोकस्यापि वोढा तत्सम्पाती भुरण्युरनेन पावकख्यानेन भुरण्यन्तं जनांश्चतुत्वं वरुण पश्यसि"—इति निरु० दै० ५, २२।

‡ ऋचि तु "येना"—इति पाठः। तत्र द्व्यचइति ( ६, ३, १३५ ) दीर्घः।

¶ "सर्वमेधे पक्ष्याकारेणाग्निश्चीयते तद्रूप मात्मानं सम्पाद्य मुक्ति माप्नोति तदत्र प्रार्थ्यते—ह पावक शोधक येन चक्षसा दर्शनेन त्वं भुरण्यन्त मनुपश्यसि; क्षिप्रपाती पक्षी भुरण्युः, भुरण्यु मात्मानं करोति भुरण्यति, भुरण्यतीति भुरण्यन् तम्; क्विबन्तात् शतृप्रत्ययः। सर्वमेधयाजिनं भुरण्युपक्षिरूपात्मानं कृत्वा स्वर्गंच्छन्तं येन चक्षसानुपश्यसीत्यर्थः। तेन चक्षसा जनानस्मानपि भुरण्यतः हे वरुण त्वं पश्य वरुणः सूर्यः"—इति वेददीपः य० मा० श्रा० स० ३३ श्र० ३२ क०।

§ "अपिवोत्तरस्यामित्यन्तमेव यास्क वचनम्। अन्वयेत्यादिस्तर्थसम्बन्धः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ द्वादशी।

१र २र३१२ ३ २ ३ १ २ ३ १ २
उद्यामेषिरजःपृथ्वहा*मिमानोअक्तुभिः।
२ ३ १ २
पश्यञ्जन्मानिसूर्य ॥ १२ ॥ ५३ †

अथ त्रयोदशी।

२ ३ १ ३ २ ३ २ ७ २ २ ३क२र
अयुक्तमप्तशुन्ध्युवःसूरोरथस्यनप्त्र्यः ‡।
१ २ ३ १ २
ताभिर्यातिस्वयुक्तिभिः ॥ १३ ॥ ५४ ¶

अथ चतुर्दशी।

३ १ २ ३ २ ३ २ ३ १ २
सप्तत्वाहरितोरथेवहन्तिदेवसूर्य।
३ १ २
शोचिष्केशंविचक्षण ॥ १४ ॥ ५५ §

॥ पञ्चम-दशति ॥

* "रजस्पृथहा"—इति च ऋ० पाठः। † ऋ० १, ४, ७, ७।

‡ "नप्त्र्यः"—इति ऋ० पाठ। ¶ ऋ० १, ४, ७, ९।

§ ऋ० १, ४, ७, ८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र   र   ३ २र३र र   २ र १
* हाउ२हाउ । सत्याओवा । ३ । दिदीहिविश्वत
२ १   २ र र   १ २   २ र र ७र
स्पृथुः । उद्यामेषिरा३जाःपा१र्थू २ । अहामिमानो३
१ २   २ र १ १   २
आक्तूभा २इः । पश्यञ्जन्मानी३सूरा१या २ । अयुक्त
१ २   र र   १ २   २र
सप्ता३शून्ध्यू१वा २ः । सूरोरथस्या३नाप्ता१या २ः । ता
र   १ २   २ र   १ २
भिर्यातिस्वा३यूक्ता१इभी २ः । सप्तत्वाहरी३तोरा१था २
२ र   १ २   २र र   १ २
इ । वहन्तिदेवा३सूरा१या २ । शोचिष्केशंवी३चाक्षा१णा
२र र   ३ २र३र र   ३ २ ४
२३ । हाउ३हाउ । सत्याओवा । ३ । सत्या३ओ५वा६५
७१ १ १ १
६ । ई२३४५ ॥ १५ † ॥
१र र   ३ २र३र र   २ र १   २
‡ हाउ२हाउ । ऋताओवा । ३ । दिदीहिविश्वतस्पृ
१   २ र र   १ २   २ र र ७र १ २
थुः । उद्यामेषिरा३जाःपा१र्थ २ । अहामिमानो३आक्तू
२ र   १ २   २
१भा २इः । पश्यञ्जन्मानी३सूरा१या २ । अयुक्तसप्ता३

* तत्र पञ्चम मिदम् ( आ० ग्रा० ३, २, २९ ) ।

† आ० गा० ३प० ६, २, १५ ।

‡ तत्रान्तिमं षष्ठ मिदम् ( आ० ग्रा० ३, २, २९ ) ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ २र र १ २ २र र
पृन्थ्यू१वा२ः। सूरोरथस्या३नाप्ता१या२ः। ताभिर्याति
१ २ २ र १ २ २
स्वा३यूक्ता१इभी२ः। सप्तत्वाहरी३तोरा१था२इ। वह
र १२ २र र १ २ २र
न्तिदेवा३सूरा१या२। शोचिष्केशंवी३चाक्षा१णा२३। हाउ
र र २ १र२र र ३ २ ४ ३ १
हाउहाउ। ऋता३ओवा। ३। ऋता३ओ५वा६५६। ई२
२ ११
३४५॥ १६ * ॥ ५३ ॥ ५४ ॥ ५५

हे "सूर्य !" त्वं "पृथु" सुविस्तीर्ण "रजः" लोकं ["लोका रजांस्युच्यन्ते" †—इति यास्क-वचनात्] द्युलोकं "द्याम्" अन्तरिक्षलोकम् "उदेषि" उद्गच्छसि ‡। किं कुर्वन्? अहानि "अक्तुभिः" रात्रिभिः सह "मिमानः" उन्मानयन् [आदित्यगत्यधीनत्वादहोरात्र-विभागस्य] तथा "जन्मानि" जननवन्ति भूतजातानि "पश्यन्" प्रकाशयन्॥

"उद्याम्"-"विद्याम्"—इति पाठौ॥ १२॥ ५३

* आ० गा० ३प० ६, २, १६।

† "रजो रजतेः। ज्योती रज उच्यते। उदकं रज उच्यते। लोका रजांस्युच्यन्ते असृगहनी रजसी उच्येते। रजांसि चित्रा विचरन्ति तन्यव इत्यपि निगमो भवति"—इति निरु० ४, १९।

‡ "व्येषि द्यां रजश्च पृथु महान्तं लोकं महानि च मिमानोऽक्तुभीरात्रिभिः सह पश्यञ्जन्मानि जातानि सूर्य। अपि वा पर्वस्याम्"—इति यास्कः दै० ६,२१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



"सूरः" सर्वस्य प्रेरकः सूर्यः* "शुन्ध्युवः" शोधिका अश्वस्त्रियः†। तादृशीः "सप्त" सप्त-सङ्ख्याकाः‡ "अयुक्त" स्व-रथे योजितवान्¶। कीदृशीः? "रथस्य" "नप्त्यः" नपातयित्र्यः। याभिर्युक्तो रथो याति न पतति इदृशीरित्यर्थः। एवम्भूताभिस्ताभिरश्वस्त्रीभिः "स्वयुक्तिभिः" स्वकीय-योजनेन रथे सम्बद्धाभिः "याति" यज्ञगृहं प्रत्यागच्छति। अतस्तस्मै हविर्दातव्य मिति वाक्यशेषः॥ १३ ॥ ५४

हे "सूर्य!" "देव" द्योतमान! "विचक्षण!" सर्वस्य प्रका-

---

* सूरशब्दः सूर्यार्थोऽत्र सर्वत्र—छ० १, २, ४, ३—२, १, ४, ४—५, २, ३, ७—उ० ७, १, ८, १ — ४, २, १, १२—५, १, ८, २—५, १, ८, ३—६, १, २, १—६, १, ४, २ —९, १, ४, १। सोमार्थस्थानयोरेव—उ० ३, १, ५, १—४, १, २०. २॥

† "शुन्ध्युवः शुन्ध्युरादित्यो भवति शोधनात् तस्यैव। * * *। * ० शकुनिरपि शुन्ध्युरुच्यते शोधनादेवोदकचरो भवति। आपोऽपि शुन्ध्युव उच्यन्ते शोधनादेव" —इति निरु० नै० ४, १६।

‡ "सप्त सृप्ता सङ्ख्या सप्तादित्यरश्मय इति वदन्ति"—इति निरु० नै० ४, २६। "सप्त युञ्जन्ति रथमेकचक्रमित्यादि निरु० नै० ४, २७। "सप्त प्राणाः प्रभवन्ति तस्मात् सप्तार्चिषः समिधः सप्त होमाः। सप्त इमे लोका येषु चरन्ति प्राणा गुहाशया निहिताः सप्त सप्त"—इति मु० उ० २, १।

¶ "रथे तिष्ठन्नयति वाजिनः पुरस्तात् सतो यत्र यत्र कामयते सुषारथिः। कल्याणसारथि रभीशूनां महिमानं पूजयामि मनः पश्चात् सन्तोऽनुयच्छन्ति रश्मयः"—इति निरु० दै० ९, १६। अपिच—"रथं चित्रं मारुतं मेघं वयं श्रवणीय माकयामह आ यस्मिन्तस्थौ सुरमणीयान्युदकानि बिभ्रती सचा मरुद्भिः सह रोदसी"—इति निरु० दै० ५, ५०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



शयितः ! "सप्त" सप्त-सङ्ख्याकाः "हरितः" अश्वाः*रस-हरण-शीला रश्मयो वा†"त्वा" त्वां "वहन्ति" प्राप्नुवन्ति। कीदृशम्? "रथे" अवस्थित मिति शेषः। तथा "शोचिष्केशं" शोचींषि ‡ तेजांस्येव यस्मिन् केशा इव ¶ दृश्यन्ते स तथोक्तस्त मिति §॥ ॥ १४ ॥ ५५

इति सायणाचार्य्य-विरचिते माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने षष्ठोऽध्यायस्य पञ्चमः खण्डः॥

---

* "हरित आदित्यस्य"—इति अश्वविशेषनामसु निघ० १, १५, ३। "अश्वः कस्मादश्नुतेऽध्वानं महाशनो भवतीति वा। * * *। तस्याश्ववत् देवतावच्च निगमा भवन्ति"—इत्यादि निरु० नै० २, २७; दै० ४, ३०-३१।

† "सप्त ऋषयः"—इति रश्मिनामसु निघ० १, ५, १२। अत्र च यास्कः "रश्मिर्यमनात्"—इत्यादि निरु० नै० २, १५।

‡ "शोचिः"—इति ज्वलन्नामधेयेषु षष्ठं नैघण्टुकम् १, १७।

¶ "केशी केशा रश्मयस्तैस्तद्वान् भवति काशनाद्वा प्रकाशनाद्वा। तस्यैषा भवति * * ०'। केशीदं सर्व मिद मभि विपश्यति केशीदं ज्योतिरुच्यत इत्यादित्य माह। अथाप्येते इतरे ज्योतिषी केशिनी उच्येते धूमेनाग्नी रजसा च मध्यमः। * * *। एक एषा मित्यग्निः पृथिवीं दहति। सर्व मेकोऽभि विपश्यति कर्मभि रादित्यो गति-रेकस्य दृश्यते न रूपं मध्यमस्य"—इति निरु० दै० ६,२५-२६-२७।

§ "सप्तैतानादित्य रश्मीनयमादित्यो गिरति मध्यस्थानोर्ध्व शब्दो यत एतस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि भुवः परिभवन्ति सर्वाणि कर्माणि वर्ष-कर्मणेत्यधिदैवतम्। अथाध्यात्मं सप्तेमानीन्द्रियाण्ययमात्मा गिरति मध्यस्थानोर्ध्व शब्दो यान्यस्मिंस्तिष्ठति तानि धीतिभिश्च मनसा च विपर्ययन्ति परि. भुवः परिभवन्ति सर्वाणीन्द्रियाणि ज्ञानकर्मणेत्यात्मगतिमाचष्टे"—इति निरु० प० २, ९१।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ ६ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिक-मार्ग-प्रवर्त्तक-
श्रीवीर-बुक्क-भूपाल-साम्राज्य-धुरन्धरेण सायणा-
चार्येण विरचिते माधवीये सामवेदार्थ-प्रकाशे
छन्दोव्याख्याने आरण्यएवाध्येतव्यः
षष्ठोऽध्यायः समाप्तः ॥

॥ समाप्तम् आरण्यम् पर्व आरण्यकाण्डं वा ॥

॥ इति चतुर्थम्पर्व ॥

॥ सामवेद-संहितायां छन्दआर्चिकः समाप्तः ॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

॥ ओं नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

तत्र

## ॥ अथ महानाम्न्यार्चिकः ॥ *

( भाष्यकृतोभूमिका )

ऐन्द्रीरथ महानाम्नीः शक्करीर्वा विकर्षिताः ।
पञ्चभिः सहिता अन्ते पुरीषपदनामभिः ॥
एताः प्रकृतितस्तिस्र उपसर्गैस्तु संयुताः ।
नव सङ्ख्या इति प्राहुर्वेदाध्ययनशालिनः ॥
ऐतरेय-ब्राह्मणेऽपि शस्त्रे षोडशि-नामके ।
तिस्रः प्रोक्ता महानाम्न्यस्त्रैलोक्यात्मत्ववर्णनात् ॥

---

* महानाम्नीनां पाठस्तु न तु छन्दआर्चिके नापि उत्तरार्चिके परं छन्दआर्चिके समाप्ते तत्पुस्तकान्त्यभागे एव सर्वत्र दृश्यते, एवं आरण्यगाने समाप्ते च ततोऽनन्तरं महानाम्नी-सामपाठस्तत्रैव पुस्तके सर्वत्रेति परिशिष्टत्व मासामस्य च ज्ञायत इति छन्दआर्चिकान्ते एव व्याख्यातवान् भगवान् सायणः ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



तत्र हि महानाम्नीना मुपसर्गानुपसृजत्ययं वै लोकः प्रथमा महानाम्न्यान्तरिक्षलोको द्वितीयाऽसौ लोकस्तृतीयेति । नन्वेताः शक्करीच्छन्दस्का व्याक्रियन्त इ युक्ताश्चेत् षट्पञ्चाशदक्षराः स्युः । तथा च समाम्नातं चतुर्विंशत्यादि चतुरुत्तरमिति ( पि० ) । अस्यार्थः—गायत्र्यादीना मतिधृत्यन्तानां छन्दसां चतुर्विंशत्यक्षरा ण्यारभ्य उत्तरोत्तरं चतुर्षु चतुर्षु अक्षरेष्वधिकेषु सत्सु उष्णि-गादि-च्छन्दांसि जायन्ते* । एवं क्रमशोऽक्षराधिक्ये सति शक्करी षट्पञ्चाशदक्षरा सम्भवतीति । एता ऋचस्तु शक्करीभ्योऽधि-काक्षरा दृश्यन्ते । तस्मादासा मुपसर्गाक्षरैराधिक्यं न तु स्वत इति ज्ञायते । तर्हि के पुनरुपसर्गाः ? के पुनः शाक्कराः पादाः ? इत्युच्यते—

---

*

| छन्दांसि | | | अतिच्छन्दांसि | | | विच्छन्दांसि | | |
|---|---|---|---|---|---|---|---|---|
| | छन्दोनाम | अक्षरसंख्या | | छन्दोनाम | अक्षरसंख्या | | छन्दोनाम | अक्षरसंख्या |
| १ | गायत्री | २४ | १ | अभिजगती | ५२ | १ | कृतिः | ८० |
| २ | उष्णिक् | २८ | २ | शक्करी | ५६ | २ | प्रकृतिः | ८४ |
| ३ | अनुष्टुप् | ३२ | ३ | अतिशक्करी | ६० | ३ | आकृतिः | ८८ |
| ४ | बृहती | ३६ | ४ | अष्टिः | ६४ | ४ | विकृतिः | ९२ |
| ५ | पङ्क्तिः | ४० | ५ | अत्यष्टिः | ६८ | ५ | संस्कृतिः | ९६ |
| ६ | त्रिष्टुप | ४४ | ६ | धृतिः | ७२ | ६ | अतिकृतिः | १०० |
| ७ | जगती | ४८ | ७ | अतिधृतिः | ७८ | ७ | उत्कृतिः | १०४ |



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



प्रथमा। "विदामघवन्विदा"--इति द्विपदा ऋगुपसर्गः। ततः "शिचाशचीनाम्पते"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्वराः। ततः "स्वर्णांशुः"—इति पञ्चाक्षरः पादः। अत्राक्षर-विश्लेषेण पञ्चाक्षरत्वं द्रष्टव्यम्। "प्रचेतनप्रचेतय:"—इत्यष्टाक्षरः। एतौ द्वावुपसर्गसञ्ज्ञौ। "इन्द्रद्युम्नायनइषे"—इति पादोष्टाक्षरः शाक्वरः। "एवाहिशक्रः"—इति पञ्चाक्षर उपसर्गः। "रायेवा-जायवज्रिवः"—इत्याद्यास्त्रयः पादाः शाक्वराः। "आयाहिपि-बमत्स्व"—इति पादोऽष्टाक्षर उपसर्गः। इत्येव सृक् प्रथमा॥

अथ द्वितीया। "विदारायेसुवीर्यम्"—इति द्विपदा उपसर्गः। "मण्हिष्ठवज्रिन्नृञ्जसे"—इत्याद्यास्त्रयोऽष्टाक्षराः पादाः शाक्व-राः। ततः "अंशुर्नशोचिः"—इति पञ्चाक्षरः पादः। "चिकि त्वोअभिनोनय"—इति पादः। एतौ द्वावुपसर्गौ। "इन्द्रोविदे-तमुस्तुहि"—इति पादोऽष्टाक्षरः शाक्वरः। "ईशेहिशक्रः"—इति पञ्चाक्षरः पाद उपसर्गः। "तमूतयेहवामहे"—इत्याद्यास्त्रयो-ऽष्टाक्षराः पादाः शाक्वराः। "क्रतुश्छन्दऋतम्बृहत्"—इति पाद उपसर्गः। इत्येवं द्वितीया॥

तृतीयस्याः। "इन्द्रन्धनस्यसातयेहवामहे"—इति द्विपदा उपसर्गः। "सनःस्वर्षत्"—इत्याद्यास्त्रयोऽष्टाक्षराः शाक्वराः पादाः। "अंशुर्मदाय"—इति पञ्चाक्षरः पादः। "सुम्नआधेहि



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



मोवसो"—इत्यष्टाक्षरः पादः । एतौ द्वावुपसर्गौ । "पूर्तिः-मविष्ठमस्यते"—इति पादोऽष्टाक्षरः शाक्करः । "वशीहिशक्रः" —इति पञ्चाक्षर उपसर्गः । "नूनन्तन्नव्यंसन्यसे"—इत्याद्यास्त्रयो ऽष्टाक्षराः शाक्कराः । "शूरोयोगोषुगच्छति"—इति पादौ द्वावुपसर्गाविति तृतीया ऋक् सम्पन्ना ॥

अत्र प्रथमायाः सप्त शाक्कराणि पदानि, पञ्चोपसर्गाः । एवं द्वितीयस्या अपि पदान्युपसर्गाः । तृतीयायास्तु सप्त शाक्कराणि पदानि, षडुपसर्गाः । इत्युक्तार्थौ निदानकल्पे सूत्रादिकं सम्यगालोचयद्भिः पूर्वाचार्यैः श्लोकद्वये सङ्गृह्य दर्शितः—

"प्रथमं द्विपदा, त्रीणि शाक्कराणि पदान्यतः ।
पञ्चार्णाष्टाक्षरौ चोपसर्गावेकश्च शाक्करः ॥ १ ॥
पञ्चार्ण उपसर्गोऽथ त्रयस्ते वहिरन्तिमः ।]
इय माद्या ; द्वितीयैवं ; तृतीया पुनरन्तिमः ।
अधिकोऽष्टाक्षरः पाद उपसर्ग इति स्थितिः॥२॥"—इति ॥

अत्र सर्वत्रोपसर्गान् परित्यज्य केवल-पदगताक्षर-सङ्ख्यायां कृतायां षडधिकपञ्चाशत्-सङ्ख्याकान्यक्षराणि जायन्ते । अतस्तद् द्वितीया शक्करीति न विरोधः ॥ एतासु गीयते साम यत्तच्छाक्कर मुच्यते । सत्यव्रमेऽङ्गि पृष्ठेषु होतुःपृष्ठं विधीयते ।

उपसर्गैः संयुताना मासा मिन्द्रोऽधिदेवता ।
माध्यन्दिनं यत् सवनं सर्व मैन्द्र मिति स्थितम् ॥

४७ख,



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अत्रैवाश्वलायनेन स्व-ब्राह्मण मनुसरता कश्चिद्विशेषोऽनुष्टुब् गायत्री सम्पादनादिर्दर्शितः—

"प्रचेतनप्रचेतयायाहिपिबमत्स्व।

क्रतुश्छन्दऋतम्बृहत्सुम्नआधेहिनोवसः॥"—इति। *

"चिकित्वोअभिनोनयशूरोयोगोषुगच्छति।

सखासुशेवोअद्वयुः॥"—इति। †

गायत्र्यादिरित्येव मादिः एष तु प्रयोग-सौकर्यार्थः। अस्माभिस्त्विदानी मर्थ-सौकर्यार्थं क्रमेण सोपसर्गा ऋचो व्याख्याताः। ‡

---

* एषानुष्टुप् सम्पन्ना, अष्टाक्षर-चतुष्पदात्वस्य सम्पादनात्।

† एषा गायत्री सम्पन्ना, अष्टाक्षर-त्रिपदात्वस्य सम्पादनात्।

‡ ग्रन्थकारादयो हि ग्रथनीयं व्याख्येयं वा प्रथमं स्व-मनस्येव सम्पाद्यते, ततश्च लेखन्यादिभिः काश्यतेऽतोऽत्र 'व्याख्याताः'—इति भूतप्रयोगो नासाधुः, "कौमुदीयं विरच्यते"—इत्यादावप्येष मेव।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



॥ हरिः ओम् ॥

( प्रथमास्तिस्रः )

३ १ २ ३ २ ३ १२ ३२ ३ १ २
विदामघवन्विदागातुमनुशꣳसिषो दिशः ।
१ २ ३ १ २
शिक्षाशचीनाम्पते पूर्वीणाम्पुरूवसो ॥ १ ॥
३ २उ ३ १ २ ३ २ २
आभिष्ट्वमभिष्टिभिःस्वा३र्न्नाꣳशुः ।
१ २ ३ १ २ ३ १ ० ३ १ २ ३ २
प्रचेतनप्रचेतयेन्द्रद्युम्नायनइषे ॥ २ ॥
३ २उ ३ २ ३ १२ ३२
एवाहिशक्रोरायेवाजायवज्रिवः ।
१ २ ३ २ ३ १ २
शविष्ठवज्रिन्नृञ्जसेमꣳहिष्ठ
३ २३ १ २ ३ २३१२
वज्रिन्नृञ्जसआयाहिपिबमत्स्व ॥ ३ ॥ १

१ २१२ २ १ १२१
* ए३ । विदामघवन्विदाः । गातुमनुशꣳसिषः ।
१ २ ३ ५ १२ १ २ २२ २
दाइशा३१उवा२३ । ई३४डा । ए३ । शिक्षाशचीनाम्प
१ २२२१२ १२ ३ ५ २२
ताइ । पूर्वीणाम्पूरू३ । वसा३१उवा२३ । ई३४डा । आ

---

महानाम्नी साम ( आ० ब्रा० ३,२,२९ ) ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ १ २ २ ५ १ र
भिष्ट्वमभा २इ। ष्टिभिरा३१उवा२३। ई३४डा। स्वर्नांᳮ

२ २ ५ १ १र र
पूरः। हा३२उवा२३। ई३४डा। प्राचे। तनप्रचेतया।

१ २ २ १र १ १ १ २ २ १र
इन्द्रा। द्युम्नायना २इषाइ। इडा। ईन्द्रा। द्युम्नाय

१ १ १ २ २ १र १
ना २इषाइ। अथा। इन्द्रा। द्युम्नायना २इषाइ।

१ १रर र र र र र २ २ २ २ १
इडा। एवाहिशक्रोरायेराजायवा१ज्री२वाः। शविष्ठ

२ ४ ५ १ १ १ २
वज्रिन्ना२। जासाइ। मᳮहिष्ठवज्रिन्ना२३द्दो। जासा३२

१ ११११ १ २ २ १
उवा२३। इट्इडा२३४५। आया। हिपिबमा २

१ १ ११११
त्सुवा। इडा२३४५॥—

तत्र तावदृचु, प्रथमं द्विपदा माह—"विदामघन्विदागा-
तुमनुशᳮसिषोदिशः"—इति। हे "मघवन्" मघं धनं [ मंहते-
र्दानकर्मणः * ] धनवन्निन्द्र! "विदाः" त्वं विद्धि, अत्र वेदितव्य-
कर्म-विशेषस्यानुपादानात् सर्वं जानीहीत्यर्थः [ विदेः पञ्चम-

* 'मंहते'—इति दानकर्मसु अन्तिम नैघण्टुकम् ३, २०।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



लकारे रूपम् * ] यतस्त्वं सर्वज्ञः तस्मात् "गातुं" यजमान-गन्तव्यं देशं † "विदाः" जानीहि । यद्वा, गातुर्गायतेः स्तुतिकर्मणः ‡ त्वदर्थं क्रियमाणां स्तोतुः स्तुतिं विद्धि । ततो "दिशः" यजमानस्य साधुमार्गेण स्वर्गं गन्तुं मार्गान् "अनु शंसिषः" अनुशंसोऽपदिशं बोधयेति यावत् [ शंसतेः पञ्चम-लकारे ( पा० ३, ४, ७, ) रूपम् । अडागमः ¶ ]—अय-मुपसर्गभागः ॥

अथ शाक्वरभाग माह—"शिचाशचीनाम्पतेपूर्वीणाम्पुरू-वसो । आभिष्टमभिष्टिभिः"—इति । हे "शचीनाम्पते" शची-शब्देन कर्म प्रज्ञा वा § "पूर्वीणां" बह्वीनां ‖ शचीनां पते स्वामिन् ! हे "पुरूवसो" पुरु प्रभूतं वसु धनं यस्य तस्य सम्बोधनं हे प्रभूतधनेन्द्र ! "आभिः" इदानीं क्रियमाणाभिः "अभिष्टिभिः" अभ्येषणाभिः प्रार्थनाभिः स्तुतिभि रस्मदीयाभि

* लेटीत्यर्थः ( पा०३,४, ७ ) ।

† "गातुः"—इति पृथिवी-नामसु विंशं नैघण्टुकम् १,१ । "गातुं यज्ञाय गातुं यज्ञपतय इत्यपि निगमो भवति । गमनं यज्ञाय गमनं यज्ञपतये"—इति निरु० नै ४, २ ।

‡ "गायति"—इति स्तुति-कर्मसु द्वितीयं नैघण्टुकम् ३, १४ ।

¶ "लेटोऽडाटौ"—इति पा० ३, ४, ९४ ।

§ "शची"—इति कर्मनामसु द्वाचत्वारिंशत्तमं नैघण्टुकम् ( २,१ ) ; प्रज्ञानामसु स्त्रष्टमम् ( ३, ९ ) ।

‖ "पुरु"—इति बहुनामसु तृतीयं नैघण्टुकम् ३, १ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



र्हेतुभिः "शिच" * [ शिचतिर्दानकर्मा ( निघ० ३, २०, ८ ) ] देहि वसूनीति ] शेषः। पुरुवसो-इति सम्बोधन-सामर्थ्याद्वसूनीति लभ्यते॥

अथोपसर्गभाग माह—"स्वर्णांशुः। प्रचेतनप्रचेतये"—इति। स्वः, न, अंशुरिति पदत्रयम्। स्वरादित्यः, † नकार उपमार्थीयः ‡। स्वः, इव [ अंशुः अश्नोतेर्व्याप्तिकर्मणः ( निघ० २,१८,१० ) ] व्याप्तो भवतीन्द्रः। हे "प्रचेतन" प्रकृष्टा चेतना बुद्धिर्यस्यासौ तस्य सम्बोधनं हे प्रशस्तज्ञानेन्द्र! "प्रचेतय" अस्मदीयां भक्ति मवधारय जानीहि॥

अथोभयभाग माह—"द्युम्नायनइषएवाहिशक्रः"—इति। हे इन्द्र! "नः" अस्मभ्यं "द्युम्नाय" [ "द्युम्नं द्योततेर्यशोवान्नं वा" —इति यास्कः ( नै० ५,५ ) ] यशसे यद्वा, द्युम्नाय [ धननामैतत् ( निघ० २,१०,१३) धनलाभाय ] "इषे" अन्नलाभाय च भव [ आख्याताध्याहारः। हि शब्दः कारण-परः ] "हि" यस्मात् त्वं "शक्रः" धन-दाने समर्थ एव भवसि। तस्माद्धनादिकं प्रयच्छ॥

---

* मन्त्रे तु "शिचा"—इति दीर्घान्तः पाठः "द्व्यचोऽतस्तिङः (पा० ६, ३, १३५) —इति दीर्घः।

† स्वरादित्यो भवति"—इत्यादि निरु० नै० २, १४।

‡ "नेति प्रतिषेधार्थीयो भाषाया मुभय मन्वध्यायं नेन्द्रं देव मसंसतेति प्रतिषे-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



( द्वितीया स्तिस्रः )

३ २ ३ २ ३ २ ३ २ ३ १ २ ३ २ ३ २ ३ १ २
विदारायेसुवीर्य्यम्भवोवाजानाम्पतिर्वशाꣳअनु ।
१ २ ३ २ ३ १ र २ र ३ १ २
मꣳहिष्ठवज्रिन्नृञ्जसेयःशविष्ठःशूराणाम् ॥ ४ ॥

अथ शाक्करभाग माह—"रायेवाजायवज्रिवः । शविष्ठवज्रिन्नृञ्जसेमꣳहिष्ठवज्रिन्नृञ्जसे"—इति । हे "वज्रिवः" वज्रवन्निन्द्र ! एकोमत्वर्थीयोऽनुवादः । यद्वा, वज्रः व्रजनं गमनं तद्वान्वज्री । अथवा वज्रायुधं तद्वन्निन्द्र ! "राये" धनलाभाय "वाजाय" अन्नलाभाय च प्रसन्नो भवेति शेषः । हे "शविष्ठ" अतिशयेन बलवन् ! हे "वज्रिन्" इन्द्र ! "ऋञ्जसे" [ऋञ्जतिः प्रसाधनकर्मा । (निघ० ३, ५, ८)] अस्माभिर्धनलाभार्थं प्रसाध्यसे । यद्वा, [ऋञ्जतिः पञ्चमे लकारे (पा० ३, ४, ७) रूपम्] प्रसाधय अस्मान्धनादिभिः समृद्धान् कुर्वित्यर्थः । हे "मंहिष्ठ" [मंहतेर्दानकर्मणः] अतिशयेन दानशील पूज्य ! वा हे "वज्रिन्" "ऋञ्जसे" अस्माभिः प्रसाध्यसे ॥

अथापरभाग माह—"आयाहिपिबमत्स्व"—इति । यस्मादेवं तस्मात् "आयाहि" अस्मदीयं यज्ञं प्रत्यागच्छ । आगत्य च पिब । तं सोमं पीत्वा "मत्स्व" हृष्टो भवेति ॥ ( १-२-३ ) ॥

---

धार्थीयः पुरस्तादुपचारस्तस्य यत् प्रतिषेधति । दुर्मदासो न सुरायामित्युपमार्थीय उपरिष्टादुपचारस्तस्य येनोपमिमीते"—इति निरु० नै० १, ४ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१र २र ३ १ २ ३ २उ ३ २
योमꣳहिष्ठोमघोनामꣳशुर्न्न शोचिः ।

१ २ ३ १ २ ३१ २ ३ र २र
चिकित्वोअभिनोनयेन्द्रोविदेतमुस्तहि ॥ ५ ॥

३ २ ३ २ ३उ ३ १ २ ३ १ २ ३ १ २
ईशेहिशक्रस्तमूतये हवामहेजेतारमपराजितम् ।

१ २ ३ २ ३ २ ३ २ ३ २ २ ३ २ ३ १
सनः स्वर्षदतिद्विषःक्रतुश्छन्दऋतम्बृहत् ॥ ६ ॥ २

१ २ १र र र र १ १ र र र
ए३ । विदारायेसुवीरियाम् । भुवोवाजानाम्पतिर्व

१ २ २ ५ १ १
शाꣳ२ । अनुआ३१उवा२३ । ई३४डा । ए२ । मꣳहि

२ १ १ र ऽ २ २
ष्ठवज्रिन्नृञ्जसाइ । यःशविष्ठःशूरार२णा३१उवा२३ । ई३४

५ १र र ऽ २ २ ५
डा । योमꣳहिष्ठोमघोर । ना३१उवा२३ । ई३४डा ।

२ १ र ऽ २ २ ५ १
अꣳशुर्नशोचार२इः । हा३१उवा२३ । ई३४डा । चाइ ।

१ र र १ २ २ १र १ १
कित्वोअभिनोनया । ईन्द्रो । विदेतमू२स्तुहाइ । इडा ।

१ २ २ १र १ १ १ २ २ १र
ईन्द्रो । विदेतमू२स्तुहाइ । अथा । ईन्द्रो । विदेतमू

१ १ १र र र र १ २ २
२स्तुहाइ । इडा । ईशेहिशक्रस्तमूतये हवा१मा२हाइ ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र१र २ ४ ५ १ १
जेतारमपरा३। जाइताम्। सनःस्वर्षदता२३होइ।

१ २ १ १११२ १ २ २ १
दाइषा३१उवा२३। इट्इडा२३४५। क्रातूः। क्रत्‌

१ १ ११११
स्तृतार्म्बृ्हात्। इडा२३४५॥--

अथ द्वितीयाया ऋचि प्रथमं द्विपदा माह—“विदाराये सुवीर्यम्भुवोवाजानाम्पतिर्वशाꣳ अन्विति। हे इन्द्र! “सुवीर्य” शोभनोवीरः पुत्रः शोभनपुत्रोद्भव-सामर्थ्यम्। यद्वा, शोभनवीर्यं युद्धादिष्वपराजयं “विदाः” लम्भय प्रापय। किमर्थम्? “राये” धनार्थम् धनं रक्षितु मित्यर्थः। “वाजानां” सेनानां बलानां वा “पतिः” स्वामी त्वं “भुवः” भवसि। “वशान्” वशेः कर्मणिवशिरण्योरित्यप्रत्ययः। काम्यमानानर्थान् “अनु” अभि लक्ष्य यथाकाम मित्यर्थः। यद्वा वशांस्त्वदधीनान् यजमानान् “भुवः” भावयसि [भवतेः पञ्चमलकारे (पा० ३, ४, ७) रूपम्। “भूसुवोस्तिङि”. (पा० ७,४,८८ —इति गुण-प्रतिषेधः॥

अथ स्तीयमाग माह—“मंहिष्ठवज्रिन्नृञ्जसेयःशविष्ठः शूराणाम्। योमंहिष्ठोमघोनाम्”—इति। हे “मंहिष्ठ” अतिशयेन बलवन्! “यः” त्व “मघोनां” मघशब्दो धनवाची तद्वतां मध्ये मंहिष्ठः अतिशयेन दाता तस्मा,दस्माभिर्वन्दनार्थं प्रसाद्यसे॥

४ ८ ख,


CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथोपसर्गभाग माह—"अंशुर्नशोचिः। चिकित्वोऽअभिनोनया"-इति "अंशुर्न" व्याप्त आदित्य इव शोचिर्दीप्तो भवतीन्द्रः [ शुच दीप्तौ (भ्वा॰ आ॰)] शुद्धः [शुचेर्मत्वर्थीयलोपः ] शोचिष्मान्। अथ प्रत्यक्षस्तुतिः—हे "चिकित्वः" चिकित्वन् [ मतुवसोरुसम्बुद्धौ छन्दसि (पा॰८,३,१)"--इति रुत्वम् ] ज्ञानवन्निन्द्र ! "नः" अस्मान् अभि लक्ष्य "नय" धनादि प्रापय ॥

अथ भागद्वयं मिलित्वाह—"इन्द्रोविदेतमुस्तुहि। ईशेहि शक्रः"—इति। "इन्द्रः" परमैश्वर्ययुक्तः। "विदे" विद्यते सर्वैर्ज्ञायते "तमु" तमेवेन्द्रं "स्तुहि" स्तुतिं कुर्विति। ऋषिरात्मानमेव शास्ति। "हि" यस्मात् "शक्रः" शत्रु-हनन-समर्थ इन्द्रः "ईशे" ईष्टे सर्वस्येति तस्मात् तमेव स्तुहीति समन्वयः ॥

अथ शाक्करभाग माह—"तमूतयेहवामहेजेतारमपराजितम्। सनःस्वर्षदतिद्विषः"—इति। "तम् इन्द्रम्" "ऊतये" अस्मद्रक्षणार्थं "हवामहे" आह्वयामहे। कीदृशम्? "जेतारं" युद्धेषु शत्रुजयशीलं [ ताच्छील्ये तृन् प्रत्ययः (पा॰३,२,१३५)]। अतएव अपराजितं न क्वाप्यन्यैः पराजितम्। "सः" इन्द्रः "नः" अस्माकं "द्विषः" द्विष्टॄन् "अति स्वर्षत्" अत्यर्थं मुपतपतु विनाशयतु। स्वृ शब्दोपतापयोरित्यस्मात् पञ्चम-लकारेरूम्। अथ वा

---

* "इन्द्रतेवस्वर्य-कर्मणः"—इति निरु॰ दै॰ ४, ८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



( तृतीया स्तम्भः )

२ ३ १ २ 　 ३ १ २ 　 ३ १ २ ३ १ २
इन्द्रन्धनस्यसातये हवामहेजेतारमपराजितम् ।
१ २ 　 ३ २ ३ २ ३ १ २ 　 ३ २ ३ १ २
सनःस्वर्षदतिद्विषःसनःस्वर्षदतिद्विषः ॥ ७ ॥
१ २ ३ १ २ 　 ३ 　 १र 　 २र
पूर्वस्ययत्तेअद्रिवोंशुर्म्मदाय ।
३ १र 　 २र 　 ३ १ २
सुम्नआधेहिनोवसोपूर्त्तिःशविष्ठशस्यते ॥
३ १उ 　 ३ २ ३ १र 　 २र ३ १ २
वशीहिशक्रोनूनन्तन्नव्यंसन्यसे ॥ ८ ॥

स्वरतिर्गतिकर्मा (निघ० २,१४,५४) अस्मत्तः शत्रूनतिगमयतु अतिपारयतु । तथा च बह्वृचाः—"सनःपर्षदित्यामनन्ति ॥

अथोपसर्गभाग माह—"क्रतुश्छन्दऋतम्बृहत्"—इति । शत्रुहननानन्तरं "क्रतुः" अस्माभिरनुष्ठीयमानं कर्म* । "छन्दः"† गायत्र्यादिकं शस्त्रलक्षणम् । "ऋतम्" उदकं‡ सोमरस इत्यर्थः । यद्वा ऋतं सत्यभूतं¶ कर्मफलं तत्सर्वं "बृहत्" प्रभूत मस्त्विति शेषः ॥ ( ४-५-६ ) ॥

---

* "क्रतुः"—इति कर्मनामसु एकादशं नैघण्टुकम् २, १ ।

† "छन्दांसि छन्दनात्"—इति निरु० दै० १, १२ ।

‡ "ऋतम्"—इति उदकनामसु चतुष्षष्टितमं नैघण्टुकम् १, १२ ।

¶ "ऋतम्"—इति सत्यनामसु षष्ठं नैघण्टुकम् ३, १०



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३१र २र २ २ १ २
प्रभोजनस्यवृत्रहन्त्समर्य्येषुब्रवावहै ।

२ ३ २उ ३ १ २ ३ १ २ ३ २
शूरोयोगोषुगच्छतिसखासुशेवो अद्वयुः ॥ ९ ॥ ३

१ १ २ र १ १ र र र र
ए२ । इन्द्रन्धनस्यसातयाइ । हवामहेजेतारमप

१ २ २ ५ १ १ २
रा२ । जितमा२१उवा२३ । ई३४डा । ए२ । सनःस्वर्ष

१ १ १ २
दतिद्विषाः । सानःस्वर्षदता२इ । द्विषआ३१उवा२३ ।

२ ५ १र १ २ २
ई३४डा । पर्वस्ययत्त्आ२ । द्रिवआ२१उवा२३ । ई३४

५ २ १ र ऽ २ २ ५
डा । अᳪ्शुमर्दाया२ । द्दा३१उवा२३ । ई३४डा ।

१ १ २ र र १ २ २ १ १
सुम्नआधेहिनोवसाउ । पूर्त्तीः । शविष्ठशा२स्यताइ ।

१ १२ २ १ १ १ १ २
इडा । पूर्त्तीः । शविष्ठशा२स्यताइ । अथा । पूर्त्तीः ।

२ १ १ १ १ २ र र २
शविष्ठशा२स्यताइ । इडा । वशीहिशक्रोनूनन्तन्नव्यᳪ्सा

२ २ २१र २ ४ ५ १ र
१न्या३साइ । प्रभोजनस्यवा३ । त्राहान् । समर्येषुब्रवा

१ १२ १ १११११ १ २
२३होइ । वाहा३१उवा२३ । इ॒ट्इडा२३४५ । शूरो ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र १र १ १ १ २ २ १र १
योगोषुणा२च्छताइ। इडा। साखा। सुश्रेवो२दयूः।
१ १ १ १ १
इडा२३४५॥—

अथ तृतीयस्या ऋचि प्रथमं द्विपदा माह—"इन्द्रन्धनस्यसात-येहवामहेजेतारमपराजिम्"—इति। "धनस्य" "सातये" लाभार्थम्। शेषं स्पष्टम्॥

अथ शक्करभाग माह—"सनःस्वर्षदतिद्विषः। पूर्वस्ययत्ते अद्रिवः"—इति। "सः" इन्द्रो "नः" अस्माकं "द्विषः" द्वेष्टृन् "अति स्वर्षत्" विनाशयतु। येऽप्यन्ये स्वयं द्वेषं न कुर्वन्ति तथापि "द्विषः" अस्माभिर्द्वेष्याः तानप्यति स्वर्षत् [सर्वत्र हि वेदेषु योऽस्मान् द्वेष्टि यं च वयं द्विष्म इत्यादौ द्वेष्टॄणां द्वेष्याणाञ्च विनाशः प्रार्थ्यते]। हे "अद्रिवः" अद्रयः पर्वताः तद्वन्निन्द्र! इन्द्रो यतः पर्वतान् भिनत्ति अतः पर्वतेन्द्रयोर्भेद्यभेदकसम्बन्धः*। यद्वा आदृणात्यसुररक्षांसीति वा अन्यैः स्वयं न दीर्यते प्रहत इति वा अद्रिर्वज्रः तद्वन्निन्द्र! "पूर्वस्य" पुरातनस्य "ते" तव "यद्" धन मस्ति तदस्मभ्य माहरेति शेषः॥

अथापरभागमाह—"अंशुर्मदायसूम्नआधेहिनोवसः"—इति। हे इन्द्र! योऽयम् "अंशुः" सोमलताखण्डः तज्जन्यः सोमरस इत्यर्थः [जन्ये जनकव्यवहारः] स च "मदाय" भवति।

* "तत्रोपमार्थेन युद्धवर्णा भवन्ति"—इति निरु० नै० २, १६।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



यस्मादस्माभिर्दत्तः सोमः तव मदाय भवति तस्मात् हे "वसो" निवासहेतो इन्द्र! "नः" अस्मान् "सुम्ने" सुखे धने वा* "आधेहि" स्थापय॥

अथ स्तोयपरभागौ सहैवाह—"पूर्तिःशविष्ठशस्यतेवशीहिशक्रः"—इति। हे "शविष्ठ" बलवत्तमेन्द्र! तव "पूर्तिः" त्वदीयं धनपूरणं दान मित्यर्थः। "शस्यते" सर्वैः स्तूयते। "हि" यस्मात् "शक्रः" समर्थ इन्द्रः "वशी" सर्वस्य नियन्ता खलु। यद्वा, "वशी" वसुविषय-स्वीकारवान्। अतएव "शक्रः" दाने शक्तिमान्। तस्मात्ते दानं स्तूयते॥

अथ शाक्करभाग माह—"नूनन्तन्नव्यं सन्यसे। प्रभोजनस्य वृत्रहन्तत्समर्यैषुब्रवावहै"—इति। हे "प्रभो" सर्वस्य जनस्य स्वामिन्! हे "वृत्रहन्" वृत्रो मारकः शत्रुः तद्धननवान् शत्रुघातिन्†। "नव्यम्" नूतनं‡ बली-पलितादि-लक्षणेन पुराणत्वेन वर्जितं तमिन्द्रं त्वां "नूनम्" अवश्यं "सन्यसे" अहं सम्यक् नितरां प्रक्षिपामि। अस्मिन् कर्मणि हविषो भोक्तृत्वेन स्थापयामीत्यर्थः [असु क्षेपणे (दि०प०)। व्यत्ययेनात्मने पदम् (पा०३,१,८५) विकरण-लुक् च। सह सुपेत्यत्र सहेति योगविभागात् सन्नि-

---

* "सुम्नम्"—इति सुखनामसु षोड़शं नैघण्टुकम् ३, ६।

† "वृत्रो मेघ इति नैरुक्ताः त्वाष्ट्रोऽसुर इत्यैतिहासिकाः"—इति निरु०नै० २,१६।

‡ "नव्यम्",—इति नूतननामसु चतुर्थं नैघण्टुकम् ३, २८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



भ्या मुपसर्गाभ्यां सह समासः । यद्वा, हे इन्द्र ! नव्यमिति क्रिया-विशेषणम् नूतनम् अन्यै रच्चत-पूर्वं यथा भवति तथा "नूनम्" इदानीं "सन्यसे" अस्माभिः सेव्यसे । षण सम्भक्तौ (स्वा०प०) ाकि रूपम् । "छन्दस्यनेक मपि साकाङ्क्षम् (पा० ८, १, ३५)— ाख्यातस्योदात्तत्वम् । किञ्च । "अर्येषु" अर्थेषु प्राप्तव्येषु यज्ञादिषु कर्मसु "सम्नवावहै" त्वञ्चाहञ्चावां सम्भाषां करवावहै । सर्वस्य यजमानस्येन्द्रसाक्षात्कारो भवति तमर्थं द्योतयितु मेकत्र सहवदन मित्यर्थः ॥

अथोपसर्गभाग माह—"शूरोयोगोषुगच्छतिसखासुशेवोअ-द्वयुः"—इति । य इन्द्रः "शूरः" समर्थः [ गोषु निमित्त-सप्तमी (पा० २,३,३७) ] "गोषु" गवार्थं युद्धादिषु शत्रुभ्यो गवान-यनार्थं गच्छतीत्यर्थः । कीदृशः ? "सखा" समानख्यानः सखि-वदत्यन्तस्निग्धः । अतएव "सुशेवः" शोभन-सुखः अक्लच्छेण सुखकरः । "अद्वयुः" द्वयरहितः सत्यानृतवर्जितः केवल-सत्य-स्वरूप इत्यर्थः । यद्वा । यद्द्वन्द्वं मनसि वचसि क्रियायां वान्यत् कार्य मिति तद्रहितः । अथवा एतत्सदृशो द्वितीयो नास्तीत्य-द्वयुः [मत्वर्थीय उप्रत्ययः ] अपिच । एताभ्यां यजमानेन्द्रयोः सम्भाषा-प्रकारोऽभिधीयते । हे इन्द्र ! "यः" यजमानोऽस्ति सोऽयं गोषु दक्षिणारूपेण दातव्यासु उदारः सन् प्रवर्तते, सर्वा अपि ददातीति । यद्वा, गोषु आश्रयण-चौरानयनार्थं गच्छ-



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



( पञ्च पुरीषपदानि )

३ २ ऽऽऽऽऽ ऽ२३ १ २ ३ १ २
एवाह्ये ऽ३ऽ३ऽ२वएवा ३ ह्यग्नएवाहीन्द्र।
३ १र २र ३ १र २र
एवाहिपूषन्एवाहिदेवाः॥ १०॥ ४

१ २ २ र१ १११ १ १ २र
आइवा। हियेवा२३४५। होइ। हो। वाहा३१
२ ५ १ २ २ १ ११११ १
उवा२३। ई३४डा। आइवा। हियग्ना२३४५इ। हो
१ २र २ ५ १ २ २
इ। हो। वाहा३१उवा२३। ई३४डा। आइवा। हि
१ ११११ १ १ २ २ ५
इन्द्रा२३४५। होइ। हो। वाहा३१उवा२३ ई३४डा।
१ २ २ १ ऽऽऽऽ १ १ २र
आइवा। हिपूषा२३४५न्। होइ। हो। वाहा३१
२ ५ १ २ २ र १ ११११
उवा२३। ई ३ ४ डा। आइवा। हिदेवा २ ३ ४ ५ः।
१ १ २र २ ५
होइ। हो। वाहा ३ १ उवा २ ३। ई ३ ४ डा॥ १॥

तीत्येवं मदीयं गुणं त्वं देवेषु ब्रूहि। अहमिन्द्रोऽयं स्तोत्रेषु सखा सन् सुखकरो भवतीत्येवं त्वदीयं गुण मन्येषु स्तोत्रेषु ब्रवीमीति। एव मृचो व्याख्याताः॥ (७८-९)॥



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



अथ पुरीषपदानि व्याख्यायन्ते—तानि सर्वाण्यैन्द्राण्येव तद्गुण-योगात्तत्रत्यतृतीयपदेन वाग्न्यादिपदैरिन्द्र एव * सम्बोध्य स्तूयते ॥

तत्र प्रथमं पद माह—एवाह्येवेति । हे "इन्द्र !" त्वम् "एव † हि" एव मुक्तगुणोऽसि खलु । यद्वा, एव शब्द इण्-गतौ (अदा०प०)—इत्यस्मात् "इणशीभ्यावतीति वत्प्रत्ययान्तः । सुपो लुक् (पा० ७,१,३९) । अस्मदीयं यज्ञं प्रत्येव आगन्ता भवेति शेषः । एवेति पुनरुक्तिरादरार्था ॥

अथ द्वितीयं पद माह—एवाह्यग्नइति । हे "अग्ने" अग्रस्य नेतः देवानां पुरतो गन्तरिन्द्र! एतदात्मक वा इन्द्र! ‡ "एव हि" एवं गुणयुक्तः खलु यज्ञं प्रत्यागन्ता आ भव ॥

अथ तृतीयं पद माह—एवाहीन्द्रेति । हे "इन्द्र" परमै-श्वर्ययुक्त! यद्वा, इन्धे प्रकाशयति तेजसा भूतानीतीन्द्रः । अथवा इदं सर्वं जगत् प्रथम मपश्यदितीन्द्रः । तथाच ऐतरेयोपनिषदि श्रूयते—"इद मदर्श मिति । तस्मादिन्द्रो

* "एकरूपा मित्यग्निः पृथिवीं दहति सर्वमेकोऽभि विपश्यति कर्मभिरादित्योगति-रेकस्य दृश्यते—इति निरु० दै० ५, २७ ।

† मन्त्रे तु "एवा"—इति "निपातस्य च ( ६, ३, १३६ )"—इति दीर्घः ।

‡ "इम मेवाग्निं महान्त मात्मान मेक मात्मानं बहुधा मेधाविनो वदन्तीन्द्रं मित्रं वरुण मग्निं दिव्यञ्च गरुत्मन्तम्"—इति निरु० दै० १, १८ ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



नामेन्द्रो ह वै नाम तमिन्द्रत्वं सन्त मिन्द्र इत्याचक्षते परोक्षेणेति । तद्वद्धयम् "एव हि" ॥

अथ चतुर्थं पद माह—एवाहिपूषन्निति । "पूषन्" विश्वस्य पोषक एतदात्मक वा इन्द्र ! * एव मुक्तगुणः खलु त्वम् ॥

अथ पञ्चमं पद माह—एवाहिदेवाइति । हे "देवाः" इन्द्रादयः ! यदा सर्वदेवानां बलरूपेण इन्द्रस्यावस्थानात् † इन्द्र एव बहुत्वेन सम्बोध्यते । हे "इन्द्र" ! एव मुक्तगुणः खलु त्वम् । यद्वा, एवशब्दात् सुपांसुलुगिति ( पा० ७,१,३९ ) जसो लुक् । अस्मदीयं यज्ञं आगन्तारो भवतेत्यर्थः ॥ (१०) ॥ १

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमार्थांश्चतुरो देयाद्विद्यातीर्थमहेश्वरः ॥ १ ॥

इति श्रीमद्राजाधिराज-परमेश्वर-वैदिकमार्गप्रवर्त्तक-श्रीवीर-
बुक्क-भूपाल-साम्राज्यधुरन्धरेण सायणाचार्येण विरचिते
माधवीये सामवेदार्थप्रकाशे छन्दोव्याख्याने
महानाम्नी-व्याख्यानं समाप्तम् ॥

---

## ॥ सामवेदसंहितायां महानाम्न्यार्च्चिकः समाप्तः ॥

---

* "अथ यद्रश्मिपोषं पुष्यति तत् पूषा भवति"—इत्यादि निरु० दै० ६, १६ ।

† "या च का च बलकृतिरिन्द्रकर्मैव तत्"—इति निरु० दै० १, १० ।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi

॥ ॐ नमः सामवेदाय ॥

# ॥ सामवेदसंहिता ॥

मंच

## ॥ अथ छन्दआर्चिक-परिशिष्टम् ॥ *

अथवा

## ॥ अथ अरण्यगानम् ॥ †



॥ हरिः ॐ ॥

२ ३र २ ५ २र
‡ यद्यावई। द्रता३१उवा२३। शा२३४ताम्। हा

२ ५ २ १ र र २
हा३१उवा२३। ई३३४डा। शतम्भूमीः। उता३१उवा

* यद्यप्ययं भागो न ह्यार्चिकग्रन्थस्य ऋग्लक्षणशून्यत्वात् प्रत्युतास्य ऋङ्मूलकगानत्वमेव स्फुटम् परमेतन्मूलर्चस्तु छन्दस्येवार्चिके दृश्यतेऽतस्तस्यैव परिशिष्टमिति व्यवह्रियतेऽस्माभिः, ऋग्गानात्मकस्यास्य सामवेदीय-मन्त्र-भागस्य व्याख्याने ऋगंशस्यैव प्राधान्यात् भाष्यकारादिभिस्तथैव व्यवहारात्, गानग्रन्थानेव प्रधानीकृत्याच प्रकाशेऽप्रवृत्तत्वादृक्परिचय-पूर्वकस्यैव गानपरिचयस्य न्याय्यत्वाच्च। न सन्ति चेह श्रुतानां साम्नां कतिपयाना मृचः, तेषां स्तोभमात्र-मूलकत्वात्; तेऽखिलस्तोभाः सायणादिभिर्व्याख्याता नवेत्यद्यापि न ज्ञायते परं तत्पुस्तकन्नक्रीतमस्माभिरार्चिकपद-ग्रन्थाध्ययनात् प्रागेवेति तमपि विच्छिद्य यथागानमिह दर्शयिष्ये।

† अरण्ये गेयत्वादस्य पूर्वप्रदर्शितगेयगानात् पार्थक्यमरण्यगानमित्यभिधेति च।

‡ "षष्ठो वैरूपाणि। अजयनैरूपम्"—इति आ०ब्रा० ३, १, ८।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ ५ २र २ ५ १
२३। सीर३४यूः। हाहा३१उवा२३। ई२३४डा। न

र २ १ र २ ३ ५ २र
त्वावज्रिंत्सहस्र७सू। रिया ३ १उवा २ ३। आर३४नू। हा

३ ५ १ र २
हा३१उवा२३। ई२३४डा। नजातमाष्टरो३। आउ।

१ २ ५ २र १ १११
वा२३। दा२३४सी। हाहा३१उवा२३। इट्इडा२३४५॥१॥

१ र २ १ १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

१ र १ २ १ र १ १
नात्वावज्रिन्। सहस्र७सूरिया २आनू२। नाजा २त

१ २ १ १ ३ ५र र १
मा। ष्टरो२३। दा२सा२३४औहोवा। दिशंविश७ष

१ र २ १ १ ११११
स्। अस्वाशिशूमती३। इट्। इडा२३४५॥ २॥

१ र २ र १ १र २ १ र र ११ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

१र १ १र ऽ २ १ र २
ओवा२। हु७२। ३। ओवा३। हाउवा। नत्वावज्रिं

* "इडा च"—इति सा० ब्रा० ३, २, ८। वैरूपमिति शेषः।

† "पञ्चनिधनञ्च"—इति सा० ब्रा० ३,२,८। वैरूपमिति शेषः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ १र २र १ २ १र १ १र ऽ २
त्सहस्रꣳसूर्य्याअनु। ओवा२। हꣳ२। ३। ओवा३। हा

१र
उवा। नजातमष्टरोदसी। ओवा२। हꣳ२। ३। ओ

ऽ २ १ १र १
वा३। हाउवा। दिग्मंविशꣳहस्। ओवा२। हꣳ

१र ऽ २ १ र २ र १र
२। ३। ओवा३। हाउवा। अश्वाशिप्रुमती। ओवा

१ १र ऽ २ १११ १
२। हꣳ२। ३। ओवा३। हाउवा३। इट्इडा२३४५॥३॥

१ र २ र १ १र २ १ र र २ १ ऽ ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

२ऽ ऽ ऽ १ र २ १ २ १र २र १ २ऽ
हाउहाउहाउवा। नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हा

१ र २ १र २र २ऽ १
उ३वा। नजातमष्टरोदसी। हाउ३वा। दिग्मंविशꣳ

२ऽ १ र २ र २ऽ २
हस्। हाउ३वा। अश्वाशिप्रुमती। हाउ३वा। यु

१ २ र १ र २ऽ १ १११
वतिस्त्कुमारिणी। हाउ३वा३। इट्इडा२३४५॥४॥

१ र २ र १ १र २ १ र र २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

---

* "वत्रिधनम्"—इति सा० ब्रा० ३,२,८। वैरूपमिति शेषः।

† "सप्तनिधनम्"—इति सा० ब्रा० ३,२,८। वैरूपमिति शेषः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२ऽ १ २ २ १ २ १२ २२ १ २ऽ
हाउ३वा। नत्वावज्रिन्त्सहस्र(ँ)सूर्य्याअनु। हाउ३वा।

१ २ २ १२ २२ २ऽ १ २ऽ
नजातमष्टरोदसी। हाउ३वा। दिशंविश(ँ)हस्। हा

१ २ २ २ २ऽ १२ २ऽ
उ३वा। अश्वाशिष्णुमती। हाउ३वा। सूवः। हाउ

१२ २ऽ १ १ १ १ १
३वा। ज्योतिः। हाउ३वा३। इट्इडा२३४५॥ ५॥

१ २ २ २ १ १२ २ १ २ २ २ १ १ १ऽ
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

२ऽ १ २ २ १ २ १२ २२ १ २ऽ १
हाउ३वा। नत्वावज्रिन्त्सहस्र(ँ)सूर्य्याअनु। हाउ३वा। न

२ २ १२ २२ २ऽ १ २ऽ
जातमष्टरोदसी। हाउ३वा। दिशंविश(ँ)हस्। हाउ३

१ २ २ २ २ऽ २ १ १२ १ २
वा। अश्वाशिष्णुमती। हाउ३वा। युवतिश्चकुमारिणी।

२ऽ १२ २ऽ १२ २ऽ
हाउ३वा। सूवः। हाउ३वा। ज्योतिः। हाउ३वा३।

१ १ १ १ १
इट्इडा२३४५॥ ६॥

१ २ २ २ १ १२ २ १ २ २ २ १ ऽ
† यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

---

* "अष्टानिधनञ्च"—इति ब्रा० ब्रा० ३,२,८। वैरूपमिति शेषः।

† "द्वादशनिधनञ्च"—इति ब्रा० ब्रा० ३,२,८। वैरूपमिति शेषः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



१ २ र   १ २   १ र २   १ २
ओहहाउहाउ। ओहहाउवा। नत्वावज्रिन्त्सहस्रꣳ

१र २र १   ३र २र १र २र   ३र २र १र २र   ३र २र १र २र
सूर्य्याअनु। ओहाओहा। ओहाओहा। ओहाओहा

२   १ र   २ १र २र   १ २ र
३। हाउवा। नजातमष्टरोदसी। ओहहाउहाउ।

१ २   १   ३र २र १र २र
ओहहाउवा। दिशंविशꣳहस्। ओहाओहा। २।

३र २र १र २र   २   १ र   २ र   १ २
ओहाओहा ३। हाउवा। अश्वाग्निभूमती। ओह

र   १ २   १र र   ३र २र १र २र
हाउहाउ। ओहहाउवा। सूवाः। ओहाओहा। २।

३र २र १र २र   २   १र   १ २ र
ओहाओहा३। हाउवा। ज्योतिः। ओहहाउहाउ।

१ २   १र र   ३र २र १र २र   ३र २र १र २र
ओहहाउवा। ईडा। ओहाओहा। २। ओहाओहा

२   १   १ र   १ २ र   १ २
३। हाउवा। इट्। इडा। ओहहाउहाउ। ओहहाउ

२   २   २   ३ १ १ १ १
वा३। हौ३। आ३। ऊ३। ई२३४५॥ ७॥

१र   २ र १   १र २ १ र र २ १   १
* यद्यावइन्द्रतेशतम्। ए। शतम्भूमीरुत। स्योवा।

---

* "पुष्पश्च"—इति श्या० ब्रा० ९,२,८ विरूपमिति शेषः।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



२र ३र र १ र २र ३र २ १ र २ ३ ५
हाओवा। २। ऊवे। हाओवा। ऊवे। हाओ२३४वा।

१ र र १ २ १र २र १ २र ३र र १ र २र
नत्वावज्रिन्त्सहस्रꣳसूर्य्याअनु। हाओवा। ३। ऊवे। हा

२र र १ र २ ३ ५ १ र २ १र २र
ओवा। २। उवे। हाओ२३४वा। नजातमष्टरोदसी।

२र ३र र १ र २र ३र र १ र १ २र २ १
हाओवा। ४। हुवे। हाओवा। ४। नाजातमष्टरोदसा

२र १ ३ ५ २र ३र र १ र २र ३र
इ। ऐहोइ। आ२३४इही। हाओवा। ५। हुवे। हाओ

र २ऽ ऽ ऽ १ ऽ २ऽ २ १ १ १ १
वा। ५। हैहैहैहोवा३। हाउवा३। ऊ२३४५॥ ८॥

एतेषां व्याख्यानम्—१भा० ५७१ पृष्ठे द्रष्टव्यम्। १—८

२र र २ १ ऽ २र र १र
* हाउपिबासुता। स्यरसि। ना:। औहौहोवा२।

१ २ १ र २ १र २र र १र १ २
इहा। मत्स्वानइन्द्रगोम। ता:। औहौहोवा२। इहा।

२र १ र २र १र २र १ २र र १र १ २
आपिर्नाबोधिसधमाद्येवृ। धाइ। औहौहोवा२। इहा।

१र १ २र र १र १ २ २ १ १
अस्माꣳस्र। वा। औहौहोवा२। इहा। तुताइ। धा

• "बभ्रविचे हे"—इति आ० ग्रा० ९,१,८। तत्र पर्वमिदम्।



CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

Digitized by Madhuban Trust, Delhi



३　　५र र　　२ १　　र र　　२　　१
२या२३४औहोवा । सुष्टुभस्तुभोम्वाशिघ्रुमक्रा३न् । इट्

१ १ १ १
इडा२३४५ ॥ ९ ॥

२र　　२　१　　१ २　　　१ २
* पिबासुता । स्यरसिनः । मात्स्वा१नाई२ । आ । औ३

र र २　　२ ५　　२१र　　१ ७
होवाहाउवा३ । ई३४डा । इगोमतः । आपिनोंबो२ ।

१　२ र र २　　२ ५　१　र र र
आ । औ३होवाहाउवा३ । ई३४डा । धिसन्वमाद्येवृधे ।

१ २　　१　र र र २　　२ ५
आस्मा७१अवा२ । आ । औ३होवाहाउवा३ । ई३४डा ।

२ १　१ २　५र र　२ १　र र　　२
तुताइ । धा२या२३४औहोवा । विष्टुभस्तुभोम्वाशिघ्रुम

२　१ १ १ १
क्रा३न् । इट्इटा२३४५ ॥ १० ॥

अनयोर्व्याख्यानम्—१भा० ४९६ पृष्ठे द्रष्टव्यम् । ९,१०

३र　　२र ३ र　　४ ५　१　　१ २
† हाह । होइया । ३ । पावी । त्रन्ताइ । वितता३

१　१ २ ३　　५　　४ ५　१र　　२ १ २
ब । ह्मणस्पा२३३ताइ । प्राभूः । गात्रा । णी३परि

* "अन्तरिक्षे द्वे"—इति षा० ब्रा० ३,२,८ । तत्रोत्तरमिदम् ।

† "अरिष्टे द्वे"—इति षा० ब्रा० ३, ९, ८ । तत्र पूर्वमिदम् ।





CC-0. Shri Vipin Kumar Col. Deoband. In Public Domain.

